माध्यमिककक्षायाः पाठ्यक्रमः

# संस्कृतसाहित्यम् - २४८

## पुस्तकम् - १




**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**
A-२४-२५, Institutional Area, Sector – ६२
NOIDA – २०१ ३०९ (UP)

# माध्यमिककक्षा - संस्कृतसाहित्यम् (२४८)

## मन्त्रणामण्डलम्

**डॉ. चन्द्रभूषणशर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**समितेः अध्यक्षः**
**स्वामी आत्मप्रियानन्दः**
कुलपतिः. रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**समितेः उपाध्यक्षः**
**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

**डॉ. भास्करानन्द-पाण्डेयः**
उपप्राचार्यचरः, सर्वोदय-बाल-विद्यालयः, नवदेहली

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५ (प. वङ्गम्)

**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना, मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः, रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम् ,नोएडा- २०१ ३०९

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम् , नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १, २, ३, ११-१५)**
**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना
मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**(पाठः ४-७)**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

**(पाठः ८)**
**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः ९-१०)**
**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५
पश्चिमवङ्गम्

**(पाठः १६-१८)**
**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**(पाठः १९-२२)**
**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**

**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतसाहित्यस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

(डॉ. चन्द्रभूषणशर्मा)
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतसाहित्यस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

(श्री संजय-कुमार-सिन्हा )
निदेशकः (शैक्षिकविभागस्य)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

काव्यस्य काव्यशास्त्रस्य च परमं फलम् भवति रसः इति विदुषाम् अभिप्रायः अनुभवश्च समेषाम्। आनन्दो हि रसस्वरूपम्। सर्वेषाम् प्राणिनाम् सर्वं कार्यम् आनन्दे सुखे वा पर्यवस्यतु इतीच्छा सर्वप्रबला। तथा काव्यस्य सर्वे विषयाः रसे पर्यवस्यन्ति। काव्यानां नैके प्रकाराः सन्ति। काव्यप्रपञ्चः च अति महान्। बहूनि च काव्यानि सन्ति। तेषु विविधानां काव्यांशानां चयनं कृत्वा अत्र पाठ्यत्वेन योजना कृता। एवञ्च साहित्यस्य सामान्यस्वरूपं काव्यस्य स्वरूपादिकं भेदाः इति प्रारम्भिकं ज्ञानमत्र कार्यते। पारम्परिकगुरुकुलेषु यया पद्धत्या पाठः प्रदीयते तस्य अवलम्बः यथासम्बवमत्र प्रतिपादने कृतो विद्यते।

माध्यमिककक्षायां प्रदत्तः संस्कृतसाहित्यम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। छात्रः अस्य अध्ययनेन ज्ञानपीनः आनन्दाप्लुतः च भवेत्। अस्य पठनेन अध्येता अन्येषु काव्येषु प्रवेशाय योग्यो विधास्यते। एतत्सामग्री काव्यानां काव्यशास्त्रस्य च सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः द्वयोः पुस्तकयोः कल्पितोऽस्ति।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकुटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी

(राम-नारायण-मीणा)
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

# पुस्तकम्- १

## सुभाषितादिकम्

१. सुभाषितानि- १

२. सुभाषितानि- १

३. प्रहेलिकाः समस्याश्लोकाः च

## कथासाहित्यम्

४. वेतालपञ्चविंशतिः-१

५. वेतालपञ्चविंशतिः-२

६. शुकसप्ततिः

७. पञ्चतन्त्रम्

## काव्यशास्त्रपरिचयः

८. काव्यशास्त्रप्रवेशः-१

९. काव्यशास्त्रप्रवेशः-२

१०. काव्यशास्त्रप्रवेशः-३

११. काव्यप्रकाराः

# पुस्तकम्- २

## रामायणाध्ययनम्

(वाल्मीकिरामायणे किष्किन्धाकाण्डे तृतीयसर्गे १-३९ श्लोकाः)

१२. राम-हनूमत्-संगमः

१३. हनुमत्कृता रामलक्ष्मणप्रशंसा

१४. रामकृता हनुमत्प्रशंसा

१५. रामसुग्रीवयोः सख्यम्

## कर्णभारम्

१६. कर्णस्य परितापः

१७. अस्त्रस्य वृत्तान्तः

१८. कवचकुण्डलदानम्

## किरातार्जुनीयम्

(प्रथमसर्गे १-३० श्लोकाः)

१९. वनेचरस्य चरानुरूपं वचनम्

२०. कपटस्य दुर्योधनस्य धर्माचरणम्

२१. शङ्कितस्य दुर्योधनस्य नीतिकौशलम्

२२. युधिष्ठिरस्य प्रबोधः

# संस्कृतसाहित्यम्

# माध्यमिककक्षा

## प्रथमं पर्व

१

# सुभाषितानि-१

## प्रस्तावना -

बाणभट्टविरचिते हर्षचरिते सुभाषितस्य लक्षणम् एवम् उक्तं यत् -

**पुराणेष्वितिहासेषु तथा रामायणादिषु।**
**वचनं सारभूतं यत् तत् सुभाषितमुच्यते॥**

अर्थात् पुराणादिषु इतिहासेषु रामायणादिषु महाकाव्येषु च अखिलमनुष्यहिताय वारं वारम् उक्तं यत् तत्त्वं तदेव सारत्वेन यत्र कथ्यते तत् सुभाषितम् इत्युच्यते। संस्कृते तावत् सहस्राधिकानि सुभाषितानि वर्तन्ते। सुभाषितानुसारं जीवनं याप्यते चेत् सम्पूर्णं जीवनम् एव सुखकरं भवति। तेषु एव सुभाषितेषु चितानि दश सुभाषितानि वयम् अस्मिन् पाठे पठामः। पाठस्यास्य पठनेन विद्यायाः माहात्म्यं ज्ञास्यामो वयम्। एवं विद्यामाहात्म्ये ज्ञाते सति विद्यालाभे अस्माकं प्रीतिः उत्पत्स्यते। एतेषां सुभाषितानां पठनेन जीवनस्य यथार्थं पन्थानं चेतुं शक्नुमः वयम्। सुभाषितोक्ते पथि चलनेन अस्माकम् अभीष्टलाभः अवश्यम् एव स्यात्। पाठस्यास्य पठनेन अस्माकं महान् आनन्दः भवेत्।



## उद्देश्यानि -

इमं पाठं पठित्वा भवान् -

- विद्यायाः माहात्म्यं ज्ञातुं शक्नुयात्।
- धर्माचरणं केन प्रकारेण कर्तव्यम् - इत्यस्मिन् विषये ज्ञानं प्राप्नुयात्।
- वाग्भूषणस्य माहात्म्यं ज्ञातुं शक्नुयात्।
- साहित्यादिशास्त्रविहीनस्य कीदृशी दशा भवति - अस्मिन् विषये जानीयात।
- श्लोके स्थितानां पदानाम् अन्वयः केन प्रकारेण कर्तव्यः इति जानीयात्।
- श्लोकानां व्याख्या केन प्रकारेण कर्तव्या इत्यस्मिन् विषये ज्ञास्यति।

## १.१) मूलपाठः -

**दानं भोगो नाशस्त्रिस्रो गतयो वित्तस्य।**
**यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥१॥**



विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूजिता न तु धनं विद्याविहीनः पशुः॥२॥

अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत्।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत्॥३॥

विद्या ददाति विनयं विनयाद् याति पात्रताम्।
पात्रत्वाद् धनमाप्नोति धनाद् धर्मं ततः सुखम्॥४॥

श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न तु कङ्कणेन।
भाति कायः करुणापराणां
परोपकारैः न तु चन्दनेन॥५॥

वचो हि सत्यं परमं विभूषणं
लज्जाङ्गनायाः कृशता कटौ च।
द्विजस्य विद्यैव पुनस्तथा क्षमा
शीलं हि सर्वस्य नरस्य भूषणम्॥६॥

केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम्॥७॥

नरस्याभरणं रूपं रूपस्याभरणं गुणः।
गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा॥८॥

साहित्यसङ्गीतकलाविहीनः
साक्षात्पशुः पुच्छविषाणहीनः॥
तृणं न खादन्नपि जीवमान-
स्तद्भागधेयं परमं पशूनाम्॥९॥



**यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि।**
**निरस्तपादपे देशे एरण्डोऽपि द्रुमायते॥१०॥**

## १.२) अधुना वयं मूलपाठं अवगच्छाम

**दानं भोगो नाशस्त्रिस्रो गतयो वित्तस्य।**
**यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥१॥**

**अन्वयः** - वित्तस्य दानं भोगः नाशः तिस्रः गतयः भवन्ति। यो न ददाति, न भुङ्क्ते तस्य (वित्तस्य) तृतीया गतिः भवति।

**अन्वयार्थः** - वित्तस्य धनस्य दानं प्रदानं भोगः उपभोगः नाशः विनाशः तिस्रः त्रिविधाः गतयः भवन्ति वर्तन्ते। यो जनः न ददाति दानं न करोति, न भुङ्क्ते भोगं न करोति, तस्य जनस्य (वित्तस्य) तृतीया गतिः नाशः भवति जायते।

**सरलार्थः** - धनस्य दानं भोगः किञ्च नाशः - इत्येताः त्रिविधाः गतयः वर्तन्ते। कश्चित् जनः यदि धनस्य दानमपि न करोति किञ्च भोगमपि न करोति तर्हि तस्य धनस्य विनाशः अवश्यं भवति।

**तात्पर्यार्थः** - धनं हि सर्वैः जनैः एव इष्टम्। अस्मिन् जगति धनं विना न कस्यचित् कार्यस्य सिद्धिः वर्तते। परन्तु तस्य धनस्य दानं भोगः किञ्च नाशः इत्येताः त्रिविधाः गतयः वर्तन्ते। अर्थात् धनस्य दानं कर्तुं शक्यते, अथवा तस्य भोगः कर्तुं शक्यः, अन्यथा धनस्य नाशः भवेत्। यस्य समीपे तु अधिकं धनं वर्तते तादृशः जनः यदि दरिद्रेभ्यः अथवा अन्यत्सत्पात्राय तद्धनं न ददाति, किञ्च स्वयम् अपि यदि तस्य भोगं न करोति, केवलं सञ्चयम् एव करोति तर्हि किञ्चिद्दिनाभ्यन्तरे तस्य विनाशः अवश्यं भवति। धनं तु अवश्यम् एव सर्वैः उपार्जनीयम्। परन्तु उपार्जितं धनं यदि अस्माकम् अधिकं भवति, तर्हि अवश्यम् एव दरिद्रेभ्यः अथवा कस्मैचित् शुभकार्याय तस्य दानं करणीयम्। यदि कश्चित् दानं कर्तुं नेच्छति, तर्हि तेन तस्य धनस्य भोगः करणीयः। यः तु दानम् अपि न करोति, भोगमपि न करोति, तस्य उपार्जितस्य धनस्य तु विनाश एव भवति।

**व्याकरणविमर्शः-**

१) भुङ्क्ते - भुज्-धातोः लटि प्रथमपुरुषैकवचने भुङ्क्ते इति रूपम्।

**सन्धिकार्यम् -**

१) नाशस्तिस्रः = नाशः + तिस्रः।

२) तिस्रो गतयः = तिस्रः + गतयः।

३) गतिर्भवति = गतिः + भवति।

**प्रयोगपरिवर्तनम्** - वित्तस्य दानेन भोगेन नाशेन तिसृभिः गतिभिः भूयते। येन न दीयते, न भुज्यते तस्य (वित्तस्य) तृतीयया गत्या भूयते।

**छन्दःपरिचयः** - अस्मिन् श्लोके आर्याछन्दः वर्तते।



**विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं**
**विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।**
**विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं**
**विद्या राजसु पूजिता न तु धनं विद्याविहीनः पशुः॥२॥**

**अन्वयः** - विद्या नाम नरस्य अधिकं रूपम्, प्रच्छन्नगुप्तं धनम्, विद्या भोगकरी, यशःसुखकरी, विद्या गुरूणां गुरुः, विद्या विदेशगमने बन्धुजनः, विद्या परं दैवतम्, विद्या राजसु पूजिता, धनं न तु (पूजितम्) (अस्ति)। विद्याविहीनः पशुः।

**अन्वयार्थः** - विद्या नाम नरस्य जनस्य अधिकं श्रेष्ठं रूपं सौन्दर्यम्, प्रच्छन्नगुप्तम् अन्तःस्थितं धनं वित्तम्, विद्या भोगकरी भोगस्य उत्सस्वरूपा, यशःसुखकरी यशसः सुखस्य च साधनभूता, विद्या गुरूणाम् उपदेशदातॄणां गुरुः उपदेष्टा , विद्या विदेशगमने विदेशगमनकाले बन्धुजनः मित्रस्वरूपा, विद्या परं दैवतम् श्रेष्ठा देवता, विद्या राजसु राजसभायां पूजिता स्तुता, धनं वित्तं न तु (पूजितम्)। विद्याविहीनः विद्यया हीनः जनः पशुः पशुस्वरूपः।

**सरलार्थः** - विद्या हि जनस्य श्रेष्ठं सौन्दर्यं भवति, इयं जनस्य सञ्चितं धनं, भोगस्य उत्सस्वरूपा इयं यशसः सुखस्य च साधने सहायकभूता। विद्या महद्भ्यः विद्वद्भ्यः अपि उपदेशं प्रयच्छति। विदेशगनसमये विद्या एव जनस्य साहाय्यं करोति। विद्यायाः अपेक्षया श्रेष्ठदेवता न विद्यते। राजसभासदृशश्रेष्ठस्थाने अपि धनं न पूज्यते, परन्तु विद्यायाः पूजा तु सर्वत्र अवश्यम् एव भवति। तस्मात् यस्य समीपे विद्या नास्ति, स तु पशुस्वरूप एव।

**तात्पर्यार्थः** - विद्या तु सर्वशास्त्रैः एव स्तूयते। प्रस्तुतेऽस्मिन् श्लोके अपि विद्यायाः एव स्तुतिः विधीयते। विद्या जनस्य श्रेष्ठं सौन्दर्यं भवति अर्थात् विद्यावान् पुरुषः प्रकृत्या एव सुन्दरः दृश्यते, सौन्दर्याय तस्य वेशभूषादिना प्रयोजनं न वर्तते। विद्या पुरुषस्य अन्तःस्थितं गुप्तं धनम् अर्थात् विद्यावान् पुरुषः दृश्यते चेत् तस्य अन्तः यत् विद्यारूपं धनम् अस्ति तत् बहिः सर्वे द्रष्टुं न शक्नुवन्ति, परन्तु तस्य माहात्म्यं वर्तते, कार्यकाले तत् एव धनं जनस्य सहायकं भवति। विद्वान् पुरुषः यस्य भोगं कर्तुम् इच्छति, विद्या तस्य भोगस्य साधने सहायभूता भवति। विद्या वर्तते चेत् पुरुषस्य यशः अपि वर्धते। स जनः सर्वत्र पूजितः भवति। विद्यया विनयः लभ्यते, विनयात् योग्यता लभ्यते, योग्यतया च धनलाभः भवति, किञ्च धनेन सुखं साध्यते। एवंरूपेण विद्या एव सर्वविधसुखानां साधनभूता वर्तते। महान्तः विद्वांसः ये वर्तन्ते, तेभ्यः अपि इयं विद्या उपदेशं प्रयच्छति। अर्थात् विद्या एव सर्वोत्तमा उपदेशदात्री इति ज्ञायते। कश्चित् जनः यदा एकाकी विदेशं गच्छति, तदा इयं विद्या एव तस्य बन्धुस्वरूपा भवति, किञ्च तस्य विदेशगमनहेतुः अपि प्रायः इयं विद्या एव भवति। विद्याबलात् स विदेशे अपि पूज्यस्थानं लभते। विद्या तु श्रेष्ठा देवता। अतः अस्माभिः सर्वैः एव विद्यादेव्याः पूजा करणीया, तेन अस्माकम् अभीष्टलाभः अवश्यं भविष्यति। राजसभासदृशमहत्स्थानेषु धनस्य स्तुतिः न क्रियते, परन्तु विद्यायाः विद्यावतः च स्तुतिः तु सर्वत्र एव क्रियते। अतः धनलाभापेक्षया विद्यालाभाय एव अस्माभिः प्रयत्नः करणीयः, विद्या लभ्यते चेत्

ततः एव धनलाभः अवश्यं भविष्यति। यः तु विद्याविहीनः मूर्खः वर्तते, स सर्वत्र एव निन्द्यते। विद्याभावात् पशुत्वम् एव तस्मिन् आगचछति। अतः विद्यालाभः अत्यावश्यकः।

**व्याकरणविमर्शः-**

१) प्रच्छन्नगुप्तम् - प्रच्छन्नं च तत् गुप्तं प्रच्छन्नगुप्तम् इति कर्मधारयसमासः।

२) यशःसुखकरी - यशः च सुखं च यशःसुखे इति द्वन्द्वसमासः, यशःसुखे करोति इति यशःसुखकरी।

३) विदेशगमने - विदेशस्य गमनं विदेशगमनम् इति षष्ठीतत्पुरुषसमासः, तस्मिन् विदेशगमने।

४) विद्याविहीनः - विद्यया विहीनः विद्याविहीनः इति तृतीयातत्पुरुषसमासः।

**सन्धिकार्यम् -**

१) बन्धुजनो विदेशगमने = बन्धुजनः + विदेशगमने।

**प्रयोगपरिवर्तनम् -** विद्यया नाम नरस्य अधिकेन रूपेण, प्रच्छन्नगुप्तेन धनेन, विद्यया भोगकर्या, यशःसुखकर्या, विद्यया गुरूणां गुरुणा, विद्यया विदेशगमने बन्धुजनेन, विद्यया परेण दैवतेन, विद्यया राजसु पूजितया, धनेन न तु (पूजितेन) (भूयते)। विद्याविहीनेन पशुना (भूयते)।

**छन्दःपरिचयः -** अस्मिन् श्लोके शार्दूलविक्रीडितम् इति छन्दः वर्तते।

**अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत्।**
**गृहीत इव केशेषु मृत्युना धर्ममाचरेत्॥३॥**

**अन्वयः -** प्राज्ञः अजरामरवत् विद्याम् अर्थं च चिन्तयेत्। मृत्युना केशेषु गृहीत इव धर्मम् आचरेत्।

**अन्वयार्थः -** प्राज्ञः धीमान् अजरामरवत् जरामरणरहितवत् विद्याम् शास्त्रज्ञानकलाज्ञानादिकम् अर्थं च द्रव्यं च चिन्तयेत् उपार्जयेत्। मृत्युना अन्तकेन केशेषु चिकुरेषु गृहीत इव धृत इव धर्मं पुण्यम् आचरेत् अनुतिष्ठेत्।

**सरलार्थः -** ज्ञानी पुरुषः आत्मानम् अजरम् अमरम् इति मत्वा विद्यायाः अर्थस्य च उपार्जनं करोति, परन्तु कालकवलितम् इव आत्मानं मत्वा धर्मस्य अनुष्ठानं करोति।

**तात्पर्यार्थः -** यः प्रकृतः ज्ञानी वर्तते, तेन तु अहं जरामरणरहितः अस्मि इति विचिन्त्य शास्त्रज्ञानं नानाकलादिज्ञानं च उपार्जनीयम्। अर्थात् एतेषां ज्ञानानाम् उपार्जने न काचित् शीघ्रता वर्तते। बाल्यकालात् आरभ्य मरणपर्यन्तं सम्पूर्णं जीवनं व्याप्य शनैः शनैः विद्या प्राप्तुं शक्या धनम् लब्धुं शक्यं च। परन्तु धर्मार्जनविषये तु इयं शैली भिन्ना एव। कालेन कवलितम् आत्मानं मत्वा सर्वदा धर्मार्जनं करणीयम्। अर्थात् बाल्यकालात् आरभ्य एव सर्वदा धर्मार्जनविषये प्रयत्नः कर्तव्यः। साधारणजनाः तु वार्धक्ये धर्मार्जनं करिष्यामि इति विचिन्त्य यौवनकाले दुष्टम् आचरन्ति। परन्तु मृत्युः कदा भविष्यति इति न केनापि वक्तुं शक्यते। अतः आबाल्यात् एव सर्वदा धर्मार्जनविषये प्रयतनीयम्।



**व्याकरणविमर्शः -**

१) अजरामरवत् - न विद्यते जरा यस्य स अथावा न जीर्यते इति अजरः। न म्रियते इत अमरः। अजरश्चासौ अमरश्चेति अजरामरः इति कर्मधारयसमासः।

२) चिन्तयेत् - चिन्त-धातोः विधिलिङि प्रथमपुरुषैकवचने चिन्तयेत् इति रूपम्।

३) गृहीतः - ग्रह्-धातोः क्तप्रत्यये पुंसि गृहीतः इति रूपम्।

**सन्धिकार्यम् -**

१) प्राज्ञो विद्याम् = प्राज्ञः + विद्याम्।

२) गृहीत इव = गृहीतः + इव।

**प्रयोगपरिवर्तनम् -** प्राज्ञेन अजरामरवत् विद्या अर्थः च चिन्त्यताम्। मृत्युना केशेषु गृहीतेन इव धर्मः आचर्यताम्।

**छन्दःपरिचयः** - अस्मिन् श्लोके अनुष्टुप्-छन्दः वर्तते।

**विद्या ददाति विनयं विनयाद् याति पात्रताम्।**
**पात्रत्वाद् धनमाप्नोति धनाद् धर्मं ततः सुखम्॥४॥**

**अन्वयः** - विद्या विनयं ददाति, विनयात् पात्रतां याति, पात्रत्वात् धनम् आप्नोति, धनात् धर्मं (आप्नोति), ततः सुखम् (आप्नोति)।

**अन्वयार्थः** - विद्या विनयं नम्रतां ददाति प्रयच्छति, विनयात् नम्रत्वात् पात्रतां सत्पात्रत्वं याति प्राप्नोति, पात्रत्वात् सत्पात्रत्वात् दानादिसमर्पणयोग्यत्वात् धनम् सुवर्णरजताद्यात्मकम् अर्थम् आप्नोति प्राप्नोति, धनात् नीतिसम्पादितात् धनात् यागदानादिद्वारा धर्मं पुण्यं (आप्नोति), ततः तस्मात् पुण्यात् सुखम् आनन्दः (आप्नोति)।

**सरलार्थः** - विद्यालाभे सति विनयः उत्पद्यते, यः तु विनयी भवति स तु सत्पात्रत्वं लभते। सत्पात्रीभूतः जनः तु धनं प्राप्नोति, धनस्य समुचितेन विनियोगेन धर्मं लभते। धर्माद् हि सुखलाभः भवति।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके विद्यायाः माहात्म्यं कीर्त्यते। कश्चित् जनः यदा विद्यालाभं करोति, तदा तद्विद्याबलात् स स्वयम् एव विनम्रः भवति। स विद्वान् सर्वेषां सम्मानं करोति, ज्ञाने सत्यपि अहङ्कारं न प्रदर्शयति। यः च एवंभूतः विनम्रः वर्तते, स शीघ्रम् एव सत्पात्रत्वं लभते, अर्थात् संसारेऽस्मिन् प्रतिष्ठां प्राप्नोति। सर्वे तदुपरि विश्वासं कुर्वन्ति। स विनयी पुरुषः सर्वत्र पूज्यः भवति। यः तु संसारे प्रतिष्ठां प्राप्नोति स बहुधनम् अर्जयति, विश्वासकार्ये नियुक्तः स कार्यसमापनात् प्रसादरूपेण महद्धनं लभते। तेन उपार्जितेन धनेन च स यागदानादिकं कर्म कृत्वा पुण्यम् अर्जयति। धनेन विना तु यागादिरूपधर्मसाधनं क्लिष्टम् एव भवति। अतः तदर्थम् अवश्यं धनम् उपार्जनीयम्। यागदानादिकर्मणः प्राप्तेन पुण्येन स स्त्री-पुत्र-समृद्धि-प्रतिष्ठा-आरोग्यादिभिः युक्तः सर्वदा आनन्देन तिष्ठति। तस्मात् विद्या एव



सर्वविधसुखस्य साधनं वर्तते इति वक्तुं शक्यते। विद्वान् पुरुषः तु दुःखमये संसारेऽस्मिन् अपि महत् सुखम् अनुभवति।

**अपरपक्षतः व्याख्या** - सुखस्य कारणं धर्मः एव इति सर्वेषाम् आस्तिकानां सिद्धान्तः। धर्मः पुण्यमेव। पुण्यार्जनं यागेन दानेन तपःआचरणेन इति एवम् अनुष्ठानैः भवति। धनलाभाय वृत्तिः वाणिज्यं वा उपायौ। यः योग्यः स एव वृत्तिं वाणिज्यं वा कर्तुमर्हति। सा च योग्यता विनयाद् जायते। सर्वत्र विनयी जनः वृत्तौ नियुज्यते वाणिज्ये च सफलो भवति। विनयश्च विद्यालाभेन भवति। एवमत्र सुखस्य लाभाय परम्परासम्बन्धः वर्तते। व्यवहारे जनाः सुखमिच्छन्ति, दुःखं च परिहर्तुमिच्छन्ति। परन्तु सुखस्य कारणं यो धर्मः तस्य लाभे श्रद्धालवः न भवन्ति। तत्र कारणं हि अज्ञानम्। धर्मसुखयोः कार्यकारणभावं न जानन्ति।

**व्याकरणविमर्शः -**

१) ददाति - दाधातोः लटि प्रथमपुरुषैकवचने ददाति इति रूपम्।

२) आप्नोति - आप्-धातोः लटि प्रथमपुरुषैकवचने आप्नोति इति रूपम्।

**सन्धिकार्यम् -**

१) पात्रत्वात् धनम् = पात्रत्वात् + धनम्।

२) धनाद्धर्मम् = धनात् + धर्मम्।

**प्रयोगपरिवर्तनम्** - विद्यया विनयः दीयते, विनयात् पात्रता यायते, पात्रत्वात् धनः आप्यते, धनात् धर्मः (क्रियते), ततः सुखम् (आप्यते)।

**छन्दःपरिचयः** - श्लोकोऽयम् अनुष्टुप्-छन्दोबद्धः।

**श्रोत्रं श्रुतेनैव न कुण्डलेन**
**दानेन पाणिर्न तु कङ्कणेन।**
**विभाति कायः करुणापराणां**
**परोपकारैर्न तु चन्दनेन॥५॥**

**अन्वयः** - श्रोत्रं श्रुतेन एव विभाति, कुण्डलेन न (विभाति)। पाणिः दानेन विभाति, कङ्कणेन तु न (विभाति)। करुणापराणां कायः परोपकारैः विभाति, चन्दनेन तु न (विभाति)।

**अन्वयार्थः** - श्रोत्रं कर्णः श्रुतेन वेदशास्त्रादिश्रवणेन एव विभाति शोभते, कुण्डलेन कर्णवेष्टनेन न (विभाति शोभते)। पाणिः हस्तः दानेन दानकर्मणा विभाति शोभते, कङ्कणेन करभूषणेन तु न (विभाति शोभते)। करुणापराणां दयापरायणानां कायः शरीरं परोपकारैः विभाति शोभते, चन्दनेन गन्धसारेण तु न (विभाति शोभते)।

**सरलार्थः** - विदुषां कर्णः वेदशास्त्रादिश्रवणेन विभूषितः भवति, न तु कुण्डलधारणेन। तेषां हस्तः तु दानादिसत्कर्मणा एव विभूषितः भवति, न तु कङ्कणादिभूषणधारणेन। ये तु दयापरायणाः जनाः वर्तन्ते, तेषां शरीरं परोपकारैः एव विभूषितं भवति, न तु चन्दनलेपनेन।



**तात्पर्यार्थः** - अस्मिन् श्लोके महात्मसु विद्वत्सु स्थितानां गुणानां माहात्म्यस्य वर्णना क्रियते। साधारणजनाः तु कर्णस्य सौन्दर्यवर्धनाय कर्णे कुण्डलधारणं कुर्वन्ति, परन्तु यः सर्वदा वेदशास्त्रादीनां श्रवणं कुर्वन्ति तस्य कर्णः तु तेन एव विभूषितः भवति। तत्र कुण्डलधारणेन प्रयोजनं न वर्तते। एवं च साधारणाः हस्तसौन्दर्यवर्धनाय हस्ते कङ्कणं धरन्ति, परन्तु यः सर्वदा हस्तेन दानादिसत्कर्माणि साधयति, तस्य हस्तः तु तेन एव विभूषितः भवति। तस्य कङ्कणधारणेन प्रयोजनं न भवति। इत्थम् एव दरिद्रेषु दयापरायणाः कृपालवः परोपकारनिरताः जनाः शरीरशोभायै आत्मानम् चन्दनादिना न भूषयन्ति, तेषां देहः तु परोपकारैः एव शोभते। अतः शरीरशोभायै भूषादिकम् अधृत्वा अस्माभिः सर्वदा वेदशास्त्रादि श्रोतव्यं, दानादिसत्कर्म कर्तव्यं, किञ्च सर्वदा परोपकाराय प्रयत्नः करणीयः।

**व्याकरणविमर्शः-**

१) करुणापराणाम् - करुणा परा येषां ते करुणापराः इति बहुव्रीहिसमासः, तेषां करुणापराणाम्।

२) परोपकारैः - परेषाम् उपकाराः परोपकाराः इति षष्ठीतत्पुरुषसमासः, तैः परोपकारैः।

**सन्धिकार्यम्** -

१) श्रुतेनैव = श्रुतेन + एव।

**प्रयोगपरिवर्तनम् -** श्रोत्रेण श्रुतेन एव विभाति, कुण्डलेन न (विभाति)। पाणिना दानेन विभाति, कङ्कणेन तु न (विभाति)। करुणापराणां कायेन परोपकारैः विभाति, चन्दनेन तु न (विभाति)।

छन्दःपरिचयः - श्लोकेऽस्मिन् उपजातिच्छन्दः वर्तते।

**वचो हि सत्यं परमं विभूषणं**
**लज्जाङ्गनायाः कृशता कटौ च।**
**द्विजस्य विद्यैव पुनस्तथा क्षमा**
**शीलं हि सर्वस्य नरस्य भूषणम्॥६॥**

**अन्वयः** - सत्यं वचः हि परमं विभूषणम्। अङ्गनायाः लज्जा कटौ च कृशता परमं विभूषणम्। द्विजस्य विद्या एव पुनः क्षमा तथा परमं विभूषणम्। सर्वस्य नरस्य शीलं हि भूषणम्।

**अन्वयार्थः** - सत्यम् ऋतं वचः वचनं हि परमं श्रेष्ठं विभूषणम् आभरणम्। अङ्गनायाः कान्तायाः लज्जा व्रीडा कटौ च कृशता कटिप्रदेशस्य क्षीणता परमं श्रेष्ठं विभूषणम् आभरणम्। द्विजस्य ब्राह्मणस्य विद्या ज्ञानम् एव पुनः क्षमा क्षान्तिः तथा परमं श्रेष्ठं विभूषणम् आभरणम्। सर्वस्य अखिलस्य नरस्य मनुष्यस्य शीलं सत्स्वभावः हि भूषणम् अलङ्कारः।

**सरलार्थः** - सत्यवचनम् एव मनुष्यस्य श्रेष्ठं भूषणम्, लज्जा किञ्च कटिप्रदेशस्य क्षीणता एव नार्यः श्रेष्ठः अलङ्कारः, विद्या क्षमा च ब्राह्मणस्य श्रेष्ठं भूषणम्, अपि च सच्चरित्रम् एव सर्वमनुष्यस्य सर्वोत्तमं भूषणं भवति।



**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके सत्यवचनादीनां केषाञ्चित् सद्गुणानां माहात्म्यं वर्ण्यते। सत्यवचनं हि मनुष्यस्य सर्वोत्तमं भूषणं भवति, अर्थात् यः सर्वदा सत्यं भाषते, स तु सर्वत्रैव स्वयमेव शोभते प्रशस्यते च। स्वशोभावर्धनाय तेन अन्येन भूषणेन प्रयोजनं न भवति। विद्वत्सभायां सत्यं भाषमाणस्य बहुधा प्रशंसा विधीयते। एवम् एव लज्जा किञ्च कटिप्रदेशस्य कृशता हि नार्यः श्रेष्ठं भूषणम्। लज्जाशीला नारी तु सर्वत्र सर्वदैव प्रशंसार्हा भवति। परन्तु साम्प्रतिकसमये तु महिलाः प्रायः लज्जाहीनाः एव दृश्यन्ते। लज्जारूपश्रेष्ठम् अलङ्कारं त्यक्त्वा ताः शरीरसौन्दर्यवर्धनाय केयूरहारादीन् नाना अलङ्कारान् धरन्ति। नार्यः कटिप्रदेशः कृशः भवति चेत् सा बहुसुन्दरी दृश्यते। तेन कृशेन कटिप्रदेशेन सा बहुत्र शोभते। एवम् एव विद्या क्षमा च ब्राह्मणस्य श्रेष्ठं भूषणं भवति। यस्य ब्राह्मणस्य समीपे विद्या क्षमा च वर्तते स तु गुणिनां गोष्ठ्यां प्रशंसार्हः भवति। समर्थानां क्षमा तु बहुधा प्रशस्यते। इत्थं च सच्चरित्रम् एव सर्वेषां मनुष्याणां सर्वोत्तमं भूषणं भवति। सच्चरित्रवान् पुरुषः संसारे अनायासेन प्रतिष्ठां लभते। अतः अस्माभिः अस्माकं चरित्रेषु सत्त्वम् उत्पादनीयम्।

**सन्धिकार्यम्** -

१) वचो हि = वचः + हि।

२) लज्जाङ्गनायाः = लज्जा + अङ्गनायाः।

३) विद्यैव = विद्या + एव।

४) पुनस्तथा = पुनः + तथा।

**प्रयोगपरिवर्तनम्** - सत्येन वचसा हि परमेन विभूषणेन (भूयते)। अङ्गनायाः लज्जया कटौ च कृशतया परमेन विभूषणेन (भूयते)। द्विजस्य विद्यया एव पुनः क्षमया तथा परमेन विभूषणेन (भूयते)। सर्वस्य नरस्य शीलेन हि भूषणेन (भूयते)।

**छन्दःपरिचयः** - प्रस्तुतेऽस्मिन् श्लोके वंशस्थविलच्छन्दः विद्यते।

**केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला**
**न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः।**
**वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते**
**क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम्॥७॥**

**अन्वयः** - केयूरा न, चन्द्रोज्ज्वलाः हाराः न, स्नानं न, विलेपनं न, कुसुमं न, अलङ्कृताः मूर्धजाः न पुरुषं विभूषयन्ति। एका वाणी या संस्कृता धार्यते, (सा) पुरुषं समलङ्करोति। भूषणानि खलु क्षीयन्ते। वाग्भूषणं सततं भूषणम्।

**अन्वयार्थः** - केयूराः अङ्गदानि न, चन्द्रोज्ज्वलाः इन्दुसदृशकान्तिविशिष्टाः हाराः मुक्तावल्यः न, स्नानं शुचिः न, विलेपनं गात्रे चन्दनादिलेपनं न कुसुमं पुष्पं न, अलङ्कृताः विभूषिताः मूर्धजाः केशाः न पुरुषं जनं विभूषयन्ति अलङ्कुर्वन्ति। एका अद्वितीया वाणी वाक् या संस्कृता शुद्धीकृता धार्यते, (सा) पुरुषं



जनं समलङ्करोति भूषयति। भूषणानि आभरणानि खलु क्षीयन्ते क्षयं प्राप्नुवन्ति। वाग्भूषणं वाणीरूपालङ्कारः सततं सर्वदा भूषणम् आभरणम्।

**सरलार्थः** - भुजस्य अलङ्कारधारणेन, सौन्दर्यवर्धनाय कान्तिविशिष्टहारादीनाम् अलङ्काराणां धारणेन, गात्रे चन्दनादिलेपनेन पुष्पधारणेन केशानाम् अलङ्करणेन वा न कोऽपि जनः भूषितः भवति। सुसंस्कृता वाणी एव सर्वान् यथार्थां भूषयति। वाग्रूपभूषणम् एव क्षयरहितं भूषणम्।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके सुसंस्कृतवाण्याः माहात्म्यं कीर्त्यते। साधारणजनाः शरीरसौन्दर्यवर्धनाय नानाविधान् अलङ्कारान् धरन्ति, यथा भुजेषु केयूरं धरन्ति, कण्ठे चन्द्रसदृशकान्तिविशिष्टान् हारान् धरन्ति। अपि च जलेन स्नानं कुर्वन्ति, गात्रपरिमलाय चन्दनादिसुगन्धिद्रव्याणां लेपनं कुर्वन्ति, नानाविधालङ्कारेण केशान् सज्जीकुर्वन्ति। परन्तु एतत् सर्वं प्रसाधनादिकं तु किञ्चत् क्षणं व्याप्य एव तिष्ठति, ततः परम् एतेषां केयूरादीनां भूषणानां क्षयः भवति। एतेषां नाशे सति शरीरं पुनः पूर्ववत् अलङ्कारहीनं सत् असुन्दरं भवति। परन्तु यस्य समीपे सुसंस्कृता वाणी वर्तते, अर्थात् यः सर्वदा आनन्ददायकं मधुरं वचः भाषते, तस्य शरीरशोभावर्धनाय अन्यैः अलङ्कारैः प्रयोजनं न भवति। सा सुसंस्कृता वाणी एव तं पुरुषं विभूषयति। अपि च अयं वाग्रूपः अलङ्कारः तु नित्यः वर्तते, अर्थात् अस्य क्षयः न कदापि भवति। यस्य पुरुषस्य समीपे अयम् अलङ्कारः वर्तते, स तु अनेन अलङ्कृतः सन् सर्वत्र प्रशस्तः भवति। हनुमान् वाग्भूषणेन भूषितः सन् भगवतः श्रीरामात् बहुप्रशंसां प्राप्तवान्। तस्मात् अस्माभिः वाक् सुसंस्कृता मधुरा च करणीया।

**व्याकरणविमर्शः** -

१) विभूषयन्ति - विपूर्वकात् भूष्-धातोः लटि प्रथमपुरुषबहुवचने विभूषयन्ति इति रूपम्।

२) चन्द्रोज्ज्वलाः - चन्द्र इव उज्ज्वलाः चन्द्रोज्ज्वलाः इति उपमानपदपूर्वककर्मधारयसमासः।

३) अलङ्कृताः - अलम्-इति गतिपूर्वकात् कृधातोः क्तप्रत्यये अलङ्कृताः इति रूपम्।

४) मूर्धजाः - मूर्ध्नि जाताः इति मूर्धजाः, केशाः इत्यर्थः।

**सन्धिकार्यम्** -

१) केयूरा न = केयूराः + न।

२) हारा न = हाराः + न।

३) नालङ्कृताः = न + अलङ्कृता।

**प्रयोगपरिवर्तनम्** - केयूरैः न, चन्द्रोज्ज्वलैः हारैः न, स्नानेन न, विलेपनेन न, कुसुमेन न, अलङ्कृतैः मूर्धजैः न पुरुषः विभूष्यते। एकया वाण्या पुरुषः समलङ्क्रियते यां संस्कृतां धारयन्ति। भूषणानि खलु क्षीयन्ति। वाग्भूषणेन सततं भूषणेन (भूयते)।

**छन्दःपरिचयः** - अस्मिन् श्लोके शार्दूलविक्रीडितम् इति छन्दः वर्तते।



**नरस्याभरणं रूपं रूपस्याभरणं गुणः।**
**गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा॥८॥**

**अन्वयः-** नरस्य रूपम् आभरणम् (अस्ति), रूपस्य गुणः आभरणम् (अस्ति), गुणस्य ज्ञानम् आभरणम् (अस्ति), (एवं) ज्ञानस्य आभरणं (भवति) क्षमा।

**अन्वयार्थः-** नरस्य जनस्य रूपं सौन्दर्यम् आभरणम् अलङ्कारः (भवति), रूपस्य सौन्दर्यस्य गुणः सद्गुणः आभरणम् अलङ्कारः (भवति), (किञ्च) गुणस्य ज्ञानं बुद्धिः आभरणम् अलङ्कारः (भवति), (तद्वत्) ज्ञानस्य बुद्धेः आभरणं (भवति) क्षमा क्षान्तिः।

**सरलार्थः-** जनानां सौन्दर्यम् एव तेषाम् अलङ्कारो भवति। किञ्च तस्य सौन्दर्यस्य अलङ्कारः तेषां गुणाः भवन्ति। एवं तेषां गुणानां अलङ्कारो भवति ज्ञानम्। तथैव तस्य ज्ञानस्य अलङ्कारो भवति क्षमा।

**तात्पर्यार्थः-** अस्मिन् संसारे सौदर्यम् एव जनानाम् अलङ्कारः भवति। यः प्रकृत्या सुन्दरः वर्तते, शरीरशोभावर्धनाय तस्य अन्यैः अलङ्कारैः प्रयोजनं न भवति। तस्मात् रूपेण जनानां माहात्म्यं वर्धते। परन्तु पुष्पं गन्धहीनं भवति चेत् तत् न कस्यापि आनन्दं जनयति। तद्वत् निर्गुणस्य जनस्य सौन्दर्यं न शोभते। अतः गुणाः हि सौन्दर्यस्य अलङ्काराः। सुन्दरः पुरुषः गुणी भवति चेत् तस्य शोभा वर्धते। एवं गुणवन्तं नरं ततोऽपि उन्नयति तस्य ज्ञानम्। ज्ञानं विहाय अन्ये बहवो गुणाः तिष्ठन्ति चेदपि स पुरुषः प्रशंसार्हः न भवति। तस्मात् ज्ञानं हि गुणानाम् आभरणस्वरूपं भवति। परन्तु अस्मिन् संसारे ज्ञानिनाम् औद्धत्यं दृश्यन्ते। ज्ञाने सत्यपि स जनः विनीतः न भवति चेत् प्रशंसार्हः न भवति। तस्मात् ज्ञानस्य आभरणं हि क्षमा। क्षमा तिष्ठति चेदेव ज्ञानं शोभते, अन्यथा तत् ज्ञानम् अपि निन्द्यं भवति।

**सन्धिकार्यम्** -

१) नरस्याभरणम् = नरस्य + आभरणम्।

२) रूपस्याभरणम् = रूपस्य + आभरणम्।

३) गुणस्याभरणम् = गुणस्य + आभरणम्।

४) ज्ञानस्याभरणम् = ज्ञानस्य + आभरणम्।

**प्रयोगपरिवर्तनम्** - नरस्य रूपेण आभरणेन (भूयते), रूपस्य गुणेन आभरणेन (भूयते), गुणस्य ज्ञानेन आभरणेन (भूयते), (एवं) ज्ञानस्य आभरणेन (भूयते) क्षमया।

छन्दःपरिचयः - अस्मिन् श्लोके अनुष्टुप्-छन्दः वर्तते।

**साहित्यसङ्गीतकलाविहीनः**
**साक्षात्पशुः पुच्छविषाणहीनः॥**
**तृणं न खादन्नपि जीवमान-**
**स्तद्भागधेयं परमं पशूनाम्॥९॥**

**अन्वयः** - साहित्यसङ्गीतकलाविहीनः पुच्छविषाणहीनः साक्षात् पशुः (एव)। तृणं न खादन् अपि जीवमानः (अस्ति) इति यत् तत् पशूनां परमं भागधेयम्।





**अन्वयार्थः** - साहित्यसङ्गीतकलाविहीनः साहित्यशास्त्रसङ्गीतशास्त्रकलाशास्त्रादीनां ज्ञानं नास्ति तादृशः पुरुषः पुच्छविषाणहीनः लाङ्गूलशृङ्गहीनः साक्षात् पशुः जन्तुः (एव)। तृणं यवसं न खादन् भक्षयन् अपि जीवमानः जीवितः (अस्ति) इति यत् तत् पशूनां जन्तूवां परमं श्रेष्ठं भागधेयं भाग्यम्।

**सरलार्थः** - यस्य पुरुषस्य साहित्यशास्त्रविषयकं सङ्गीतविषयकं कलाविषयकं च किञ्चिदपि ज्ञानं न वर्तते, स तु पुच्छशृङ्गविहीनः साक्षात् पशुतुल्यः एव भवति। स पशुतुल्यः जनः मनुष्यरूपधारणात् पशुवत् तृणं न खादति, तस्मात् पशवः भोजनाय अधिकं तृणं प्राप्नुवन्ति। एतत् तु पशूनां महत् भाग्यम् एव।

**तात्पर्यार्थः** - साहित्यादिशास्त्रज्ञानविहीनस्य जनस्य निन्दा क्रियते प्रस्तुतश्लोकद्वारा। अस्मिन् जगति मनुष्याः मनुष्यरूपेण आगच्छन्ति चेदपि न सर्वे मनुष्यत्वं प्राप्नुवन्ति। मनुष्यवेषेण बहवः पशवः अपि जगति बहुत्र वर्तन्ते। तेषां जन्मना संसारस्य न कश्चित् लाभः भवति। अजागलस्थमांसपिण्डवत् तेषां जन्म वृथा एव। मनुष्यत्वस्य अर्जनाय साहित्यशास्त्रादीनां ज्ञानम् अत्यावश्यकं भवति। शास्त्रं तु सर्वेषां लोचनं भवति। अतः लोचनविहीनः जनः अन्ध एव। साहित्यादिज्ञानं न वर्तते चेत् स पुरुषः महान् मूर्खः भवति। एवं च सङ्गीतादिविषयकम् अपि ज्ञानं मनुष्यत्वस्य अर्जनाय अत्यावश्यकं भवति। जगति अस्मिन् षट्षष्टिः कलाः वर्तन्ते, एतासां कलानां ज्ञानं नास्ति चेत् स पुरुषः मनुष्यत्वं न प्राप्नोति। यस्य पुरुषस्य समीपे एतेषां किञ्चिदपि ज्ञानं न वर्तते, स तु साक्षात् पशुतुल्य एव भवति। केवलं पुच्छशृङ्गहीनः स मनुष्यवेषधारी पशु अन्यपशुवत् तृणं न भक्षयति। एतेन अन्यपशूनाम् महान् उपकारः भवति। यतो हि एते अस्मिन् जगति एवं मनुष्यरूपधारिणः पशवः बहवो वर्तन्ते, ते सर्वे मिलित्वा यदि तृणं खादन्ति, तर्हि अजादीनां भोजनाय तृणं न तिष्ठेत्। अत एव मनुष्यत्वस्य अर्जनाय अस्माभिः साहित्यादिज्ञानं प्राप्तुं प्रयत्नः कर्तव्यः।

**व्याकरणविमर्शः -**

१) साहित्यसङ्गीतकलाविहीनः - साहित्यं च सङ्गीतं च कला च साहित्यसङ्गीतकलाः इति इतरेतरद्वन्द्वसमासः। साहित्यसङ्गीतकलाभिः विहीनः साहित्यसङ्गीतकलाविहीनः इति तृतीयातत्पुरुषसमासः।

२) पुच्छविषाणहीनः - पुच्छं च विषाणं च पुच्छविषाणे इति इतरेतरद्वन्द्वसमासः, पुच्छविषाणाभ्यां हीनः पुच्छविषाणहीनः इति तृतीयातत्पुरुषसमासः।

३) खादन् - खाद्-धातोः शतृप्रत्यये प्रथमैकवचने खादन् इति रूपम्।

४) जीवमानः - जीव-धातोः शानच्प्रत्यये जीवमानः इति रूपम्।

**सन्धिकार्यम् -**

१) खादन्नपि = खादन् + अपि।

२) जीवमान्स्तद्भागधेयम् = जीवमानः + तद्भागधेयम्।

३) तद्भागधेयम् = तत् + भागधेयम्।



**प्रयोगपरिवर्तनम् -** साहित्यसङ्गीतकलाविहीनेन पुच्छविषाणहीनेन साक्षात् पशुना (एव)। तृणं न खादता अपि जीवमानेन (भूयते) इति यत् तत् पशूनां परमेण भागधेयेन (भूयते)।

**छन्दःपरिचयः -** प्रस्तुतेऽस्मिन् श्लोके उपजातिच्छन्दः वर्तते।

**यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि।**
**निरस्तपादपे देशे एरण्डोऽपि द्रुमायते॥१०॥**

**अन्वयः -** यत्र विद्वज्जनः नास्ति तत्र अल्पधीः अपि श्लाघ्यः (भवति), निरस्तपादपे देशे एरण्डः अपि द्रुमायते।

**अन्वयार्थः -** यत्र यस्मिन् देशे विद्वज्जनः पण्डितः नास्ति न विद्यते तत्र तस्मिन् देशे अल्पधीः मन्दबुद्धिः अपि श्लाघ्यः प्रशंसनीयः (भवति), निरस्तपादपे वृक्षशून्ये देशे स्थले एरण्डः एरण्डनामा क्षुद्रः कण्टकवृक्षः अपि द्रुमायते बृहद्वृक्षत्वेन गण्यते।

**सरलार्थः -** यस्मिन् प्रदेशे न कोऽपि विद्वान् पुरुषः वर्तते, तत्र तु अल्पज्ञः जनः अपि सर्वैः प्रशंसनीयः भवति। यथा मरुस्थलादौ कोऽपि बृहद्वृक्षः न विद्यते, तस्मात् तत्र विद्यमानः कण्टकवृक्षः अपि बृहद्वृक्षत्वेन गण्यते।

**तात्पर्यार्थः -** साम्प्रतिकसमये जगति एवं दृश्यते यत् अयोग्याः अपि बहुत्र महदासनम् आरोहन्ति। यतो हि तदासनस्य योग्यः जनः तस्मिन् स्थाने न विद्यते। यस्मिन् प्रदेशे सर्वे जनाः एव मूर्खाः, न कश्चित् विद्वान् पुरुषः वर्तते, तत्र कश्चित् किञ्चिज्ज्ञः वर्तते चेदेव स तद्प्रदेशवासिनां मूर्खाणां महाप्रशंसनीयः भवति। सर्वे तस्य वचनानुसारेण कार्यं सम्पादयन्ति। यथा मरुप्रदेशे कण्टकवृक्षान् विहाय अन्ये वृक्षाः प्रायः न विद्यन्ते, तस्मात् तं कण्टकवृक्षम् एव मरुप्रदेशस्थाः जनाः प्राणिनः वा बृहद्वृक्षत्वेन मन्यन्ते। परन्तु स कण्टकवृक्षः अश्वत्थादिबृहद्वृक्षपूर्णे स्थाने आनीयते चेत् तस्य स्वरूपं प्रकाशितं भवति। सर्वैः स वृक्षः निन्द्य एव भवति। तद्वत् स्वप्रदेशे विद्वत्त्वेन पूजितः मूर्खः प्रकृतविदुषां समीपं गच्छति चेत् तस्य प्रकृतं मूर्खत्वं प्रकाश्यते।

**व्याकरणविमर्शः -**

१) विद्वज्जनः - विद्वान् च असौ जनः विद्वज्जनः इति कर्मधारयसमासः।

२) अल्पधीः - अल्पा धीः यस्य स अल्पधीः इति बहुव्रीहिसमासः।

३) निरस्तपादपे - निरस्ताः पादपाः यस्मिन् स निरस्तपादपः (देशः) इति बहुव्रीहिसमासः, तस्मिन् निरस्तपादपे।

४) द्रुमायते - द्रुमः इव आचरति इति द्रुमायते।

**सन्धिकार्यम् -**

१) विद्वज्जनो नास्ति = विद्वज्जनः + नास्ति।

२) नास्ति = न + अस्ति।



३) एरण्डोऽपि = एरण्डः + अपि।

**प्रयोगपरिवर्तनम्** - यत्र विद्वज्जनेन न भूयते तत्र अल्पधिया अपि श्लाघ्येन (भूयते), निरस्तपादपे देशे एरण्डेन अपि द्रुमाय्यते।

**छन्दःपरिचयः** - प्रस्तुतेऽस्निन् श्लोके अनुष्टुप्-छन्दः वर्तते।



## पाठगतप्रश्नाः -

१) वित्तस्य कति गतयः? काश्च ताः?

२) यः न ददाति न भुङ्क्ते तस्य कतमा गतिः भवति?

३) विद्या नरस्य किंस्वरूपम् अस्ति?

४) कः विदेशगमने बन्धुजनः?

५) कः पशुः भवति?

६) अजरामरवत् प्राज्ञः किं किं च चिन्तयेत्?

७) श्रोत्रं केन विभूषितं भवति?

८) करुणापराणां कायः केन विभूषितः भवति?

९) अङ्गनायाः विभूषणं किम्?

१०) पुरुषं किं समलङ्करोति?

११) किं भूषणं न क्षीयते?

१२) केयूरा न विभूषयन्ति...इत्यादिश्लोके किं छन्दः वर्तते?

१३) नरस्य आभरणं किम् अस्ति?

१४) गुणस्य आभरणं किम् अस्ति?

१५) कः पुच्छविषाणहीनः पशुः अस्ति?

१६) साहित्यसङ्गीतकलाविहीनः...इत्यादिश्लोके किं छन्दः वर्तते?

१७) एरण्डः कुत्र द्रुमायते?

१८) क-स्तम्भेन सह ख-स्तम्भं मेलयत - -

| **क-स्तम्भः** | **ख-स्तम्भः** |
|---|---|
| १. वित्तस्य गतिः | क. बन्धुजनः |
| २. गुरूणां गुरुः | ख. पात्रत्वम् |



| | |
|---|---|
| ३. विदेशगमने | ग. शीलम् |
| ४. पशुः | घ. पाणिः |
| ५. विनयात् | ङ. दानम् |
| ६. दानेन | च. शार्दूलविक्रीडितम् |
| ७. छन्दः | छ. विद्या |
| ८. भूषणम् | ज. विद्याविहीनः |
| ९. अल्पधीः | झ. आभरणम् |
| १०. क्षमा | ञ. श्लाघ्यः |



## पाठसारः -

दानं भोगः नाशः - इत्येताः त्रिविधाः वित्तस्य गतयः वर्तन्ते। यः जनः तु अधिकवित्तवान् अपि अपरस्मै दरिद्राय तस्य दानं न करोति, किञ्च स्वयमपि तस्य भोगं न करोति। तस्य वित्तस्य तु अवश्यम् एव नाशः भवति। विद्या हि जनस्य श्रेष्ठं सौन्दर्यम्, इयं जनस्य सञ्चितं धनं, भोगस्य उत्सस्वरूपा इयं यशसः सुखस्य च साधने सहायकभूता। विद्या महद्भ्यः विद्वद्भ्यः अपि उपदेशं प्रयच्छति। विदेशगनसमये विद्या एव जनस्य साहाय्यं करोति। विद्यायाः अपेक्षया श्रेष्ठदेवता न विद्यते। राजसभासदृशश्रेष्ठस्थाने अपि धनं न पूज्यते, परन्तु विद्यायाः पूजा तु सर्वत्र अवश्यम् एव भवति। तस्मात् यस्य समीपे विद्या नास्ति, स तु पशुस्वरूप एव। ज्ञानी पुरुषः आत्मानम् अजरम् अमरम् इति मत्वा विद्यायाः अर्थस्य च उपार्जनं करोति, परन्तु कालकवलितम् इव आत्मानं मत्वा धर्मस्य अनुष्ठानं करोति। विद्यालाभे सति विनयः उत्पद्यते, यः तु विनयी भवति स तु सत्पात्रत्वं लभते। सत्पात्रीभूतः जनः तु धनं प्राप्नोति, धनेन च सुखलाभः भवति। विदुषां कर्णः वेदशास्त्रादिश्रवणेन विभूषितः भवति, न तु कुण्डलधारणेन। तेषां हस्तः तु दानादिसत्कर्मणा एव विभूषितः भवति, न तु कङ्कणादिभूषणधारणेन। ये तु दयापरायणाः जनाः वर्तन्ते, तेषां शरीरं परोपकारैः एव विभूषितं भवति, न तु चन्दनलेपनेन।

सत्यवचनम् एव मनुष्यस्य श्रेष्ठं भूषणम्, लज्जा किञ्च कटिप्रदेशस्य क्षीणता एव नार्यः श्रेष्ठः अलङ्कारः, विद्या क्षमा च ब्राह्मणस्य श्रेष्ठं भूषणम्, अपि च सच्चरित्रम् एव सर्वमनुष्यस्य सर्वोत्तमं भूषणं भवति। भुजस्य अलङ्कारधारणेन, सौन्दर्यवर्धनाय कान्तिविशिष्टहारादीनाम् अलङ्काराणां धारणेन, गात्रे चन्दनादिलेपनेन पुष्पधारणेन केशानाम् अलङ्करणेन वा न कोऽपि जनः भूषितः भवति। सुसंस्कृता वाणी एव सर्वान् यथार्थं भूषयति। वाग्रूपभूषणम् एव क्षयरहितं भूषणम्। जनानां सौन्दर्यम् एव तेषाम् अलङ्कारो भवति। किञ्च तस्य सौन्दर्यस्य अलङ्काराः तेषां गुणाः भवन्ति। एवं तेषां गुणानां अलङ्कारो भवति ज्ञानम्। तथैव तस्य ज्ञानस्य अलङ्कारो भवति क्षमा। यस्य पुरुषस्य साहित्यशास्त्रविषयकं सङ्गीतविषयकं कलाविषयकं च किञ्चिदपि ज्ञानं न वर्तते, स तु पुच्छश्रृङ्गविहीनः साक्षात् पशुतुल्यः एव भवति। स





पशुतुल्यः जनः मनुष्यरूपधारणात् पशुवत् तृणं न खादति, तस्मात् पशवः भोजनाय अधिकं तृणं प्राप्नुवन्ति। एतत् तु पशूनां महत् भाग्यम् एव। यस्मिन् प्रदेशे न कोऽपि विद्वान् पुरुषः वर्तते, तत्र तु अल्पज्ञः जनः अपि सर्वैः प्रशंसनीयः भवति। यथा मरुस्थलादौ कोऽपि बृहद्वृक्षः न विद्यते, तस्मात् तत्र विद्यमानः कण्टकवृक्षः अपि बृहद्वृक्षत्वेन गण्यते।



## किमधिगतम्

- ➢ वित्तस्य अधिकसञ्चयः न करणीयः।
- ➢ सर्वैः एव मनुष्यत्वार्जनाय विद्याप्राप्तये प्रयतनीयम्।
- ➢ विद्या एव सर्वविधसुखसाधनं भवति।
- ➢ शीलम् एव सर्वेषां मनुष्याणां प्रकृतं भूषणम्।
- ➢ वाग्भूषणेन भूषितः जनः नित्यम् एव भूषितः भवति।
- ➢ साहित्यसङ्गीतकलाविहीनः जनः तु साक्षात् पुच्छशृङ्गहीनपशुस्वरूपः भवति।
- ➢ पण्डितशून्यदेशे मूर्खः अपि सर्वैः प्रशंसनीयः भवति।



## पाठान्तप्रश्नाः

१) वित्तस्य तिसृणां गतीनां विषये संक्षेपेण आलोचयतु।

२) विद्यायाः माहात्म्यं श्लोकानुसारेण वर्णयतु।

३) श्रोत्रं श्रुतेनैव...इत्यादिश्लोकस्य व्याख्यानं करोतु।

४) वाग्भूषणस्य माहात्म्यं यथाग्रन्थं प्रतिपादयतु।

५) साहित्यशास्त्रादिज्ञानविहीनस्य कीदृशी दशा भवति- तद्विषये संक्षेपेण आलोचयतु।



## पाठगतप्रश्नानाम् उत्तराणि

१) तिस्रः गतयः। दानं भोगः नाशः च।

२) तृतीया।

३) अधिकं रूपं प्रच्छन्नगुप्तं धनं च।



४) विद्या।

५) विद्याविहीनः।

६) विद्याम् अर्थं च।

७) श्रुतेन।

८) परोपकारैः।

९) लज्जा कटौ कृशता च।

१०) संस्कृता वाणी।

११) वाग्भूषणम्।

१२) शार्दूलविक्रीडितम्।

१३) रूपम्।

१४)ज्ञानम्।

१५)साहित्यसङ्गीतकलाविहीनः।

१६) उपजातिः।

१७)निरस्तपादपे देशे।

१८)१-ङ, २-छ, ३-क, ४-ज, ५-ख, ६-घ, ७-च, ८-ग, ९-ट, १०-ञ।

॥ इति प्रथमः पाठः ॥



२

# सुभाषितानि-२

## प्रस्तावना -

अतिथेः सत्कारः हि गृहस्थानाम् एकः महान् धर्मः। अतः सर्वैः गृहस्थैः एव स धर्मः पालनीयः। विधिः एव सर्वविधानां कार्याणां नियामकः वर्तते। परन्तु तद्विचिन्त्य कार्यार्थं प्रयत्नः न त्यक्तव्यः। आलस्यं हि मनुष्याणाम् एकः महान् शत्रुः। सर्वैः मनुष्यैः एव आलस्यं त्यक्तव्यम्। एतादृशानां नीतीनां ज्ञानं वयम् अस्य पाठस्य पठनेन प्राप्स्यामः। अपि च प्रकृतबन्धुम् अपि निर्णेतुं शक्नुमः अस्य पठनेन। अस्मिन् पाठे नव श्लोकाः वर्तन्ते। अस्य पठनेन महद् ज्ञानम् अर्जयामो वयम्। एतेन अवश्यम् एव अस्माकं महान् आनन्दः भविष्यति।



## उद्देश्यानि -

इमं पाठं पठित्वा भवान् -

- अतिथिसत्कारविषयकं ज्ञानं प्राप्नुयात्।
- विधेः बलवत्त्वं जानीयात्।
- दुर्जनैः सह सङ्गात् कीदृशी अवस्था भवति - इत्यस्मिन् विषये ज्ञातुं शक्नुयात्।
- प्रकृतबान्धवलक्षणं जानीयात्।
- श्लोके स्थितानां पदानाम् अन्वयः केन प्रकारेण कर्तव्यः इति जानीयात्।
- श्लोकानां व्याख्या केन प्रकारेण कर्तव्या इत्यस्मिन् विषये ज्ञास्यति।

## २.१) मूलपाठः -

**अरावप्युचितं कार्यमातिथ्यं गृहमागते।**
**छेत्तुः पार्श्वगताच्छायां नोपसंहरे द्रुमः॥१॥**
**शशिदिवाकरयोर्ग्रहपीडनं**
**गजभुजङ्गमयोरपि बन्धनम्।**
**मतिमतां च विलोक्य दरिद्रतां**
**विधिरहो बलवानिति मे मतिः॥२॥**



षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता॥३॥
आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।
नास्त्युद्यमसमो बन्धुः कुर्वाणो नावसीदति॥४॥
यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः।
यदा किञ्चित् किञ्चिद् बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः॥५॥
शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ।
व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्॥६॥
दुर्जनेन समं सखं वैरञ्चापि न कारयेत्।
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम्॥७॥
उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥८॥
उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥९॥

## २.२) इदानीं वयं मूलपाठम् अवगच्छाम

**शशिदिवाकरयोर्ग्रहपीडनं**
**गजभुजङ्गमयोरपि बन्धनम्।**
**मतिमतां च विलोक्य दरिद्रतां**
**विधिरहो बलवानिति मे मतिः॥१॥**

**अन्वयः** - शशिदिवाकरयोः ग्रहपीडनं गजभुजङ्गमयोः अपि बन्धनं, मतिमतां दरिद्रतां च विलोक्य मे मतिः (भवति) 'अहो! विधिः बलवान्' इति।

**अन्वयार्थः** - शशिदिवाकरयोः चन्द्रसूर्ययोः ग्रहपीडनं राहुणा ग्रसनं गजभुजङ्गमयोः हस्तिसर्पयोः अपि बन्धनं शृङ्गलेन मन्त्रादिना च संयमनं मतिमतां विदुषां दरिद्रताम् अकिञ्चनतां च विलोक्य दृष्ट्वा मे मम मतिः बुद्धिः (भवति) 'अहो! विधिः दैवं बलवान् प्रबलः सर्वनियामकम्' इति इत्याकारिका।

**सरलार्थः** - चन्द्रसूर्यसदृशदीप्तिमतोः अपि राहुणा ग्रासः भवति, हस्तिसर्पसदृशशक्तिमतोः अपि शृङ्गलेन मन्त्रादिना च बन्धनं भवति, सर्वशास्त्रज्ञाः महाज्ञानिनः अपि दरिद्राः भवन्ति - एतत्सर्वं दृष्ट्वा भाग्यम् एव सर्वनियामकम् इति मम मतिः वर्तते।



**तात्पर्यार्थः** - प्रस्तुतेऽ स्मिन् श्लोके दैवस्य बलवत्त्वं वर्ण्यते। समुद्रमन्थनात् परं प्राप्तम् अमृतं पातुं देवतावेषं धृत्वा राहुनामकः राक्षसः तत्र समागतः। परन्तु चन्द्रसूर्यौ तस्य स्वरूपं प्रकाशितवन्तौ, ततः विष्णुः स्वचक्रेण तस्य शिरश्छेदं कृतवान्, परन्तु अमृतपानकारणात् स न मृतवान्। अत एव चन्द्रसूर्ययोः उपरि द्वेषात् राहुः तयोः ग्रासं करोति इति पौराणिकी कथा वर्तते। अयं महान् आकाशः प्रातः सूर्यस्य उज्ज्वलरश्म्या उद्भासितः भवति। रात्रौ च अयं सूर्यास्तगमनात् परं पूर्णिमाचन्द्रमसः ज्योत्स्नया प्रकाशितो भवति। एवं सीमारहितं महान्तम् आकाशं यौ चन्द्रसूर्यौ प्रकाशेते, तादृशदीप्तिमतोः चन्द्रसूर्ययोः अपि राहुणा ग्रासः सम्भवति। एवम् एव महत्कायविशिष्टः सर्वान् नाशयितुं समर्थः गजः अपि सामान्यशृङ्गलेन बद्धः भवति, किञ्च, यस्य दंशनेन मृत्युः निश्चितः वर्तते, तादृशः महद्विषवान् सर्पः अपि मन्त्रबलात् बद्धः भवति। सर्वाणि शास्त्राणि पठितवन्तः, एवं महाज्ञानिनः विद्वांसः अपि कदाचित् अर्थोपार्जने असमर्थाः भवन्ति। तेषां सम्पूर्णं जीवनं दारिद्र्येण पूरितं भवति। एतत् सर्वम् एव दैवबलात् भवति। पूर्वजन्मनि कृतं यत् कर्म तदेव दैवम् इत्युच्यते। दैवं कदापि अन्यताकर्तुं न शक्यते। दैवम् एव सर्वकार्यनियामकं भवति।

**व्याकरणविमर्शः** -

१) शशिदिवाकरयोः - शशी च दिवाकरश्च शशिदिवाकरौ इति इतरेतरद्वन्द्वसमासः, तयोः शशिदिवाकरयोः।

२) ग्रहपीडनम् - ग्रहेण पीडनम् ग्रहपीडनम् इति तृतीयातत्पुरुषसमासः।

३) गजभुजङ्गमयोः - गजः च भुजङ्गमः च गजभुजङ्गमौ इति इतरेतरद्वन्द्वसमासः, तयोः गजभुजङ्गमयोः।

४) मतिमताम् - मतिः एषाम् अस्ति इति मतिमन्तः, तेषां मतिमताम्।

**सन्धिकार्यम्** -

१) शशिदिवाकरयोर्ग्रहपीडनम् = शशिदिवाकरयोः + ग्रहपीडनम्।

२) गजभुजङ्गमयोपि = गजभुजङ्गमयो + अपि।

३) विधिरहो = विधिः + अहो।

**प्रयोगपरिवर्तनम्** - शशिदिवाकरयोः ग्रहपीडनं गजभुजङ्गमयोः अपि बन्धनं च मतिमतां दरिद्रतां विलोक्य मे मतिना (भूयते) 'अहो! विधिना बलवता (भूयते)' इति।

**छन्दःपरिचयः** - अस्मिन् श्लोके द्रुतविलम्बितच्छन्दः वर्तते।

**अरावप्युचितं कार्यमातिथ्यं गृहमागते।**
**छेत्तुः पार्श्वगताच्छायां नोपसंहरते द्रुमः॥२॥**

**अन्वयः** - गृहम् आगते अरौ अपि उचितम् आतिथ्यं कार्यम्, द्रुमः पार्श्वगतात् छेत्तुः छायां न उपसंहरते।



**अन्वयार्थः** - गृहं भवनम् आगते समुपस्थिते अरौ शत्रौ अपि उचितम् योग्यम् आतिथ्यम् अतिथिसत्कारः कार्यं कर्तव्यम्, द्रुमः वृक्षः पार्श्वगतात् पार्श्वं छायाप्रदेशं गतात् छेत्तुः शाखाछेदकात् छायां न उपसंहरते न आकर्षति।

**सरलार्थः** - शत्रुः यदि कदापि अतिथिरूपेण गृहम् आगच्छति, तर्हि यथासाध्यं तस्यापि अतिथिसत्कारः अवश्यं कर्तव्यः। यथा वृक्षच्छेदकाः वृक्षच्छेदनेन क्लान्ताः सन्तः तस्य एव छिद्यमानस्य वृक्षस्य छायायाम् आश्रयं लभन्ते, तदा स वृक्षः तेभ्यः स्वछायां न आकर्षति।

**तात्पर्यार्थः** - अस्मिन् श्लोके आतिथ्यरूपगृहस्थधर्मविषये वर्णना क्रियते। आतिथ्यविषये तु शास्त्रेषु बहुत्र आलोच्यते। अतिथिदेवो भव - इत्यादिश्रुतिरपि तत्र प्रमाणम्। आतिथ्यं हि गृहस्थानाम् एकः महान् धर्मः। अयं धर्मः न पाल्यते चेत् महत् पापं जायते। अतिथिः यदि दुःखितः सन् गृहात् गच्छति, तर्हि स अतिथिः स्वस्य पापकर्मादिकं गृहस्वामिने प्रदाय, गृहस्वामिनः पुण्यं गृह्णाति। अतः अतिथिसत्कारविषये अवश्यम् एव सावधानेन भवितव्यम्। कदाचित् शत्रुः अपि यदि अतिथिरूपेण गृहं प्रति आगच्छति, तर्हि तं शत्रुं मत्वा अपमानः न कर्तव्यः। अतिथिवत् तस्यापि यथासाध्यं सत्कारः करणीयः। अयम् एव गृहस्थधर्मः। अस्य दृष्टान्तः यथा - वृक्षच्छेदकाः यदा वृक्षच्छेदनेन सूर्यातपेन वा क्लान्ताः भवन्ति, तदा ते आतपात् रक्षायै तस्य छिद्यमानस्य वृक्षस्य एव छायायाम् आश्रयं नयन्ति। परन्तु स वृक्षः तान् शत्रून् मत्वा तेभ्यः स्वछायां न आकर्षति। तान् अपि तच्छरणागतान् मत्वा आश्रयं यच्छति। एवं शत्रोः अपि अतिथिसत्कारः अवश्यं कर्तव्यः। अन्यथा गृहस्वामिनः पापं जायेत।

**व्याकरणविमर्शः** -

१) कार्यम् - कृधातोः ण्यत्प्रत्यये कार्यम् इति रूपम्।

२) आतिथ्यम् - अतिथेः इदम् इत्यर्थे अतिथिशब्दात् ष्यञ्प्रत्यये आतिथ्यम् इति रूपं भवति।

३) आगते - आपूर्वकात् गम्-धातोः क्तप्रत्यये पुंसि सप्तम्येकवचने आगते इति रूपम्।

४) छेत्तुः - छिद्-धातोः तृच्प्रत्यये षष्ठ्येकवचने छेत्तुः इति रूपम्।

५) उपसंहरते - उपपूर्वकात् सम्-पूर्वकात् च हृधातोः लटि प्रथमपुरुषैकवचने उपसंहरते इति रूपम्।

**सन्धिकार्यम्** -

१) अपावपि = अरौ + अपि।

२) अप्युचितम् = अपि + उचितम्। (यण्-सन्धिः)।

३) पार्श्वगताच्छायाम् = पार्श्वगतात् + छायाम्। (श्चुत्व-सन्धिः)।

४) नोपसंहरते = न + उपसंहरते। (गुण-सन्धिः)।

**प्रयोगपरिवर्तनम्** - गृहम् आगते अरौ अपि उचितम् आतिथ्यं कुर्यात्, द्रुमेन पार्श्वगतात् छेत्तुः छाया न उपसंह्रियते।

**छन्दःपरिचयः** - अस्मिन् श्लोके अनुष्टुप्-छन्दः वर्तते।



**षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।**
**निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता॥३॥**

**अन्वयः** - इह भूतिम् इच्छता पुरुषेण षड् दोषाः हातव्याः, निद्रा तन्द्रा भयं क्रोधः आलस्यं दीर्घसूत्रता।

**अन्वयार्थः** - इह अस्मिन् संसारे भूतिम् अभ्युदयम् इच्छता काङ्क्षता षड् दोषाः दुर्गुणाः हातव्या त्यक्तव्याः, निद्रा स्वापः तन्द्रा प्रमीला भयं भीतिः क्रोधः कोपः आलस्यम् अलसता दीर्घसूत्रता चिरक्रियता।

**सरलार्थः** - अस्मिन् जगति यः अभ्युदयं कर्तुम् इच्छति, तेन निद्रा तन्द्रा भयं क्रोधः आलस्यं किञ्च उदासीनता - एते षड् दोषाः त्यक्तव्याः। एतेषां त्यागात् परम् एव अभ्युदयः सम्भवः भवति।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके निद्रादीनां षण्णां दोषानां त्यागविषये कथ्यते। संसारे अस्मिन् यः पुरुषः उन्नतिं कर्तुम् इच्छति, तेन तु उच्यमानाः दोषाः अवश्यम् एव त्यक्तव्याः। ते दोषाः यथा - निद्रा तन्द्रा भयं क्रोधः आलस्यं दीर्घसूत्रता चेति। निद्रा अर्थात् अधिकस्वापः, रात्रौ यथासमयम् एव अस्माभिः निद्रा यापनीया, तदितरसमये तु कदापि स्वापः न करणीयः। तन्द्रा अर्थात् कार्यसमये निद्रायाः भावः। तन्द्रा तिष्ठति चेत् कार्यं न सिध्यति। एवं भयम् अपि अस्माभिः अवश्यम् एव त्यक्तव्यम्। भयकारणात् बहूनां कार्याणां सिद्धिः न भवति। एवम् एव आलस्यं तु मनुष्याणां शरीरस्थः महान् शत्रुः भवति। अलसाः जनाः कदापि स्वकार्ये सिद्धाः न भवन्ति। एवं कार्येषु दीर्घसूत्रता अपि एकः महान् दोषः। किञ्चित् क्षुद्रं कार्यम् अपि बहुसमयं व्याप्य करणस्य प्रवृत्तिः दीर्घसूत्रता इति उच्यते। अयं दोषः अपि अवश्यम् एव हातव्यः। एतेषु दोषेषु अस्माकं विजयलाभः भवति चेत् सर्वे मनोरथाः स्वयमेव सिध्यन्ति। परन्तु यः एतैः वशीभूतः भवति, सः तु अवश्यं विनाशं गच्छति। एतेषां दोषाणां त्यागात् परम् एव अभ्युदयः सम्भवः, अन्यथा न कदापि अभ्युदयः सम्भवति।

**व्याकरणविमर्शः-**

१) हातव्याः - हाधातोः तव्यप्रत्यये प्रथमाबहुवचने हातव्याः इति रूपम्।

२) इच्छता - इष्-धातोः शतृप्रत्यये तृतीयैकवचने इच्छता इति रूपम्।

**सन्धिकार्यम्** -

१) पुरुषेणेह = पुरुषेण + इह.

२) हातव्या भूतिम् = हातव्याः + भूतिम्।

३) क्रोध आलस्यम् = क्रोधः + आलस्यम्।

**प्रयोगपरिवर्तनम्** - इह भूतिम् इच्छन् पुरुषः षड् दोषान् जह्यात् , निद्रा तन्द्रा भयं क्रोधः आलस्यं दीर्घसूत्रता।

**छन्दःपरिचयः** - प्रस्तुतः अयं श्लोकः अनुष्टुप्-छन्दोबद्धः वर्तते।



**आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।**
**नास्त्युद्यमसमो बन्धुः कुर्वाणो नावसीदति॥४॥**

**अन्वयः** - आलस्यं हि मनुष्याणां शरीरस्थः महान् रिपुः। उद्यमसमः बन्धुः नास्ति, कुर्वाणः न अवसीदति।

**अन्वयार्थः** - आलस्यम् अलसता हि मनुष्याणां मनुजानां शरीरस्थः देहस्थः महान् रिपुः महान् शत्रुः। उद्यमसमः उद्यमतुल्यः बन्धुः सखा नास्ति न विद्यते, कुर्वाणः कार्यं कुर्वन् जनः न अवसीदति दुःखग्रस्तः न भवति।

**सरलार्थः** - आलस्यं मनुष्याणां देहस्थः महान् शत्रुः, यः अनिष्टं जनयति। उद्यमवत् मनुष्याणाम् अन्यः बन्धुः न वर्तते। यः तु उद्यमशीलः पुरुषः, स कदापि विशादग्रस्तो न भवति।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके आलस्यस्यरूपदोषस्य निन्दा विधीयते। अस्मिन् जगति अलसाः जनाः बहवो वर्तन्ते। परन्तु इदम् आलस्यं हि एकः महान् शत्रुः। इदं हि अस्माकं शरीरे तिष्ठत् अस्माकं हानिं जनयति। आलस्यं वर्तते चेत् न कस्यचित् कार्यस्य सिद्धिः भवति। कार्यसाधने महान्तं विघ्नं जनयति इदम्। अतः ये कार्यसिद्धिम् इच्छन्ति, तैः अवश्यम् आलस्यं हातव्यम्। कार्यसिद्धये उद्यमः अत्यावश्यकः भवति। उद्यमशीला जनाः यत्किञ्चित्कार्यं साधयितुं शक्नुवन्ति। मित्रवत् कार्यसाधने महत्साहाय्यं करोति अयम् उद्यमः। सुप्तस्य सिंहस्य मुखे स्वयम् एव मृगः आगत्य न प्रविशति, मृगस्य मृगयणाय तु सिंहेन धावनादि-उद्यमः अवश्यं करणीयः। उद्यमशीलाः कदापि दुःखं न प्राप्नुवन्ति। अत एव कार्यसिद्धये सुखप्राप्तये च आलस्यं त्यक्त्वा अस्माभिः उद्यमः करणीयः।

**व्याकरणविमर्शः**-

१) शरीरस्थः - शरीरे तिष्ठति इति शरीरस्थः।

२) उद्यमसमः - उद्यमेन समः उद्यमसमः इति तृतीयातत्पुरुषसमासः।

३) कुर्वाणः - कृधातोः शानच्प्रत्यये प्रथमैकवचने कुर्वाणः इति रूपम्।

**सन्धिकार्यम्** -

१) नास्त्युद्यमसमः = नास्ति + उद्यमसमः।

२) कुर्वाणो न = कुर्वाणः + न।

३) नावसीदति = न + अवसीदति।

**प्रयोगपरिवर्तनम्** - आलस्येन हि मनुष्याणां शरीरस्थेन महता रिपुणा (भूयते)। उद्यमसमेन बन्धुना न भूयते, कुर्वाणेन न अवसीद्यते।

**छन्दःपरिचयः** - अस्मिन् श्लोके अनुष्टुप्-छन्दः वर्तते।

**यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं**
**तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः।**



**यदा किञ्चित् किञ्चित् बुधजनसकाशादवगतं**
**तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः॥५॥**

**अन्वयः** - यदा अहं किञ्चिज्ज्ञः, (तदा अहं) द्विप इव मदान्धः समभवम्, तदा सर्वज्ञः अस्मि इति मम मनः अवलिप्तम् अभवत्। यदा बुधजनसकाशात् किञ्चित् किञ्चित् अवगतम्, तदा मूर्खः अस्मि इति ज्वरः इव मे मदः व्यपगतः।

**अन्वयार्थः** - यदा यस्मिन् काले अहं किञ्चिद्ज्ञः स्वल्पज्ञानवान्, (तदा अहं) द्विपः गजः इव मदान्धः मदमत्तः समभवम् सञ्जातः, तदा तस्मिन् समये सर्वज्ञः निखिलज्ञानवान् अस्मि भवामि इति मम मे मनः चित्तम् अवलिप्तम् अभवत् गर्वपूर्णं जातम्। यदा यस्मिन् काले बुधजनसकाशात् पण्डितानां समीपात् किञ्चित् किञ्चित् स्वल्पम् अवगतम् ज्ञातम्, तदा तस्मिन् समये मूर्खः वालिशः अस्मि इति ज्वरः इव ज्वरवत् मे मम मदः औद्धत्यं व्यपगतः निर्गतः।

**सरलार्थः** - यदा मम किञ्चित् ज्ञानम् अभवत्, तदा अहं सर्वज्ञः अस्मि इति मत्वा अहं गजवत् मदमत्तः अभवम्। परन्तु पण्डितानां सकाशं गत्वा यदा तेषां ज्ञानं दृष्टवान्, तदा तदपेक्षया अहं महामूर्खः अस्मि इति ज्ञातवान्। तस्मिन् समये एव मम यत् औद्धत्यं सञ्जातम् आसीत् तत् निमिषेणैव निर्गतं जातम्।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके स्वल्पज्ञानलाभे सति एव जनानाम् यत् औद्धत्यं दृश्यते तद्विषये वर्ण्यते। अस्मिन् जगति कश्चित् जनः यदा किञ्चित् ज्ञानं लभते, तदा तस्य महान् अहङ्कारः भवति। गजः यथा मदमत्तः सन् सम्मुखे आगतान् सर्वान् स्वशुण्डया पादेन वा नाशयति , न कमपि सहते। तद्वत् स जनः अपि गुरूणां तथा अन्येषां सम्मान्यानां सम्मानं न करोति। सर्वैः सह दुष्टम् आचरति। स चिन्तयति यत् स सर्वज्ञः अस्ति, जगति न कस्यापि तदपेक्षया अधिकं ज्ञानं वर्तते। एवंरूपेण तस्य सम्पूर्णं चित्तं दर्पेण पूर्णं भवति। परन्तु स यदा विदुषां समीपं गच्छति, तत्र तेषां ज्ञानं च पश्यति, तदा तस्य अनुभवः भवति यत् एतदपेक्षया तस्य बहुस्वल्पं ज्ञानं वर्तते। तस्मिन् समये तस्य प्रकृतं मूर्खत्वं प्रकाशते। युक्तौषधसेवनेन रोगिणः ज्वरः यथा निमिषेणैव अपगच्छति, तद्वत् तस्य मदान्धस्य जनस्य अहङ्कारः सम्पूर्णतया विचूर्णं भवति। वस्तुतः किञ्चिज्ज्ञानलाभे सति मनुष्येषु यः अहङ्कारः उत्पद्यते, स एव विनाशस्य प्रधानहेतुस्वरूपः भवति। अतः ज्ञाने सत्यपि विनयः प्रशंसनीयः। तस्मात् ज्ञानलाभे सति कदापि अहङ्कारः न प्रकाशनीयः।

**व्याकरणविमर्शः-**

१) किञ्चिज्ज्ञः - किञ्चित् जानाति इति किञ्चिज्ज्ञः।

२) मदान्धः - मदेन अन्धः मदान्धः इति तृतीयातत्पुरुषसमासः।

३) सर्वज्ञः - सर्वं जानाति इति सर्वज्ञः।

४) बुधजनसकाशात् - बुधाश्च ते जनाः बुधजनाः इति कर्मधारयसमासः। बुधजनानां सकाशः बुधजनसकाशः इति षष्ठीतत्पुरुषसमासः, तस्मात् बुधजनसकाशात्।

५) अवगतम् - अवपूर्वकात् गम्-धातोः क्तप्रत्यये अवगतम् इति रूपम्।



६) व्यपगतः - विपूर्वकात् अपपूर्वकात् च गम्-धातोः क्तप्रत्यये पुंसि व्यपगतः इति रूपम्।

**सन्धिकार्यम्** -

१) किञ्चिज्ज्ञोऽहम् = किञ्चिज्ज्ञः + अहम्।

२) द्विप इव = द्विपः + इव।

३) सर्वज्ञोऽस्मीत्यभवदवलिप्तम् = सर्वज्ञः + अस्मि + इति + अभवत् + अवलिप्तम्।

४) मूर्खोऽस्मीति = मूर्खः + अस्मि + इति।

५) मदो मे = मदः + मे।

**प्रयोगपरिवर्तनम्** - यदा मया किञ्चिज्ज्ञेन, (तदा मया) द्विपेन इव मदान्धेन समभूयत, तदा सर्वज्ञेन भूयते इति मम मनसा अवलिप्तेन अभूयत। यदा बुधजनसकाशात् किञ्चित् किञ्चित् अवगतवान्, तदा मूर्खेन भूयते इति ज्वरेण इव मे मदेन व्यपगतेन (अभूयत)।

**छन्दःपरिचयः** - अस्मिन् श्लोके शिखरिणीछन्दः वर्तते।

**शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो**
**नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ।**
**व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं**
**सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्॥६॥**

**अन्वयः** - जलेन हुतभुक् वारयितुं शक्यः, छत्रेण सूर्यातपः, निशिताङ्कुशेन समदः नागेन्द्रः, दण्डेन गोगर्दभौ, भेषजसङ्ग्रहैः व्याधिः, विविधैः मन्त्रप्रयौगैः च विषम्। सर्वस्य शास्त्रविहितम् औषधम् अस्ति, (परन्तु) मूर्खस्य औषधं नास्ति।

**अन्वयार्थः** - जलेन वारिणा हुतभुक् अग्निः वारयितुं शामयितुं शक्यः शक्यते, छत्रेण सूर्यातपः भानोः चण्डता, निशिताङ्कुशेन तीक्षाङ्कुशेन समदः मदमत्तः नागेन्द्रः गजः, दण्डेन लगुडेन गोगर्दभौ गोरासभौ, भेषजसङ्ग्रहैः औषधङ्ग्रहैः व्याधिः रोगः, विविधैः नानाविधैः मन्त्रप्रयौगैः मन्त्रप्रयोगद्वारा च विषम्। सर्वस्य अखिलस्य शास्त्रविहितम् शात्रे उक्तं औषधं पथ्यम् अस्ति विद्यते, (परन्तु) मूर्खस्य अज्ञस्य औषधं पथ्यं नास्ति न वर्तते।

**सरलार्थः** - जलद्वारा अग्निः शामयितुं शक्यते, छत्रधारणेन सूर्यस्य आतपात् रक्षां प्राप्तुं शक्यते, तीक्षाङ्कुशेन मदमत्तहस्तिनः अपि बन्धनं कर्तुं शक्यते, दण्डप्रहारेण गौः गर्दभश्च शामयितुं शक्यते, औषधसेवनेन रोगः परिहर्तुं शक्यः, मन्त्रप्रयोगेण सर्पस्य विषम् अपि शामयितुं शक्यते। एवंरूपेण सर्वासां समस्यानां समाधानं शास्त्रे उक्तं वर्तते, परन्तु मूर्खस्य मूर्खत्वस्य परिहाराय न कश्चित् उपायः वर्तते।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके मूर्खाणां मूर्खत्वं निन्द्यते। मूर्खः जनः तु शात्रेषु सर्वत्र निन्दितः। पुत्रः मूर्खः भवति चेत् तस्य पिता जीवनस्य पदे पदे अपमानं सहते। तस्मात् एवम् उच्यते यत् पुत्रः जन्मनः परम् एव मृतः चेत् स्वल्पकालम् एव दुःखं भवति परन्तु मूर्खः पुत्रः जायेत चेत् सर्वदा एव स पितुः दुःखं जनयति। तस्मात् न कोऽपि पिता मूर्खं पुत्रं कामयते। अग्निः अधिकः भवति चेत् तत्र



जलक्षेपणेन तस्य अग्नेः शामनं कर्तुं शक्यते। सूर्यातपात् रक्षायै छत्रं धार्यते चेत् ततः रक्षा प्राप्तुं शक्या। हस्ती उन्मत्तः भवति चेत् तस्य सम्मुखे आगतान् सर्वान् स स्वपादेन नाशयति, परन्तु एवम् उन्मत्तस्य हस्तिनः अपि तीक्ष्णाङ्कुशेन बन्धनं कर्तुं शक्यते। दण्डप्रहारः क्रियते चेत् गोगर्दभादयः पशवः अपि स्ववशम् आगच्छन्ति। उत्तमवैद्यसकाशात् भेषजसेवनेन महान् रोगः अपि परिहर्तुं शक्यः भवति। विषधरसर्पस्य दंशनात् परं स दंशितः पुरुषः मृतप्रायः भवति चेदपि तदा मन्त्रप्रयोगेण तस्य विषस्य त्यागः कर्तुं शक्यः। एवंरूपेण जीवने सर्वासां समस्यानाम् एव समाधानं कर्तुं शक्यते। शास्त्रेषु तु सर्वविधसमाधानम् उक्तम् वर्तते। परन्तु सर्वसमस्या परिहर्तुं शक्यते चेदपि मूर्खत्वस्य परिहारः प्रयत्नशतेनापि कर्तुं न शक्यः।

**व्याकरणविमर्शः -**

१) सूर्यातपः - सूर्यस्य आतपः सूर्यातपः इति षष्ठीतत्पुरुषसमासः।

२) नागेन्द्रः - नागानाम् इन्द्रः नागेन्द्रः इति षष्ठीतत्पुरुषसमासः। तस्य गजः इत्यर्थः।

३) निशिताङ्कुशेन – निशितः च असौ अङ्कुशः निशिताङ्कुशः इति कर्मधारयसमासः।

४) गोगर्दभौ - गौः च गर्दभः च गोगर्दभौ इति इतरेतरद्वन्द्वसमासः।

५) भेषजसङ्ग्रहैः - भेषजानां सङ्ग्रहाः भेषजसङ्ग्रहाः इति तृतीयातत्पुरुषसमासः, तैः भेषजसङ्ग्रहैः।

६) मन्त्रप्रयोगैः - मन्त्राणां प्रयोगाः मन्त्रप्रयोगाः इति षष्ठीतत्पुरुषसमासः, तैः मन्त्रप्रयोगैः।

७) शास्त्रविहितम् - शास्त्रेण विहितम् शास्त्रविहितम् इति तृतीयातत्पुरुषसमासः।

**सन्धिकार्यम् -**

१) शक्यो वारयितुम् = शक्यः + वारयितुम्। (विसर्ग-सन्धिः)

२) व्याधिर्भेषजसङ्गहैः = व्याधिः + भेषजसङ्ग्रहैः। (विसर्ग-सन्धिः)

३) भेषजसङ्ग्रहैश्च = भेषजसङ्ग्रहैः + च। (विसर्ग-सन्धिः, श्चुत्व-सन्धिः)

४) विविधैर्मन्त्रप्रयोगैः = विविधैः + मन्त्रप्रयोगैः। (विसर्ग-सन्धिः)

५) सर्वस्यौषधम् = सर्वस्य + औषधम्। (वृद्धि-सन्धिः)

६) नास्त्यौषधम् = नास्ति + औषधम्। (यण्-सन्धिः)

**प्रयोगपरिवर्तनम् -** जलेन हुतभुजं वारयितुं शक्नुयात्, छत्रेण सूर्यातपम्, निशिताङ्कुशेन समदं नागेन्द्रं, दण्डेन गोगर्दभौ, भेषजसङ्ग्रहैः व्याधिम्, विविधैः मन्त्रप्रयौगैः च विषम्। सर्वस्य शास्त्रविहितेन औषधेन भूयते, (परन्तु) मूर्खस्य औषधेन न भूयते।

**छन्दःपरिचयः -** शार्दूलविक्रीडितम् इति छन्दःवर्तते अस्मिन् श्लोके।



**दुर्जनेन समं सख्यं वैरञ्चापि न कारयेत्।**
**उष्णो दहति चाङ्गारः शीतः कृष्णायते करम्॥७॥**

**अन्वयः** - दुर्जनेन समं वैरं सख्यं चापि न कारयेत्। उष्णः अङ्गारः करं दहति शीतश्च करं कृष्णायते।

**अन्वयार्थः** - दुर्जनेन खलेन समं सह वैरं शत्रुतां सख्यं मित्रतां चापि न कारयेत् सम्पादयेत्। उष्णः प्रदीप्तः अङ्गारः अलातम् करं तत्स्पृष्टं हस्तं दहति (अथ च)शीतश्च अनुष्णः च करं तत्स्पृष्टं हस्तं कृष्णायते कृष्णं करोति।

**सरलार्थः** - दुर्जनैः सह कदापि मैत्री अपि न करणीया, किञ्च शत्रुत्वम् अपि न सम्पादनीयम्। यतो हि उभयोः परिस्थित्योः एव स दुर्जनः हानिं जनयति। यथा उष्णः अङ्गारः हस्तस्य दाहं करोति, किञ्च स एव अङ्गारः शीतः भवति चेत् हस्तं कृष्णवर्णं सम्पादयति।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके दुर्जनानां निन्दा क्रियते। अस्मिन् जगति दुष्टा जनाः बहवो वर्तन्ते। जीवनस्य प्रायः सर्वमुहूर्ते एव दुष्टाः परिलक्ष्यन्ते। बहुवारम् अज्ञानवशात् ते अस्माकं हानिं सम्पादयन्ति। तेषां स्वभाव एव एवम् अस्ति यत् आदौ मैत्रीं सम्पादयति, ततः परं विश्वासं समुत्पाद्य अवकाशं प्राप्य महदनिष्टं जनयति। तस्मात् दुर्जनः समीपम् आगत्य साहाय्यादिकं कृत्वा सख्यं कर्तुं प्रयतते चेदपि ज्ञाने सति तैः सह कदापि मैत्री न करणीया। परन्तु मैत्री न करणीया इत्येतदर्थं तैः शत्रुत्वं सम्पाद्यते चेदपि अस्माकम् अनिष्टं भवति। दुर्जनैः सह कदाचित् दुष्टाचरणं क्रियते चेत् ते अवश्यं तत् मनसि संस्थाप्य भविष्यति हानिं जनयति। यथा अङ्गारः यदा तप्तः भवति तदा तस्य स्पर्शः क्रियते चेत् अवश्यं हस्तः दग्धः भवति, अपि स एव अङ्गारः यदा शीतः भवति, तदा तस्य स्पर्शः क्रियते चेत् हस्तः मलिनः भवति। तस्मात् हस्तरक्षायै अङ्गारस्य स्पर्शः एव न कर्तव्यः। तद्वत् सर्वदैव दुर्जनानाम् उपेक्षा कर्तव्या।

**व्याकरणविमर्शः** -

१) सख्यम् - सख्युः भावः सख्यम्।

२) कारयेत् - कृधातोः णिच्प्रत्यये विधिलिङि प्रथमपुरुषैकवचने कारयेत् इति रूपम्।

३) कृष्णायते - कृष्ण इव आचरयति इति कृष्णायते।

**सन्धिकार्यम्** -

१) वैरञ्चापि = वैरम् + चापि।

२) चापि = च + अपि।

३) उष्णो दहति = उष्णः + दहति।

४) चाङ्गारः = च + अङ्गारः।

**प्रयोगपरिवर्तनम्** - दुर्जनेन समं वैरं सख्यं चापि न कार्येत। उष्णेन अङ्गारेण करः दह्यते शीतेन च करः कृष्णाय्यते।



**छन्दःपरिचयः** - अनुष्टुप्-छन्दोबद्धः अयं श्लोकः।

**उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे।**
**राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥८॥**

**अन्वयः** - यः उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे च राजद्वारे श्मशाने च तिष्ठति स बान्धवः (भवति)।

**अन्वयार्थः** - यः यः जनः उत्सवे विवाहादौ उत्सवसमये व्यसने विपत्तिकाले चैव दुर्भिक्षे अन्नाभावसमये राष्ट्रविप्लवे स्वदेशस्य अन्यराज्यकृताक्रमणसमये च राजद्वारे विचारालये श्मशाने शवदाहस्थाने च तिष्ठति धनादिना उपकरोति स बान्धवः यथार्थः बन्धुः भवति।

**सरलार्थः** - यः जनः विवाहादौ उत्सवसमये, विपत्समये, अन्नाभावसमये, युद्धसमये, विचारालये, दाहस्थाने च सर्वदैव सर्वस्यां परिस्थितौ एव हितम् इच्छति साहाय्यं करोति च स एव वस्तुतो बन्धुः भवति।

**तात्पर्यार्थः** - आलोच्यमाने अस्मिन् श्लोके प्रकृतबन्धुलक्षणम् उच्यते। अस्मिन् जगति जीवनपथि चलनसमये बान्धवाः तु बहवो लभ्यन्ते। परन्तु तेषु न सर्वे हितैषिणः भवन्ति। प्रायः जनाः एव स्वार्थस्य साधनाय मैत्रीं सम्पादयन्ति। सम्पूर्णे जगति स्वल्पाः एव प्रकृतबान्धवान् प्राप्नुवन्ति। जनानां सुखसमये बहव एव तस्य सुखस्य किञ्चिद्भागं प्राप्तुं मित्राणि भवन्ति, परन्तु तस्य एव जनस्य यदा विपत्कालः समापन्नः भवति, तदा सुखसमये आगतेषु तेषु बन्धुषु न कोऽपि साहाय्याय प्रयतते। अत एव शास्त्रेषु प्रकृतबन्धोः निर्णयस्य उपायः उक्तः। तद्यथा - यः विवाहाद्युत्सवसमये बन्धुना सह आनन्दं करोति, अपि च बन्धोः विपत्तिकाले युक्तमार्गं प्रदर्श्य साहाय्यं करोति, किञ्च बन्धोः यदा अन्नकष्टं भवति तदा अन्नदानादिना तस्य साहाय्यं करोति, एवं च अन्यदेशस्य राज्ञा यदा स्वदेशे आक्रमणं क्रियते, तदा प्राणरक्षायै वासस्थानदानेन यः बन्धोः साहाय्यं करोति, इत्थं च प्रतिपक्षेण केनचित् बन्धोः उपरि मिथ्यापवादः दीयते, तस्य विचारसमये सद्युक्तिदानेन तस्मात् अपवादात् रक्षां करोति, किञ्च परिवारस्य कोऽपि म्रियते चेत् श्मशाने दाहसमये तत्कार्यस्य सुष्ठुतया सम्पादनाय साहाय्यं करोति, स एव प्रकृतः बन्धुः भवति। परन्तु एवं बन्धुः तु साम्प्रतिकसमये विरल एव।

**व्याकरणविमर्शः -**

१) राष्ट्रविप्लवे - राष्ट्रस्य विप्लवः राष्ट्रविप्लवः इति षष्ठीतत्पुरुषसमासः, तस्मिन् राष्ट्रविप्लवे।

२) राजद्वारे - राज्ञः द्वारं राजद्वारम् इति षष्ठीतत्पुरुषसमासः, तस्मिन् राजद्वारे।

३) तिष्ठति - स्थाधातोः लटि प्रथमपुरुषैकवचने तिष्ठति इति रूपम्।

**सन्धिकार्यम् -**

१) चैव = च + एव।

२) यस्तिष्ठति = यः + तिष्ठति।



३) स बान्धवः = सः + बान्धवः।

**प्रयोगपरिवर्तनम्** - येन उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे च राजद्वारे श्मशाने च स्थीयते तेन बान्धवेन (भूयते)।

**छन्दःपरिचयः** - अस्मिन् श्लोके अनुष्टुप्-छन्दः अस्ति।

**उद्यमेन न हि सिद्ध्यन्ति कार्याणि न मनोरथैः।**
**न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥९॥**

**अन्वयः** - उद्यमेन कार्याणि सिद्ध्यन्ति, न (तु) मनोरथैः, सुप्तस्य सिंहस्य मुखे मृगाः न हि प्रविशन्ति।

**अन्वयार्थः** - उद्यमेन उद्योगेन कार्याणि अनुष्ठेयकर्माणि सिद्ध्यन्ति सफलानि भवन्ति, न (तु) मनोरथैः इच्छामात्रेण, सुप्तस्य शयानस्य सिंहस्य केसरिणः मुखे आनने मृगाः हरिणादयः न हि प्रविशन्ति यान्ति।

**सरलार्थः** - कार्यसाधनाय केवलम् इच्छा क्रियते चेदेव तत् कार्यं न सिद्ध्यति, तस्य साधनाय अवश्यम् उद्यमः करणीयः। यथा भोजनार्थं सिंहेन धावनं कृत्वा एव मृगस्य मृगयणं करणीयम्, शयानस्य सिंहस्य मुखे मृगः स्वयम् आगत्य न प्रविशति।

**तात्पर्यार्थः** - प्रस्तुतेऽस्मिन् श्लोके पौरुषविषये वर्ण्यते। संसारेऽस्मिन् अलसाः जनाः तु अनुष्ठेयकर्मणः साधनाय इच्छामात्रं कुर्वन्ति, परन्तु आलस्यकारणात् तत्साधनाय न कश्चित् उद्योगं कुर्वन्ति। ते चिन्तयन्ति यत् दैवम् एव सर्वकार्यसाधकं वर्तते, तस्मात् कार्यसाधनाय प्रयत्नकरणेन न कश्चित् लाभः भवति। यत् भाग्ये अस्ति प्रयत्नशतेनापि तत् अन्यथाकर्तुं न शक्यते। अतः दैवे विश्वासं संस्थाप्य कार्यसाधनविषये चिन्ता न कर्तव्या इति अलसानां मतिः। परन्तु पण्डितानां मतं तु भिन्नम् एव। तेषां नये इच्छामात्रेण न कस्यापि कार्यस्य सिद्धिः भवति, कार्यसाधनाय अवश्यम् उद्यमः करणीयः। पूर्वजन्मनि यत् कर्म कृतं तदेव दैवम् इत्युच्यते। तस्मात् दैवोपरि हस्तक्षेपः कर्तुं न शक्यः। अतः दैवविषये अचिन्तयित्वा सर्वैः उद्यमः कर्तव्यः। यथा कश्चित् सिंहः मृगं भक्षयामि इति विचिन्त्य यदि शयनं करोति, तर्हि स न कदापि मृगं भक्षयितुं शक्ष्यति, मृगभक्षणाय तेन धावनं कृत्वा एव मृगस्य मृगयणं कर्तव्यम्। तदनन्तरम् एव स मृगं भक्षयितुं शक्नोति।

**व्याकरणविमर्शः** -

१) मनोरथैः - मनसः रथाः मनोरथाः इति षष्ठीतत्पुरुषसमासः, तैः मनोरथैः।

२) प्रविशन्ति - प्रपूर्वकात् विश्-धातोः लटि प्रथमपुरुषबहुवचने प्रविशन्ति इति रूपम्।

**प्रयोगपरिवर्तनम्** - उद्यमेन कार्यैः सिद्ध्यते, न (तु) मनोरथैः, सुप्तस्य सिंहस्य मुखे मृगैः न हि प्रविश्यते।

**छन्दःपरिचयः** - अयं श्लोकः अनुष्टुप्-छन्दोबद्धः वर्तते।





## पाठगतप्रश्नाः

१. गृहम् आगते अरौ किं कार्यम्?

२. द्रुमः कस्मात् छायां न उपसंहरते?

३. कयोः ग्रहपीडनं भवति?

४. कः बलवान् अस्ति?

५. पुरुषेण कति दोषाः हातव्याः? के च ते?

६. मनुष्याणां महान् रिपुः कः?

७. कः न अवसीदति?

८. किञ्चिज्ज्ञः जनः कीदृशः भवति?

९. यदा किञ्चिज्ज्ञोऽहम्...इत्यादिश्लोके किं छन्दः वर्तते?

१०. जलेन कः वारयितुं शक्यः?

११. कस्य औषधं नास्ति?

१२. कीदृशः अङ्गारः करं दहति?

१३. कः प्रकृतो बान्धवः?

१४. कार्याणि केन सिध्यन्ति?

१५. कस्य मुखे मृगाः न प्रविशन्ति?

१६. क-स्तम्भेन सह ख-स्तम्भं मेलयत -

| **क-स्तम्भः** | **ख-स्तम्भः** |
|---|---|
| १. आतिथ्यम् | क. षट् |
| २. दरिद्रता | ख. रिपुः |
| ३. दोषाः | ग. रिपुः |
| ४. बन्धुः | घ. निशिताङ्कुशेन |
| ५. आलस्यम् | ङ. अरौ |
| ६. नागेन्द्रः | च. शीतः अङ्गारः |
| ७. करं कृष्णयते | छ. मतिमताम् |
| ८.आलस्यं | ज. उद्यमः |



## पाठसारः

चन्द्रसूर्यसदृशदीप्तिमतोः अपि राहुणा ग्रासः भवति, हस्तिसर्पसदृशशक्तिमतोः अपि शृङ्गलेन मन्त्रादिना च बन्धनं भवति, सर्वशास्त्रज्ञाः महाज्ञानिनः अपि दरिद्राः भवन्ति - एतत्सर्वं दृष्ट्वा भाग्यम् एव सर्वनियामकम् इति ज्ञायते। शत्रुः यदि कदापि अतिथिरूपेण गृहम् आगच्छति, तर्हि यथासाध्यं तस्यापि अतिथिसत्कारः अवश्यं कर्तव्यः। यथा वृक्षच्छेदकाः वृक्षच्छेदनेन क्लान्ताः सन्तः तस्य एव छिद्यमानस्य वृक्षस्य छायायाम् आश्रयं नयन्ति, तदा स वृक्षः तेभ्यः स्वछायां न आकर्षति। अस्मिन् जगति यः अभ्युदयं कर्तुम् इच्छति, तेन निद्रा तन्द्रा भयं क्रोधः आलस्यं किञ्च उदासीनता - एते षड् दोषाः त्यक्तव्याः। एतेषां त्यागात् परम् एव अभ्युदयः सम्भवः भवति। आलस्यं मनुष्याणां देहस्थः महान् शत्रुः, यः महद् अनिष्टं जनयति। उद्यमवत् मनुष्याणाम् अन्यः बन्धुः न वर्तते। यः तु उद्यमशीलः पुरुषः, स कदापि विशादग्रस्तो न भवति। यदा जनः किञ्चित् ज्ञानम् प्राप्नोति, तदा अहं सर्वज्ञः अस्मि इति मत्वा स गजवत् मदमत्तः भवति। परन्तु पण्डितानां सकाशं गत्वा स यदा तेषां ज्ञानं पश्यति, तदा तदपेक्षया अहं महामूर्खः अस्मि इति ज्ञानं तस्य भवति। तस्मिन् समये एव तस्य यत् औद्धत्यं सञ्जातम् आसीत् तत् निमिषेणैव निर्गतं भवति।

जलद्वारा अग्निः शामयितुं शक्यते, छत्रधारणेन सूर्यस्य आतपात् रक्षा प्राप्तुं शक्यते, तीक्ष्णाङ्कुशेश मदमत्तहस्तिनः अपि बन्धनं कर्तुं शक्यते, दण्डप्रहारेण गौः गर्दभश्च शामयितुं शक्यते, औषधसेवनेन रोगः परिहर्तुं शक्यः, मन्त्रप्रयोगेण सर्पस्य विषम् अपि शामयितुं शक्यते। एवंरूपेण सर्वासां समस्यानां समाधानं शास्त्रे उक्तं वर्तते, परन्तु मूर्खस्य मूर्खत्वस्य परिहाराय न कश्चित् उपायः वर्तते। दुर्जनैः सह कदापि मैत्री अपि न करणीया, किञ्च शत्रुत्वम् अपि न सम्पादनीयम्। यतो हि उभयोः परिस्थित्योः एव स दुर्जनः हानिं जनयति। यथा उष्णः अङ्गारः हस्तस्य दाहं करोति, किञ्च स एव अङ्गारः शीतः भवति चेत् हस्तं कृष्णवर्णं सम्पादयति। यः जनः विवाहादौ उत्सवसमये, विपत्समये, अन्नकष्टसमये, युद्धसमये, विचारालये, दाहस्थाने च सर्वदैव सर्वस्यां परिस्थितौ एव हितम् इच्छति साहाय्यं करोति च स एव प्रकृतः बन्धुः भवति। कार्यसाधनाय केवलम् इच्छा क्रियते चेदेव तत् कार्यं न सिद्ध्यति, तस्य साधनाय अवश्यम् उद्यमः करणीयः। यथा भोजनार्थं सिंहेन धावनं कृत्वा एव मृगस्य मृगयणं करणीयम्, शयानस्य सिंहस्य मुखे मृगः स्वयम् आगत्य न प्रविशति।



## किमधिगतम्

- गृहम् आगते शत्रौ अपि उचितम् आतिथ्यं करणीयम्।
- विधिः एव सर्वकार्यनियामकः वर्तते।
- निद्रादीनां षण्णां दोषाणां त्यागं विना अभ्युदयः न सम्भवति।
- उद्यमशाली पुरुषः कदापि दुःखग्रस्तः न भवति।



- दुर्जनः सर्वदा उपेक्षणीयः।
- उद्यमेन एव सर्वकार्याणां सिद्धिः सम्भवति।



## पाठान्तप्रश्नाः

१) अतिथिसत्कारविषये संक्षेपेण आलोचयतु।

२) विधेः बलवत्त्वं यथाग्रन्थं प्रतिपादयतु।

३) किञ्चिज्ज्ञाने सति मनुष्येषु जायमानस्य मदस्य संक्षेपेण वर्णनां करोतु।

४) मूर्खस्य का स्थितिः - यथाग्रन्थं प्रतिपादयतु।

५) बान्धवलक्षणं यथाग्रन्थं वर्णयतु।



## पाठगतप्रश्नानाम् उत्तराणि

१. उचितम् आतिथ्यम्।

२. पार्श्वगतात् छेत्तुः।

३. शशिदिवाकरयोः।

४. विधिः।

५. षट्। निद्रा तन्द्रा भयं क्रोधः आलस्यं दीर्घसूत्रता च।

६. आलस्यम्।

७. कुर्वाणः।

८. द्विप इव मदान्धः भवति।

९. शिखरिणी।

१०. हुतभुक्।

११. मूर्खस्य।

१२. उष्णः।

१३. यः उत्सवे व्यसने दुर्भिक्षे राष्ट्रविप्लवे राजद्वारे श्मशाने च तिष्ठति।

१४. उद्यमेन।

१५. सुप्तस्य सिंहस्य।

१६. १-ङ, २-छ, ३-क, ४-ज, ५-ख, ६-घ, ७-च, ८-ग।

# ३

# प्रहेलिकाः समस्याश्लोकाश्च

## प्रस्तावना

अयि प्रियच्छात्राः, अस्मिन् पाठे समस्याश्लोकाः प्रहेलिकाश्लोकाः च युष्माभिः पठ्यन्ते। अस्माकं परम्परायां चतुष्षष्टिः कलाः प्रसिद्धाः। तासु समस्यापूरणं प्रहेलिका च अन्तर्भवतः। अपार्थयुक्तं निरर्थकं असम्भवार्थयुक्तं वा वाक्यं श्लोकस्य प्रायः एकपादरूपेण भवति। तस्य समस्या इति नाम। तस्याः समस्यायाः परिहारं साधुत्वोपपादनं वा कविः स्वप्रतिभासामर्थ्येन करोति। समस्यात्मकम् एकं पादं स्वीकृत्य एवशिष्टेन पादत्रयेण समस्यापरिहारः प्रदर्श्यते। एषः प्राचीनः कविताविनोदप्रकारः भवति। एषा कवेः कल्पनासामर्थ्यस्य निकषा भवति। प्रहेलिका तु क्लिष्टविचित्रार्थयुक्तं वचनं प्रश्नाकारेण प्रायः भवति। तस्य उत्तरं श्लोके न तिष्ठति। तच्च श्लोकपठितृभिः स्वयम् ऊह्यम्। अत्र सुभाषितरत्नभाण्डागार-भोजप्रबन्धादिग्रन्थतः चिताः श्लोकाः प्रदर्श्यन्ते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- समस्यारूपस्य काव्यप्रकारस्य ज्ञानं अत्र भवति यत्र कवीनां कल्पनासामर्थ्यम् अवगम्यते।
- तथाविधानां समस्यानां परिहारे कश्चित् बोधः छात्राणाम् उपजायते।
- संस्कृतसाहित्ये प्रहेलिकानां परिचयः छात्राणां सम्पद्यते।
- प्रहेलिकारूपाणां श्लोकानां रचनायां छात्राणां किञ्चित् मार्गदर्शनं लभ्यते येन उत्साहिताः सुष्ठु नवं प्रहेलिकाकाव्यं रचयितुं प्रभवेयुः।

## ३.१) समस्याश्लोकाः

### ३.१.१) समस्या - ठठण्ठठण्ठं ठठठण्ठठण्ठः।

अस्य समस्यावाक्यस्य कोऽपि अर्थः न ज्ञायते। यतो हि अत्र प्रयुक्तानां शब्दानां शास्त्रे व्यवहारे वा अर्थः नास्ति। अथापि अस्य निरर्थकस्य पदसमुदायस्य कस्मिंश्चित् समुचिते अर्थे समन्वयः कविना साधनीयः अस्ति। कश्चित् कविः समस्यायाः परिहारं प्रदर्शितवान्। यथा -

राजाभिषेके मदविह्वलायाः हस्ताच्च्युतो हेमघटो युवत्याः।
सोपानमासाद्य करोति शब्दं ठठण्ठठण्ठं ठठठण्ठठण्ठः॥ ( भोजप्रबन्धः - ३१७)



**अन्वयार्थः** - राजाभिषेके = राज्ञः स्नानसमये मदविह्वलायाः = कामपीडितायाः, युवत्याः = तरुण्याः, हस्तात् = करात्, च्युतः = भ्रष्टः, हेमघटः = सुवर्णकलशः, सोपानम् = सोपानपङ्क्तियुक्तं मार्गम्, आसाद्य = प्राप्य, शब्दम् = ध्वनिं, करोति = जनयति, ठठंठठंठं ठठठंठठंठः इति।

**भावार्थः** - कस्यचित् राज्ञः स्नानं कारयन्ती अस्ति काचित् युवतिः। सा राज्ञः शारीरिकं सौन्दर्यं दृष्ट्वा कामपीडिता भूत्वा उद्विग्नमनस्का सम्पन्ना। उद्वेगकारणात् तस्याः हस्तात् स्नानोपयोगी सुवर्णकलशः पतितः। तथा पतितः सः कलशः तत्रैव पार्श्वे स्थितां सोपानपङ्क्तिं गत्वा, तत्र भ्रमन् निम्नस्थं गतवान्। तत्र सोपानमार्गेण यदा सः स्खलन् गच्छति तदा ठठण्ठठण्ठं ठठठण्ठठण्ठः इति ध्वनिं करोति। एवं कविः कश्चित् रमणीयं प्रसङ्गं परिकल्प्य समस्यायाः मनोहरं परिहारं प्रदर्शितवान्। अत्र ठठंठठंठम् इत्यादि पदसमुदायः सोपानमार्गेण स्खलतः कलशस्य ध्वनिः इति कवेः आशयः। निरर्थकः स पदसमुदायः कलशध्वनेः अनुकरणध्वनिरूपः इति परिकल्प्य कविः समस्यायाः चमत्कारकारकं परिहारं दर्शयति। अनुकरणरूपस्य शब्दस्य विशिष्टः कोऽपि अर्थः न भवति।

**व्याकरणविशेषः** - राजाभिषेके - राज्ञः अभिषेकः राजाभिषेकः - षष्ठीतत्पुरुषसमासः। तस्मिन् राजाभिषेके।

मदविह्वलायाः - मदेन विह्वला मदविह्वला, तस्याः मदविह्वलायाः - तृतीयातत्पुरुषसमासः।

हेमघटः - हेम्नः घटः - हेमघटः षष्ठीतत्पुरुषसमासः।

आसाद्य - षदलृ - गतौ इति धातुः, अस्मात् स्वार्थिकणिजन्तात् आङुपसर्गपूर्वकात् ल्यप्प्रत्ययः।

## ३.१.२) समस्या - "शतचन्द्रं नभःस्थलम्"।

**समस्यायाः अर्थः** - आकाशं शतचन्द्रयुक्तं वर्तते इति। वयं पश्यामः यत् आकाशे एक एव चन्द्रः विराजते। शतचन्द्रात्मकम् आकाशं न कदापि दृश्यते। तस्मात् आकाशं शतचन्द्रात्मकं वर्तते इति वचनं तु अत्यन्तं वास्तवविरुद्धं भवति। अतः एषा कठिना एव समस्या। तथापि कश्चित् कविश्रेष्ठः प्रतिभाबलेन समीचिनं परिहारं प्रादर्शयत्। यथा -

दामोदरकराघातविह्वलीकृतचेतसा।

दृष्टं चाणूरमल्लेन शतचन्द्रं नभःस्थलम्॥ ( सुभा-र-भा-समस्या १० )

**अन्वयार्थः** - दामोदरकराघातविह्वलीकृतचेतसा = श्रीकृष्णस्य करप्रहारेण भीतमनस्केन, चाणूरमल्लेन = चाणूरनामकेन मल्लेन, शतचन्द्रम् = शतचन्द्रयुक्तम्, नभःस्थलम् = आकाशम्, दृष्टम् = अवलोकितम्।

**भावार्थः** - द्वापरयुगे चाणूरनामकः राक्षसः आसीत्। श्रीकृष्णः मुष्टिप्रहारेण तं हतवान् इति पुराणेषु कथा श्रुयते। तां कथामाधारिकृत्य कविः अस्याः समस्यायाः परिहारं प्रदर्शितवान्।



श्रीकृष्णः चाणूरस्य कराघातं कृतवान्। तदा भूमिं पतितः चाणूरः भयेन कम्पितः तथा कम्पमानेन तेन एकचन्द्रयुक्तमपि आकाशम् अनेकचन्द्रयुक्तमिव दृष्टम्। एवं भयकम्पितस्य चाणूरस्य समस्यायाः परिहारः रमणीयतया प्रदर्शितः।

**व्याकरणविशेषः** - दामोदरस्य करः दामोदरकरः - षष्ठीतत्पुरुषसमासः दामोदरकरस्य आघातः दामोदरकराघातः - षष्ठीतत्पुरुषसमासः, दामोदरकराघातेन विह्वलीकृतं चेतः यस्य सः - दामोदरकराघातविह्वलीकृतचेतसा - बहुव्रीहिसमासः।

चाणूरमल्लः - चाणूरश्च असौ मल्लः - चाणूरमल्लः - कर्मधारयसमासः।

शतचन्द्रम् - शतं चन्द्राः यस्मिन् तत् - शतचन्द्रम् - बहुव्रीहिसमासः।

नभःस्थलम् - नभसः स्थलं नभःस्थलम् - षष्ठीतत्पुरुषसमासः अथवा नभ एव स्थलं नभःस्थलम् - कर्मधारयसमासः।

## ३.१.३) समस्या - गगनं भ्रमरायते।

**समस्यायाः अर्थः** - अत्र अयमर्थः भवति यत् आकाशं भ्रमरवत् भवति। वयं पश्यामो यत् आकाशं नाम अपरिमितं भवति यस्य परिमाणं न कोऽपि ज्ञातुं पारयति। अनन्ताः लोकाः आकाशे एव अन्तर्गताः। तादृशं महत् आकाशं भ्रमरः इव भवति इत्येवमेषा महती समस्या वर्तते। आकाशस्य परिमाणं कुत्र, भ्रमणस्य परिमाणं कुत्र। एवम् अत्यन्तविरुद्धार्थत्वात् एषा समस्या। कश्चित् कविः अस्याः परिहारं चमत्काररुपेण कृतवान्।

स्वस्ति क्षत्रियदेवाय जगद्देवाय भूभुजे।

यद्यशःपुण्डरीकान्तः गगनं भ्रमरायते॥ (सुभा.र.भा.समस्या १७)

**अन्वयार्थः** - क्षत्रियदेवाय = क्षत्रियश्रेष्ठाय, जगद्देवाय - जगतः आराध्याय, भूभुजे = भूमिपालकाय राज्ञे, स्वस्ति = शुभं भवतु, यज्ञशःपुण्डरीकान्तः = यस्य कीर्तिरूपकमलस्य अन्तः, गगनम् = आकाशम्, भ्रमरायते = भ्रमरः भवति।

**भावार्थः** - क्षत्रियश्रेष्ठः कश्चित् राजा। सः स्वचरितेन जगद्देवः अभवत् यः आराध्यः इति प्रजाः मन्यन्ते स्म। सः प्रजापालनादिभिः राज्ञः कर्तव्यैः सर्वलोकप्रसिद्धः जातः। तस्य कीर्तिः सर्वलोकेषु प्रसृता आसीत्। तस्य कीर्तेः अतिशयं वर्णयन् कविः उक्तवान् यत् तस्य राज्ञः कीर्तिरूपे कमले आकाशमपि भ्रमरवत् अन्तर्भवति।

अत्र आकाशं भ्रमरं कर्तुं कविः राज्ञः कीर्तिः पुण्डरीकम् अर्थात् कमलम् इति समुचितं मनोहरं कल्पनं कृतवान्। तेन भ्रमरभूतम् आकाशं कमले अन्तर्भवति इति सिद्ध्यति। ततः समस्या परिहृता भवति।

**व्याकरणविशेषः** - यद्यशःपुण्डरीकान्तः - यस्य यशः - यद्यशः - षष्ठीत्पुरुषसमासः, यद्यशः एव पुण्डरीकं यद्यशःपुण्डरीकम् - कर्मधारयसमासः, यद्यशःपुण्डरीकस्य अन्तः यद्यशःपुण्डराकान्तः - षष्ठीतत्पुरुषसमासः



## ३.१.४) समस्या - मृगात् सिंहः पलायते।

**समस्यायाः अर्थः** - मृगात् अर्थात् हरिणात् सिंहः मृगराजः इति प्रसिद्धः सिंहः। तस्य शौर्यं क्रौर्यं च अतीव प्रसिद्धम्। तस्य स्वप्नेनापि मृगाः दूरं पलायनं कुर्युः। सिंहस्तु मृगं भुङ्क्त्वा सुखं शेते। अजस्यापि हन्ता वीरः सिंहः। सः मृगात् पलायनं करोति इति तु अतीव विरुद्धम्।

अतः एषा समस्या नूनं जटिला वर्तते। कविः स्वप्रतिभासामर्थ्येन अस्याः समस्यायाः मनोहरं परिहारं प्रदर्शितवान्। यथा -

हीनहत्या दधात्येव लाघवं महतामपि।

इति मत्वा द्विपद्वेषी मृगात् सिंहः पलायते॥ (सुभा. र. भा. समस्या - ४)

**अन्वयार्थः** - हीनहत्या = सामर्थ्यापेक्षया तुच्छानां दुर्बलानां वा हननम्, महताम् अपि = उन्नतानां श्रेष्ठानामपि, लाघवम् = लघुत्वं तुच्छत्वम् इति भावात्, दधात्येव = निश्चयेन जनयति, इति मत्वा = एवम् आलोच्य, द्विपद्वेषी = गजस्य शत्रुः, सिंहः = केसरी, मृगात् = हरीणात्, पलायते = पलायनं करोति।

**भावार्थः** - अत्र कवेः आशयः एवमस्ति यत् मम समबलः मृगः न भवति इति तु यूद्धादिसाहसकार्यं समानबलयोः द्वयोर्मध्ये भवेत् इति नियमः। असमानेषु युद्धम् अधार्मिकं भवति। बलहीनेन सह बलिष्ठः युद्धं न कुर्यात्। अतः सिंहः मृगं लब्ध्वापि प्रतिष्ठाभङ्गभयात् मृगात् पलायते इति कवेः आशयः। एवं मृगात् सिंहस्य पलायने प्रतिष्ठानिरूपणं कारणम् उपस्थाप्य कविः समस्यायाः समुचितं परिहारं प्रदर्शितवान्।

**व्याकरणविशेषः** - हीनहत्या - हीनस्य हत्या - हीनहत्या - षष्ठीतत्पुरुषसमासः।

दधाति + एव - दधात्येव - यण् सन्धिः।

## ३.१.५) समस्या - पिपीलिका चुम्बति चन्द्रमण्डलम्।

**समस्यायाः अर्थः** - पिपीलिका चन्द्रबिम्बं चुम्बति इति समस्यायाः तात्पर्यम्। अत्र समस्यायाः मर्म इदं भवति यत् भूमौ स्थितापि पिपीलिका अन्तरीक्षे स्थितं चन्द्रबिम्बं चुम्बति इति वचनेन समस्यायाः कठिनता वर्धिता। इदम् असम्भवरूपं वचनं नूनं महती समस्या भवति। कश्चित् कविः अस्याः परिहारं दर्शयति। यथा -

सतीवियोगेन विषण्णचेतसः प्रभोः शयानस्य हिमालयगिरौ।

शिवस्य चूडाकलितं सुधाशया पिपीलिका चुम्बति चन्द्रमण्डलम्॥

**अन्वयार्थः** - सतीवियोगेन = सतीदेव्याः वियोगात्, पिपीलिका = पिपीलिकाख्यः जन्तुः, विषण्णचेतसः = खिन्नमनस्कस्य, हिमालये = हिमालयनामके, गिरौ = पर्वते, शयानस्य = शयनं कुर्वाणस्य, प्रभोः = जगत्स्वामिनः, शिवस्य = शङ्करस्य, चूडाकलितं = चूडायां स्थितम्, चन्द्रमण्डलम् = चन्द्रबिम्बम्, सुधाशया = अमृतस्य इच्छया, चुम्बति = चुम्बनं करोति।



**भावार्थः -** दक्षप्रजापतेः पुत्री सतीनामिका पूर्वं शिवस्य पत्नी आसीत्। सा यज्ञकुण्डे देहत्यागम् अकरोत् इति पुराणकथा श्रूयते। तदा पत्न्याः वियोगात् शिवः खिन्नो जातः। सः दुःखी भूत्वा हिमालयपर्वतस्थले एव शयितः आसीत्। तदा तस्य शिरसि स्थितं चन्द्रबिम्बं भूस्पर्शि जातम्। चन्द्रात् अमृतं स्रवति इति प्रसिद्धिः। अमृतरसेन आकुण्ठा पिपीलिका अमृतरसं पातुं चन्द्रबिम्बं चुम्बति। एवम् अत्र कविः पुराणवृत्तान्तमेवम् आश्रित्य अत्यन्तरमणीयरीत्या समस्यायाः परिहारं साधयति।

**व्याकरणविशेषः -** सत्याः वियोगः सतीवियोगः - षष्ठीतत्पुरुषसमासः। विषण्णचेतसः - विषण्णं चेतः यस्य सः विषण्णचेताः तस्य विषण्णचेतसः - बहुव्रिहिसमासः। सुधाशया - सुधायाः आशा सुधाशा तया सुधाशया - षष्ठीतत्पुरुषसमासः।

## ३.१.६) समस्या - पुरः पत्युः कामात् श्वशुरमियमालिङ्गति सती।

**समस्यायाः अर्थः** - एषा साध्वी पत्युः पुरस्तात् कामकारणात् श्वशुरम् आलिङ्गति इति समस्यायाः अर्थः भवति।

समस्यायाः स्वरूपं भवति यत् साध्वी स्त्री नाम पतिं देवं मन्वाना परपुरुषं कामबुद्ध्या स्वप्नेऽपि न पश्यति इत्येवं लोके श्रूयते। किन्तु एषा साध्वी पतिदेवस्य पुरस्तादेव कामावेशेन पतिं नालिङ्गति अपितु श्वशुरम् आलिङ्गति। एषः व्यवहारः वेश्यायाः भवितुमर्हति। किन्तु साध्व्याः ईदृशः व्यवहारः वर्तते, तत् कथं स्यादित्येव समस्यायाः काठिन्यं वर्तते। तथापि कस्यचित् कवेः प्रतिभा अत्र परिहारं दर्शयति। यथा -

कदाचित्पाञ्चाली विपिनभुवि भीमेन बहुशः
कृशाङ्गि श्रान्तासि क्षणमिह निषीदेति गदिता।
शनैः शीतच्छायं तटविटपिनं प्राप्य मुदिता
पुरः पत्युः कामात् श्वशुरमियमालिङ्गति सती॥ (सुभा.र.भा.समस्या - ४५)

**अन्वयार्थः -** कदाचित् = कस्मिंश्चित् दिवसे, विपिनभुवि = वनप्रदेशे, कृशाङ्गि = हे तन्वङ्गि, बहुशः = प्रायशः, श्रान्ता असि = श्रमं प्राप्ता असि, इह = अत्र, क्षणम् = क्षणकालं यावत्, निषीद = उपविश, इति = इत्येवम्, भीमेन = भीमसेनेन वृकोदरेण इति यावत्, गदिता = उक्ता, इयम् = एषा, सती = साध्वी, पाञ्चाली = द्रौपदी, शनैः = मन्दं मन्दम्, शीतच्छायाम् = शीतलच्छायायुक्तम्, तटविटपिनं = पार्श्वस्थं वृक्षम्, प्राप्य = उपगम्य, मुदिता = सन्तुष्टा, पत्युः = भीमस्य, पुरः = पुरस्तात्, कामात् = कामभावेन, श्वशुरम् = वायुम्, आलिङ्गति = परिष्वजति।

**भावार्थः -** महाभारते पाण्डवानां वनवासवृत्तान्तः वर्तते। तमाश्रित्य कविः अत्र समस्यायाः परिहारं दर्शयति। पाण्डवानां वनवासप्रसङ्गे कदाचित् घर्मसमयः प्राप्तः। एकदा घर्मेण श्रान्तां द्रौपदीं दृष्ट्वा भीमः अवदत् यत् हे द्रौपदि त्वं श्रान्ता असि, अत्र किञ्चित्कालं यावत् उपविश इति। तदा भीमस्य प्रेमवचसा सा तत्रैव शीतलच्छायायुक्तं वृक्षम् उपगम्य उपविष्टा। तेन तस्याः महान् आनन्दः जातः। तत्र वायुरपि सम्यक् प्रवहति। तत्र द्रौपदी घर्मश्रमापनयनाय वायुं सेवते। वायुः भीमस्य पिता। अत एव द्रौपद्याः



श्वशुरोऽपि स भवति। एतेन प्रसङ्गेन सती पत्युः पुरस्तात् श्वशुरमालिङ्गति इति सिद्धं भवति। एवं अस्याः समस्यायाः परिहारः प्रदर्शितः।

**व्याकरणविशेषः** - विपिनभुवि - विपिनस्य भूः विपिनभूः - षष्ठीतत्पुरुषसमासः, तस्यां विपिनभुवि।

तटविटपिनम् - तटस्य विटपी तटविटपी तं तटविटपिनम् - षष्ठीतत्पुरुषसमासः।



## पाठगतप्रश्नाः-१

१. हेमघटः कस्याः हस्तात् च्युतः।

२. कुतः हेमघटः हस्तात् च्युतः।

३. चाणूरः कः।

४. गगनं कुत्र भ्रमरायते।

५. जगद्देवः इत्यत्र विग्रहः कथम्।

६. द्विपद्वेषी कः।

७. ठठंठठः इत्यादिः कस्य अनुकरणशब्दः

८. भीमः कस्य पुत्रः।

९. किं पुण्डरीकरूपेण कल्पितम्।

१०. हीनहत्या किं करोति।

## ३.२) प्रहेलिकाश्लोकाः

**कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी।**
**पञ्चभर्त्री न पाञ्चाली यो जानाति स पण्डितः॥ (सुभा. र. भा. प्रहेलि - २५)**

**अन्वयार्थः** - कृष्णमुखी = कृष्णवर्णात्मकमुखवती, न मार्जारी = बिडाली न भवति। द्विजिह्वा = जिह्वाद्वययुक्ता न च सर्पिणी = भुजङ्गी न भवति। पञ्चभर्त्री = पञ्चपतियुक्ता, न पाञ्चाली = द्रौपदी न भवति। (ईदृशीम् इत्यध्याहार्यम्) यः जानाति = यो जनः वेत्ति, स = सः जनः, पण्डितः = विद्वान् भवति।

**भावार्थः** - काचित् अस्ति श्यामलवर्णात्मकमुखवती भवति। परन्तु सा न मार्जारी भवति। सा पुनः जिह्वाद्वयं धारयति तथापि सर्पिणी न भवति। सैव पञ्चभिः पतिभिः सह वर्तते। द्रौपदी न भवति। ईदृशीं विलक्षणां यः जानाति सः प्राज्ञः भवति इति तात्पर्यार्थः।

अयि प्रियच्छात्राः, ईदृशीं स्वयमालोच्य भवन्तो जानन्तु, पण्डिताश्च भवन्तु।



**व्याकरणविशेषः -** कृष्णमुखी - कृष्णं मुखं यस्याः सा कृष्णमुखी बहुव्रीहिसमासः।

द्विजिह्वा - द्वे जिह्वे यस्याः सा द्विजिह्वा - बहुव्रीहिसमासः।

पञ्चभर्त्री - पञ्च भर्तारः यस्याः सा पञ्चभर्त्री - बहुव्रीहिसमासः।

**वने जाता वने त्यक्ता वने तिष्ठति नित्यहाः।**
**पण्यस्त्री न तु वेश्या यो जानाति स पण्डितः॥ (सुभा. र. भा. प्रहेलि.२)**

**अन्वयार्थः** -

सा - असौ, वने - अरण्ये, जाता - सञ्जाता, वने - जले, त्यक्ता - परित्यक्ता भवति, नित्यशः - सर्वदा, वने - जले, तिष्ठति - वर्तते, (सा) पण्यस्त्री - धनेन क्रेतुं शक्या, न तु वेश्या - जारिणी न भवति। (ईदृशीम्) यः - यो जनः, जानाति - वेत्ति, सः - सः जनः, पण्डितः - विद्वान् भवति।

**भावार्थः** -

सा काचित् अरण्ये सञ्जाता अस्ति। जले एव परित्यज्यते। अपि च सा जले एव तिष्ठति। तथैव सा धनेन क्रीत्वा उपभोक्तुं शक्या, तावता सा वेश्या न भवति। ईदृशीं विलक्षणां यः आलोच्य ज्ञातुमर्हति सः कुशलः पण्डितः भवति इत्यर्थः।

अयि प्रियच्छात्राः ईदृशी का इति पर्यालोचयत, पण्डिताः भवत।

**व्याकरणविशेषः** -

पण्यस्त्रीः - पण्या च असौ स्त्री पण्यस्त्री - कर्मधारयसमासः

वनम् इति पदं अरण्यार्थे यथा वर्तते तथा जलार्थेऽपि वर्तते।

आपः स्त्रीभूम्नि वार्वारि सलिलं कमलं जलम्।

पयः कीलालममृतं जीवनं भुवने वनम्॥ (इत्यमरः)

**वृक्षाग्रवासी न च पक्षिराजः त्रिनेत्रधारी न च शूलपाणिः।**
**त्वग्वस्त्रवासी न च सिद्धयोगी जलं च बिभ्रत् न घटो न मेघः॥ (सुभा. र. भा. प्रहेलि। ४१)**

**अन्वयार्थः** -

वृक्षाग्रवासी - वृक्षोपरि निवासवान्, न च पक्षिराजः - पक्षिश्रेष्ठः न भवति, त्रिनेत्रधारी - नेत्रत्रयधारी, न च शूलपाणिः - शिवः न भवति, त्वग्वस्त्रवासी - त्वग्रूपवस्त्रधारी न च सिद्धयोगी - महायोगिपुरुषः न भवति, जलम् - उदकम्, बिभ्रत् - धारयन्, न घटः - घटो न भवति, न मेघः - मेघः न भवति।

**भावार्थः** -



कश्चित् तादृशः पदार्थविशेषः अस्ति यः वृक्षोपरि तिष्ठति। किन्तु पक्षिश्रेष्ठः स न भवति। त्रीणि नेत्राणि धारयति। परन्तु सः शिवो न भवति। अपि च सः त्वग्रूपं वस्त्रं धारयति। तथापि योगिपुरुषः न भवति यः वृक्षत्वचि निर्मितं वस्त्रं धारयेत्। स पुनः जलं धारयति। किन्तु नायं घटो भवति, नापि मेघो भवति। एवम् अत्यन्तविचित्रः पदार्थविशेषः कः स्यात्? इति कविः पुच्छन् अस्ति।

**व्याकरणविशेषः -**

वृक्षाग्रवासी - वृक्षस्य अग्रः वृक्षाग्रः - षष्ठीतत्पुरुषसमासः, वृक्षाग्रे वस्तुं शीलं यस्य अस्ति स वृक्षाग्रवासी - उपपदसमासः।

पक्षीराजः - पक्षिणां राजा - पक्षिराजः, षष्ठीतत्पुरुषसमासः।

त्रिनेत्रधारी - त्रीणि नेत्राणि धारयितुं शीलम् अस्य अति त्रिनेत्रधारी - उपपदसमासः।

शूलपाणिः - शूलः पाणौ यस्य सः शूलपाणिः - बहुव्रीहिसमासः।

त्वग्वस्त्रवासी - त्वक् एव वस्त्रं त्वगवस्त्रम् - कर्मधारयसमासः, त्वग्वस्त्रं वस्तुं शीलम् अस्येति त्वग्वस्त्रवासी - उपपदसमासः।

सिद्धयोगी - सिद्धश्च असौ योगी सिद्धयोगी - कर्मधारयसमासः।



## पाठगतप्रश्नाः-२

११. पण्यस्त्री इव का उक्ता।

१२. लेखन्याः पञ्चभर्तारः के।

१३. द्विजिह्वा का।

१४. नारिकेलस्य योगिनश्च कीदृशं वस्त्रम्।

१५. पत्रस्य स्फुटवक्तृत्वं कथं सिद्ध्यति।

१६. पक्षिराजः इत्यत्र कथं विग्रहः।

---

**वृक्षाग्रे च फलं दृष्टं फलाग्रे वृक्ष एव च।**
**अकारादिसकारान्तं यो जानाति स पण्डितः॥**

**अन्वयः** - वृक्षाग्रे फलं दृष्टम्, फलाग्रे वृक्षः एव च। अकारादिसकारान्तं यः जानाति स पण्डितः (अस्ति)।

**अन्वयार्थः** - वृक्षाग्रे पादपस्य अग्रभागे फलं दृष्टम् अवलोकितम्, फलाग्रे फलस्य अग्रभागे वृक्षः पादपः एव च। अकारादिसकारान्तम् आदौ अकारविशिष्टम् अन्ते सकारविशिष्टं च यः जानाति अवजानाति स पण्डितः विद्वान् (अस्ति)।



**भावार्थः** - अस्यां प्रहेलिकायाम् एकः प्रश्नः वर्तते। तस्य उत्तरस्य लाभाय बह्व्यः सूचनाः दीयन्ते अस्मिन् श्लोके। स प्रश्नो हि - तादृशं किं फलं यत् वृक्षस्य अग्रभागे लगति। किञ्च तस्य फलस्य अग्रभागे पुनः वृक्षवत् पत्राणि भवन्ति। अपि च तस्य नाम्नः आद्यक्षरं हि अकारः, अन्तिमाक्षरं च सकारः। एवं चतस्रः सूचनाः दत्ताः अत्र। एतदनन्तरं यः जनः अस्य प्रश्नस्य उत्तरदाने समर्थः भवति स हि महापण्डितः। अस्य उत्तरं हि अनानास-इति फलम्। अनानासफलं तद्वृक्षस्य अग्रभागे लगति। किञ्च अनानासफलस्य अग्रे पुनः वृक्षवत् पत्राणि भवन्ति। अनानस – इत्यस्य आद्यक्षरं हि अकारः, अन्तिमाक्षरं च सकारः। एवम् अस्याः प्रहेलिकायाः उत्तरं भवति अनानासफलम्।

**व्याकरणविशेषः** -

- वृक्षाग्रे - वृक्षस्य अग्रः वृक्षाग्रः इति षष्ठीतत्पुरुषसमासः, तस्मिन् वृक्षाग्रे।
- दृष्टम् - दृश्-धातोः क्तप्रत्यये दृष्टम् इति रूपम्।
- अकारादिसकारान्तम् - अकारः आदिः यस्य तत् अकारादि इति बहुव्रीहिसमासः। सकारः अन्ते यस्य तत् सकारान्तम् इत्यपि बहुव्रीहिसमासः। अकारादि च तत् सकारान्तम् अकारादिसकारान्तम् इति कर्मधारयसमासः।

**सन्धिकार्यम्** -

- वृक्ष एव = वृक्षः + एव।
- यो जानाति = यः + जानाति।

**नित्यं रथेन गच्छामि अश्वा वहन्ति मे रथम्।**
**सम्राडस्मि नरो नास्मि नासुरोऽस्मि निशाचरः॥**

**अन्वयः** - नित्यं रथेन गच्छामि, अश्वाः मे रथं वहन्ति। सम्राट् अस्मि नरः न अस्मि, असुरः अस्मि निशाचरः न।

**अन्वयार्थः** - नित्यं सर्वदा रथेन स्यन्दनेन गच्छामि यामि, अश्वाः वाहाः मे मम रथं स्यन्दनं वहन्ति नयन्ति। सम्राट् राजा अस्मि भवामि नरः मनुष्यः न अस्मि भवामि, असुरः प्राणदायकः अस्मि भवामि निशाचरः राक्षसः न।

**भावार्थः** - अस्यां प्रहेलिकायाम् एकः प्रश्नः वर्तते। तस्य उत्तरस्य लाभाय बह्व्यः सूचनाः अपि प्रदीयन्ते अस्मिन् श्लोके। स प्रश्नो हि - तादृशः कः वर्तते यः सर्वदा राजावत् रथेन एव गच्छति। अश्वाः च तस्य रथं वहन्ति। स सम्राट् अर्थात् सम्यक् शोभमानः वर्तते, परन्तु स्वयं मनुष्यः नास्ति। स स्वयम् सर्वेभ्यः प्राणान् ददाति, परन्तु निशाचरः नास्ति। अस्य प्रश्नस्य उत्तरं हि सूर्यः। यतो हि सूर्यः नृपवत् आकाशे अरुणचालितेन रथेन सञ्चरति। सप्त अश्वाः सूर्यस्य रथं वहन्ति। सूर्यः आकाशे अत्यधिकं भासते। तस्मात् स सम्राट् वर्तते। परन्तु सूर्यः न मनुष्यः। स असून् प्राणान् ददाति इति वयं सर्वे जानीमः। स एव जगतः उत्पादकः वर्तते, अतः स असुरः। परन्तु स न रात्रिचरः अर्थात् रात्रौ न चरति, स तु दिवा एव चरति।



**व्याकरणविशेषः -**

- सम्राट् - सम्यक् राजते इति सम्राट्।
- निशाचरः - निशायां चरति इति निशाचरः। तस्य राक्षसः इत्यर्थः।

**सन्धिकार्यम् -**

- अश्वा वहन्ति = अश्वाः + वहन्ति।
- सम्राडस्मि = सम्राट् + अस्मि।
- नासुरोऽस्मि = न + असुरः + अस्मि।

**अनेकसुशिरं वाद्यं कान्तं च ऋषिसंज्ञितम्।**
**चक्रिणा च सदाराध्यं यो जानाति स पण्डितः॥**

**अन्वयः** - अनेकसुशिरं वाद्यं कान्तम् ऋषिसंज्ञितं चक्रिणा च सदा आराध्यं यः जानाति स पण्डितः।

**अन्वयार्थः** - अनेकसुशिरम् अनेकशिरोविशिष्टं, वाद्यं वादनसाधनं वकारादि वा, कान्तं सुन्दरं ककारान्तं वा, ऋषिसंज्ञितम् ऋषिनामसदृशनामविशिष्टं, चक्रिणा विष्णुना सर्पेण वा, च सदा सर्वदा आराध्यं पूज्यं यः जानाति अवजानाति स पण्डितः विद्वान्।

**भावार्थः** - इयं प्रहेलिका भ्रमजनिका वर्तते। यः इमां प्रहेलिकां प्रथमं पठति सः अस्याः अर्थम् एव अवगच्छति यत् तादृशं किं वाद्यं वर्तते यत् अनेकशोभनशिरोविशिष्टं सुन्दरम् ऋषिनामसदृशनामविशिष्टम् अस्ति, अपि च विष्णुना सर्वदा एव पूज्यं वर्तते इति। प्रहेलिकायाः एवम् अर्थे कृते पाठकः अस्याः उत्तरं निर्णेतुं कदापि समर्थः न भवति। अयम् अर्थः तु भ्रमात्मकः एव। तस्मात् अयम् अर्थः अत्र न विचारणीयः। अत्र प्रकृतं प्रश्नस्वरूपं हि - तादृशं किं वस्तु यस्य बहूनि शिरांसि वर्तन्ते, यस्य आद्यक्षरं वकारः, अन्तिमाक्षरं च ककारः अस्ति। किञ्च यस्य नाम कस्यचित् ऋषेः नाम्ना सदृशम्। अपि च तत् वस्तु सर्पैः सर्वदा एव इष्यते। यः अस्य प्रश्नस्य उत्तरदाने समर्थः स महापण्डितः वर्तते इति ज्ञेयम्।

तत् उत्तरं हि वल्मीक-इति अर्थात् सर्पाणां निवासस्थानम्। वल्मीके बहूनि छिद्राणि भवन्ति। अपि च वल्मीकस्य आद्यक्षरं वकारः, अन्तिमाक्षरं च ककारः अस्ति। अस्य नाम च ऋषेः वाल्मीकेः नाम्ना सदृशं वर्तते। किञ्च एतत् सर्पाणां निवासस्थानत्वात् तेषाम् अत्यन्तप्रियं वर्तते। एवम् अस्याः प्रहेलिकायाः उत्तरं हि वल्मीकम् इति।

**व्याकरणविशेषः -**

१. अनेकसुशिरम् - शोभनानि शिरांसि सुशिरांसि इति गतिसमासः। अनेकानि सुशिरांसि यस्य तत् अनेकसुशिरम् इति बहुव्रीहिसमासः।

२. वाद्यम् - व् आद्यं यस्य तत् वाद्यम् इति बहुव्रीहिसमासः।

३. कान्तम् - क् अन्ते यस्य तत् कान्तम् इति बहुव्रीहिसमासः।



**सन्धिकार्यम् -**

१. सदाराध्यम् = सदा + आराध्यम्।

२. स पण्डितः = सः + पण्डितः।

**न तस्यादिर्न तस्यान्तो मध्ये यस्तस्य तिष्ठति।**
**तवाप्यस्ति ममाप्यस्ति यदि जानासि तद् वद॥**

**अन्वयः** - न तस्यादिः (अस्ति), न तस्य अन्तः (अस्ति), तस्य मध्ये यः तिष्ठति। तव अपि अस्ति, मम अपि अस्ति, यदि जानासि तद् वद।

**अन्वयार्थः** - न नकारः, तस्यादिः तस्य आद्यक्षरं, (अस्ति), न नकारः, तस्य अन्तः अन्तिमाक्षरं, (अस्ति), तस्य मध्ये मध्यभागे, यः यकारः, तिष्ठति वर्तते। तव भवतः, अपि अस्ति विद्यते, मम मे अपि अस्ति विद्यते, यदि जानासि अवजानासि, तद् वद भाषस्व।

**भावार्थः** - इयं प्रहेलिका अपि भ्रमजनिका वर्तते। यः इमां प्रहेलिकां प्रथमं पठति सः अस्याः अर्थम् एव अवगच्छति यत् एवं किं वस्तु वर्तते, यस्य आरम्भः न वर्तते, अपि च यस्य कदापि समाप्तिः अपि न भविष्यति। अर्थात् तत् वस्तु अनादि अनन्तं च वर्तते। किञ्च तत् सर्वेषां समीपे अस्ति इति। प्रहेलिकायाः एवम् अर्थे कृते पाठकः कदापि अस्याः उत्तरं निर्णेतुं समर्थः न भवति। अयम् अर्थः तु भ्रमात्मकः एव। तस्मात् अयम् अर्थः अत्र न विचारणीयः। अत्र प्रश्नस्वरूपं हि तादृशं किं वस्तु यस्य नाम्नः आद्यक्षरं नकारः, अन्तिमाक्षरम् अपि नकारः वर्तते। किञ्च तस्य मध्यमाक्षरं हि यकारः। तत् च वस्तु सर्वेषां समीपे एव वर्तते इति।

तत् उत्तरं हि नयन-इति अर्थात् चक्षुः। नयनस्य आद्यक्षरं हि नकारः, अन्तिमाक्षरम् अपि नकारः। किञ्च तस्य मध्ये यकारः वर्तते। अपि च सर्वेषां जीवानाम् एव नयनं वर्तते। एवम् अस्याः प्रहेलिकायाः उत्तरं भवति नयनम् इति।

**सन्धिकार्यम् -**

१. तस्यादिर्न = तस्य + आदिः + न।

२. तस्यान्तः = तस्य + अन्तः।

३. यस्तस्य = यः + तस्य।

**मुखे हस्तद्वयं धत्ते, सर्वथा जागरूका सा।**
**प्रतिक्षणं वदन्तीव, प्राणाश्च पिञ्जिताः सदा॥**

**अन्वयः** - सा मुखे हस्तद्वयं धत्ते, सर्वथा जागरूका, प्रतिक्षणं वदन्ति इव, (तस्याः) प्राणाः सदा पिञ्जिताः।

**अन्वयार्थः** - सा मुखे वदने हस्तद्वयं भुजद्वयं धत्ते धरति, सर्वथा सर्वदा जागरूका जागरिता, प्रतिक्षणं सर्वसमयं वदन्ति कथयन्ति इव, (तस्याः) प्राणाः असवः सदा सर्वदा पिञ्जिताः बद्धाः।



**भावार्थः** - अस्यां प्रहेलिकायाम् एकः प्रश्नः वर्तते। तस्य उत्तरस्य लाभाय बह्व्यः सूचनाः अपि प्रदीयन्ते अस्मिन् श्लोके। स प्रश्नो हि - तादृशी का व्यक्तिः अस्ति, या स्वस्याः मुखे एव द्वौ हस्तौ धारयति, अर्थात् तस्याः मुखे एव हस्तद्वयं वर्तते। किञ्च सा कदापि शयनं न करोति, सर्वदैव जागरूका तिष्ठति। अपि च सा सर्वेभ्यः मनुष्येभ्यः प्रत्येकस्य क्षणस्य ज्ञानं कारयति। परन्तु तस्याः प्राणाः बद्धाः वर्तन्ते, अर्थात् सा स्वाधीना नास्ति। एवं प्रश्नस्यास्य समाधानाय चतस्रः सूचनाः दत्ताः।

अस्य प्रश्नस्य उत्तरं भवति घटिका। घटिकायाः मुखप्रदेशे अर्थात् सम्मुखभागे समयनिर्धारणाय द्वौ बृहद्दण्डौ वर्तेते। तयोः एकः निमेषदण्डः इत्युच्यते, अन्यश्च होरादण्डः इत्युच्यते। तौ च दण्डौ घटिकायाः हस्तस्वरूपौ वर्तेते। अपि च घटिका सर्वदैव जागरूका तिष्ठति। रात्रौ सर्वेः जनाः यदा शयनं कुर्वन्ति तदा अपि सा स्वस्याः समयज्ञापनकार्ये निरता भवति, कदापि शयनं न करोति। एवं च सा सर्वेभ्यः मनुष्येभ्यः प्रतिक्षणस्य ज्ञानं कारयति। घटिकामाध्यमेन एव जनानां जीवनं सुष्ठुतया चलति। समयज्ञानात् विना न कोऽपि सुष्ठुतया कार्यं कर्तुं शक्नोति। अतः समयज्ञापनद्वारा सा सर्वेषां महदुपकारं सम्पादयति। परन्तु सा स्वाधीना न वर्तते। तस्याः प्राणाः बद्धाः सन्ति। विद्युत्कोशः समाप्तः भवति चेत् सा मृता भवति, नवीनविद्युत्कोशे प्राप्ते सति पुनः जीवति सा। एवम् अस्याः प्रहेलिकायाः उत्तरं भवति घटिका इति।

**व्याकरणविशेषः -**

१. धत्ते - धा-धातोः आत्मनेपदिनः लट्-लकारे प्रथमपुरुषैकवचने धत्ते इति रूपम्।

**सन्धिकार्यम् -**

१. वदन्तीव = वदन्ति + इव।

२. प्राणाश्च = प्राणाः + च।

**सदारिमध्यापि न वैरियुक्ता**
**नितान्तरक्तापि सितैव नित्यम्।**
**यथोक्तवादिन्यपि नैव दूती**
**का नाम कान्तेति निवेदयाशु॥**

**अन्वयः** - सदारिमध्या अपि वैरियुक्ता न, नितान्तरक्तापि नित्यं सिता एव। यथोक्तवादिनी अपि दूती न एव। का नाम कान्ता इति आशु निवेदय।

**अन्वयार्थः** - सदारिमध्या सर्वदा शत्रुजनमध्यस्थिता मध्ये रि-इत्यक्षरवती वा, अपि वैरियुक्ता शुत्रयुता, न, नितान्तरक्तापि अत्यन्तारक्ता अत्यन्तरक्तवर्णा वा, नित्यं सर्वदा, सिता एव श्वेतवर्णा, यथोक्तवादिनी स्पष्टवादिनी अपि दूती न एव। का नाम कान्ता स्त्री अन्ते ककारवती वा इति आशु शीघ्रं निवेदय ज्ञापय।

**भावार्थः** - इयं प्रहेलिका भ्रमजनिका वर्तते। यः इमां प्रहेलिकां प्रथमं पठति सः अस्याः अर्थम् एवम् अवगच्छति यत् तादृशी का कान्ता वर्तते या सर्वदा एव शत्रुजनानां मध्ये तिष्ठति, परन्तु स्वस्याः



शत्रुभिः सह न कोऽपि सम्बन्धो वर्तते। विषयेषु अत्यन्तं तस्याः आसक्तिः वर्तते, परन्तु सा सीतावत् अतिपवित्रा वर्तते। सा सर्वदा अतिस्पष्टं वदति, परन्तु न कस्यापि दूती इति। प्रहेलिकायाः आपातपठनेन सर्वत्र विरोधाभासः प्रतिभाति। प्रहेलिकायाः एवम् अर्थे कृते पाठकः अस्याः उत्तरं निर्णेतुं कदापि समर्थः न भवति। अयम् अर्थः तु भ्रमात्मकः एव। तस्मात् अयम् अर्थः अत्र न विचारणीयः। अत्र प्रश्नस्वरूपं हि - तादृशी का अस्ति यस्या नाम्नः मध्ये रि-इति वर्तते, अत्यन्तं रक्तवर्णा अपि सा सितवर्णेनापि युक्ता वर्तते। दूतवत् यत् शृणोति तत् यथारूपं वदति सा, अपि च तस्या नाम्नः अन्तिमवर्णो हि ककारः।

अस्य प्रश्नस्य उत्तरं हि सारिका। सारिका हि एकः पक्षिः। सारिका-इति नाम्नः मध्ये रि-इति वर्तते। अस्य पक्षिणः शत्रुभिः सह न कोऽपि सम्बन्धो वर्तते। सारिकापक्षिः अत्यन्तरक्तवर्णः वर्तते, परन्तु स सितवर्णेनापि युक्तः वर्तते। दूतवत् सा यत् मनुष्यमुखात् शृणोति तत् यथारूपम् अनुवदति। किञ्च सारिका-इति नाम्नः अन्तिमाक्षरं हि ककारः। अतः अस्याः प्रहेलिकायाः उत्तरं भवति सारिका इति।

**व्याकरणविशेषः** -

१. वैरियुक्ता - वैरिभिः युक्ता वैरियुक्ता इति तृतीयातत्पुरुषसमासः।

२. नितान्तरक्ता - नितान्तं रक्ता इति नितान्तरक्ता।

३. कान्ता - क् अन्ते यस्याः सा कान्ता इति बहुव्रीहिसमासः।

४. निवेदय – निपूर्वकात् विद्-धातोः णिच्प्रत्यये लोटि मध्यमपुरुषैकवचने निवेदय इति रूपम्।

**सन्धिकार्यम्** -

१. सदारिमध्यापि = सदा + अरिमध्या + अपि।

२. नितान्तरक्तापि = नितान्तरक्ता + अपि।

३. सितैव = सिता + एव।

४. निवेदयाशु = निवेदय + आशु।

**आदौ भा शोभते नित्यं रतं पश्चाद् विराजते।**
**देवतानां प्रियं धाम तवाप्यस्ति ममापि च॥**

**अन्वयः** - आदौ नित्यं भा शोभते, पश्चात् रतं विराजते। देवतानां प्रियं धाम, तव अपि अस्ति मम अपि च।

**अन्वयार्थः** - आदौ आदिभागे नित्यं सर्वदा भा भा-इत्यक्षरं शोभते भाति, पश्चात् पृष्ठभागे रतं रतम्-इति शब्दः विराजते राजते। देवतानाम् अमराणां प्रियम् इष्टं धाम स्थानं, तव भवतः अपि अस्ति विद्यते मम मे अपि च।

**भावार्थः** - अस्यां प्रहेलिकायां कस्यचित् स्थानस्य कानिचित् वैशिष्ट्यानि उक्तानि वर्तन्ते। पाठकेन श्लोकसय पठनेन तानि वैशिष्ट्यानि ज्ञात्वा तद्वैशिष्ट्यशालि स्थानं किं भवति इति निर्णेयम्। तानि वैशिष्ट्यानि यथा - तस्य स्थानस्य आदौ सर्वदैव भा वर्तते अर्थात् तस्य नाम्नः आदिशब्दः भा



इति अस्ति, अथवा तस्मिन् स्थाने सर्वदा भाः दीप्तिः वर्तते इत्यपि वक्तुं शक्यते। किञ्च तस्य स्थानस्य नाम्नः पश्चात् रतं विराजते, अर्थात् तस्य नाम्नः अन्तिमशब्दो हि रतम् इति। अपि च तत् स्थानं देवतानाम् अत्यधिकं प्रियं वर्तते। तत् च स्थानम् अस्माकं सर्वेषां वर्तते।

तत् स्थानं भवति भारतम् इति। भारत-इति नाम्नः आदिमशब्दो हि भा इति, किञ्च श्रीरामचन्द्र-व्यास-वाल्मीकि-प्रभृतयः महान्तः ज्ञानिनः अस्मिन् भारतवर्षे जनिम् अलभन्त। तस्मात् तेषां ज्ञानप्रभावात् भारतदेशः सदैव दीप्तिमान् तिष्ठति। अपि च भारतम् इति नाम्नः अन्तिमशब्दो हि रतम् इति। भारतदेशस्तु सर्वेषां देवनाम् एव अत्यन्तं प्रियः वर्तते। देवाः भारतवर्षे वारं वारं जनिं लब्धुम् इच्छन्ति। अयं च भारतदेशः अस्माकं सर्वेषां संस्कृतप्रेमिणां स्वदेशः। एवम् अस्याः प्रहेलिकायाः उत्तरं भवति भारतम् इति।

**व्याकरणविशेषः -**

१. विराजते - विपूर्वकात् राज्-धातोः लटि प्रथमपुरुषैकवचने विराजते इति रूपम्।

**सन्धिकार्यम् -**

१. पश्चाद् विराजते = पश्चात् + विराजते।

२. तवाप्यस्ति = तव + अपि + अस्ति।

३. ममापि = मम + अपि।

**अपदो दूरगामी च साक्षरो न च पण्डितः।**
**अमुखः स्फुटवक्ता च यो जानाति स पण्डितः॥**

**अन्वयः** - अपदः दूरगामी, साक्षरः (परन्तु) न पण्डितः, अमुखः स्फुटवक्ता च, य (एतं) जानाति स पण्डितः।

**अन्वयार्थः** - अपदः पादहीनः दूरगामी दूरगमनकारी, साक्षरः अक्षरयुक्तः (परन्तु) न पण्डितः विद्वान्, अमुखः मुखहीनः स्फुटवक्ता स्पष्टवक्ता च, यः यः जनः (एतं) जानाति अवजानाति स पण्डितः ज्ञानी।

**भावार्थः** - अस्यां प्रहेलिकायां कस्यचित् पदार्थस्य परस्परविरुद्धानि कानिचित् वैशिष्ट्यानि उक्तानि वर्तन्ते। पाठकेन श्लोकस्य पठनेन तानि वैशिष्ट्यानि ज्ञात्वा तद्वैशिष्ट्यशाली पदार्थः कः भवति इति निर्णेयम्। अस्याः प्रहेलिकायाः उत्तरस्य निर्णये पाठकानां भ्रमः उत्पद्यते, यतो हि अत्र पदार्थस्य यानि वैशिष्ट्यानि उक्तानि, तानि सर्वाणि एव परस्परविरुद्धानि वर्तन्ते अर्थात् साकल्येन तानि वैशिष्ट्यानि एकस्मिन् पदार्थे स्थातुं न शक्नुवन्ति। अतः पाठकेन अयं श्लोकः एकाग्रतया पठनीयम्। पदार्थस्य तानि वैशिष्ट्यानि यथा - तस्य पादः न वर्तते, परन्तु पादहीनः अपि स बहुदूरं गन्तुं शक्नोति। स अक्षरैः युक्तः वर्तते, परन्तु स स्वयं विद्वान् नास्ति। तस्य मुखं न वर्तते, परन्तु स सर्वदा निर्भयं स्पष्टं वदति। यः अस्य उत्तरं वक्तुं शक्नोति स तु महाज्ञानी एव।



तत् उत्तरं हि पत्रम्। पत्रस्य पादौ न स्तः परन्तु तत् पुस्तकरूपेण अन्यरूपेण वा एकस्मात् स्थानात् बहुदूरम् अन्यत् स्थानम् अनायासेनैव गच्छति। एवं पादहीनं सत् अपि पत्रम् एकस्मात् देशात् अन्यदेशम् अपि प्राप्नोति। किञ्च यदा पुस्तकं निर्मीयते, तदा पुस्तकानां पत्रेषु बहूनि अक्षराणि मुद्र्यन्ते। बहूनि ज्ञानपूर्णानि वाक्यानि पत्रेषु वर्तन्ते, तेषां पठनेन मनुष्याः महत् ज्ञानम् अर्जयन्ति। परन्तु एवम् प्रचुराक्षरविशिष्टम् अपि पत्रं स्वयं मूर्खं वर्तते। तस्य स्वकीयं न किञ्चित् ज्ञानं वर्तते। अपि च पत्रस्य मुखं नास्ति, परन्तु तत् स्वदेहे लिखितानि ज्ञानपूर्णानि वाक्यानि यथारूपम् एव पाठकेभ्यः सर्वदा प्रदर्शयति। एवम् अस्याः प्रहेलिकायाः उत्तरं भवति पत्रम्।

**व्याकरणविशेषः** -

१. अपदः - अविद्यमानं पदं यस्य स अपदः इति बहुव्रीहिसमासः।

२. दूरगामी - दूरं गच्छति इति दूरगामी।

३. अमुखः - अविद्यमानं मुखं यस्य तत् अमुखः इति बहुव्रीहिसमासः।

**सन्धिकार्यम्** -

१. अपदो दूरगामी = अपदः + दूरगामी।



## पाठगतप्रश्नाः-३

१७. कस्य फलस्य अग्रे वृक्षवत् पत्राणि भवन्ति?

१८. सम्राट् इत्यत्र विग्रहः कः?

१९. अनेकसुशिरम् इत्यत्र कः विग्रहः, कश्च समासः?

२०. किं चक्रिणा सदा आराध्यम् अस्ति?

२१. का सर्वदा जागरूका तिष्ठति?

२२. का यथोक्तवादिनी वर्तते?

२३. देवतानां प्रियं धाम किम्?

२४. अमुखः परन्तु स्फुटवक्ता कः वर्तते?



## पाठसारः

अस्मिन् पाठे षट् समस्याः बह्व्यः प्रहेलिकाः च पठिता वर्तन्ते। सर्वासां समस्यानां प्रहेलिकानां च समाधानम् अत्र सुष्ठुतया एव वर्तते। तत्र ठठण्ठठण्ठं ठठठण्ठठण्ठः इति समस्यायाः समाधानं हि अयं ध्वनिः हस्तात् सोपानमार्गे पतितत्य कलशस्य ध्वनिः। शतचन्द्रं नभस्थलम् इत्यस्याः समाधानं हि बलरामस्य कराघातेन कम्पितः चाणूरः शतचन्द्रात्मकम् आकाशं दृष्टवान्। गगनं भ्रमरायते इति समस्यायाः समाधानं हि राज्ञः कीर्तरूपे कमले आकाशम् अपि भ्रमरवत् अन्तर्भवति। मृगात् सिंहः



पलायते इति समस्यायाः समाधानं हि सिंहः मृगं लब्ध्वापि प्रतिष्ठाभङ्गभयात् मृगात् पलायनं करोति। पिपीलिका चुम्बति चन्द्रमण्डलम् इति समस्यायाः समाधानं हि हिमालयपर्वते शयानस्य शिवस्य शिरसि विद्यमानात् चन्द्रात् स्रवितम् अमृतं पिपीलिका चुम्बति इति। पुरः पत्युः कामात् श्वशुरमियमालिङ्गति सती इति समस्यायाः समाधानं हि क्लान्ता द्रौपदी पत्युः भीमस्य पुरस्तात् एव वायुरूपं श्वशुरं स्पर्शति इति।

अनारसफलं वृक्षाग्रे भवति, किञ्च तस्य अग्रे पुनः वृक्षवत् पत्राणि भवन्ति। सूर्यः नित्यं रथेन गच्छति, तस्य रथम् अश्वाः वहन्ति, प्राणदायकः स निशाचरः नास्ति। वल्मीकस्य अनेकछिद्राणि भवन्ति, किञ्च तत् सर्पैः इष्टं वर्तते। नयनस्य आद्यक्षरं नकारः, अन्तिमाक्षरम् अपि नकारः। घटिका सर्वदा जागरूका सती प्रतिक्षणं जनेभ्यः वदति। सारिका रक्तावर्णा अपि श्वेतवर्णेन अपि युक्ता वर्तते, किञ्च दूतवत् यथा श्रुतं तत् वदति। भारतवर्षनाम्नः आदिशब्दः भा-इति। अन्तिमशब्दः तु रतम् इति, किञ्च तत् देवतानां प्रियं वर्तते। पत्रं पादहीनम् अपि बहुदूरं गच्छति, मुखहीनम् अपि स्पष्टं वदति।



## पाठान्तप्रश्नाः

१. ठंठंठंठम् इत्यादिध्वनेः कारणं वर्णयत।
२. कविदृष्ट्या शतचन्द्रं नभःस्थलं कथं जातम्।
३. गगनं कविना कथं भ्रमरीकृतम्।
४. सत्याः श्वशुरालिङ्गनस्य साधुत्वं दर्शयत।
५. लेखापत्रस्य विरुद्धगुणान् वर्णयत।
६. कविवर्णनरीत्या नारिकेलं वर्णयत।
७. कविवचनेन लेखनीं वर्णयत।
८. पिपीलिकाकृतं चन्द्रचुम्बनं कविवचनेन साधयत।
९. मृगात् सिंगस्य पलायनं सकारणं निरुपयत।
१०. कविवचनरीत्या नौकां वर्णयत।
११. सदारिमध्यापि न वैरियुक्ता...इत्यादिप्रहेलिकायाः उत्तरं यथाग्रन्थम् आलोचयतु।
१२. आदौ भा शोभते नित्यम्...इत्यादिप्रहेलिकायाः उत्तरं संक्षेपेण लिखतु।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि-१**

१. युवत्याः
२. कामोद्वेगात्



३. कृष्णेन हतः राक्षसः

४. यशःपुण्डरीके

५. जगतः देवः जगद्देवः - षष्ठीतत्पुरुषसमासः

६. सिंहः

७. हेमघटस्य

८. वायोः

९. राज्ञः, यशः

१०. महतामपि लाघवं करोति

**उत्तराणि-२**

११. नौका।

१२. अङ्गुल्यः।

१३. लेखनी।

१४. त्वग्वस्त्रम्।

१५. लिखितं विषयं बोधयतीतिकारणात्।

१६. पक्षिणां राजा पक्षिराजः।

**उत्तराणि-३**

१७. अनानासफलस्य।

१८. सम्यक् राजते।

१९. शोभनानि शिरांसि सुशिरांसि इति गतिसमासः। अनेकानि सुशिरांसि यस्य तत् अनेकसुशिरम् इति बहुव्रीहिसमासः।

२०. वल्मीकम्।

२१. घटिका।

२२. सारिका।

२३. भारतम्।

२४. पत्रम्।

---

॥ इति तृतीयः पाठः ॥

---

# कथासाहित्यम्



# वेतालपञ्चविंशतिः-१

## प्रस्तावना

संस्कृतवाङ्मये कथाग्रन्थानाम् महत् स्थानम् वर्तते। कथाग्रन्थः आख्यायिका इति शब्देनापि व्यवह्रियते। प्रवृत्तिभेदात् आख्यानसाहित्यस्य भागद्वयम् भवति। उपदेशात्मकपशुकथा अथवा नीतिकथा, लोककथा अथवा मनोरञ्जककथा। नीतिकथासु उपदेशप्रवृत्तिः प्रधानम् भवति। लोककथासु तु मनोरञ्जनप्रवृत्तिः। पुनः लोककथासु प्रायः पात्ररूपेण मनुष्याः भवन्ति। यथा वेतालपञ्चविंशतिः। नीतिकथासु तु पशुपक्षिणः। यथा पञ्चतन्त्रम्। वेतालपञ्चविंशतिः इति ग्रन्थस्य कर्ता शिवदासः इत्युच्यते। एतासाम् कथानाम् पठनेन अस्माकं बोधमोदौ भवतः। कथासरित्सागरः, बृहत्कथामञ्जरी, भोजप्रबन्धः, पञ्चतन्त्रम्, कथामुक्तावली, कथामञ्जरी, जातकमाला वेतालपञ्चविंशतिः इत्यादयः कथाग्रन्थेषु अग्रगण्याः। अस्मिन् पाठे वेतालपञ्चविंशतिनामकग्रन्थात् कथे प्रस्तूयेते। ते कथे पठित्वा भवतामपि मनोरञ्जनम् किञ्च कर्तव्याकर्तव्यविवेकः अपि स्यात्।



## उद्देश्यानि

इमं पाठं पठित्वा भवन्तः

- संस्कृतकथास्वारस्यं ज्ञास्यन्ति।
- विशेषणानां प्रयोगप्रकारान् अवगच्छन्ति।
- विविधानि तिङन्तपदानि ज्ञास्यन्ति।
- सन्धिसमासादिव्यवहारान् जानीयुः।
- विविधनीतीः उपदेशान् च स्वजीवने परिपालयितुं प्रभवेयुः।
- सर्वोपरि कथाः पठित्वा आनन्दम् लप्स्यन्ते।



## ४.१) कोऽनङ्गरतिपतिः

### ४.१.१) कथामुखम्

क्षान्तिशीलः इति कश्चित् धूर्तः भिक्षुः राजानम् त्रिविक्रमसेनम् (विक्रमादित्यम्) वेतालाय उपहाररूपेण प्रयच्छन् महतीम् विद्याधरसमृद्धिम् प्राप्तुम् इच्छन् च राज्ञे विक्रमादित्याय प्रत्येकम् दिने फलम् एकम् ददाति स्म। वस्तुतः तत् फलम् रत्नम् एव आसीत्। कालेन राजा एवंविधदानादिना सन्तुष्टः मुग्धः च सन् भिक्षुम् पृष्टवान् किमर्थम् एतत् मूल्यवत् उपढौकनम् दीयते। तदा भवतः साहाय्यम् आवश्यकम् इति कथयित्वा स भिक्षुः राजानम् विक्रमादित्यं श्मशानं प्रति प्रेषितवान् वेतालस्य आनयनार्थम्। विक्रमादित्यः श्मशानं गत्वा वेतालं शिंशपावृक्षे दृष्टवान्। ततः निर्भयेन सः तं वेतालम् आदाय भिक्षुसमीपम् आगच्छन् आसीत्। तदा वेतालः उक्तवान् - "राजन्, त्वं निष्प्रयोजनम् एवं कार्ये रतः असि। त्वया मार्गक्लेशः यथा नानुभूयेत तथा मार्गविनोदनीं कथां श्रावयामि। कथानन्तरं प्रश्नमेकं प्रक्ष्यामि। यदि उत्तरं जानतापि भवता असाधु उच्यते तर्हि भवतः मृत्युः स्यात्। यदि सम्यग् दीयते तर्हि अहं पुनः शिंशपावृक्षं गमिष्यामि"इति। एवं राजा तत्पृष्टस्य प्रश्नस्य उत्तरं ददाति। तदा वेतालः पुनः शिंशपावृक्षं प्रति गच्छति। राजा पुनः तम् आनेतुम् गच्छति। आनयनकाले पुनः कथारम्भः। पुनः प्रश्न–उत्तर–वेतालगमनानि। अन्ते राज्ञा वेतालहननेन ग्रन्थस्य परिसमाप्तिः।

### ४.१.२) पूर्वपीठिका

अर्थो हि कन्या परकीया एव। अर्थात् न्यासरूपेण स्थापितः अर्थः यथा अपरस्य तथैव पितृक्रोडे न्यासरूपेण स्थापिता कन्या अपि पत्युः एव। तत्र कन्यासम्प्रदानात् परम् पितुः तदुपरि स्वत्वं न तिष्ठति। तस्मात् भारतीयपरम्परायाम् कन्यादानस्य महत्स्थानं वर्तते। योग्यं वरम् अन्विष्य तस्मै पिता स्वस्य कन्यां सम्प्रददाति। एतेन यथा पुत्र्याः सुखं भवति तथैव पितुः अपि पुण्यं भवति। अस्यां कथायां तादृशम् एव कन्यादानं वर्णितम्। अत्र कन्यां स्वपत्नीरूपेण प्राप्तुं ब्राह्मणः क्षत्रियः वैश्यः शूद्रः च आगताः। तेषु कस्मै कन्या देया पित्रा इति बोधयितुम् एव वेतालः इमां कथां विक्रमादित्याय श्रावितवान्।

## ४.२) मूलपाठः

### ४.२.१) विभागः १

**स राजा शिंशपान्तिकं गत्वा तं वेतालं स्कन्धेनादाय प्रस्थितस्तेन वेतालेन प्राग्वदभ्यधायि- "राजन्, कथमस्मिन् श्मशाने निशि ते एतादृक् प्रयासः। भूतसङ्कुलं रात्रिभीषणं चिताधूमैरिव ध्वान्तैर्निरुद्धं पितृकाननं किं नेक्षसे। तस्य भिक्षोरनुरोधतः कथमीदृशा प्रयासेन आत्मानं खेदयसि। तदिमं मे प्रश्नं मार्गविनोदकं शृणु-**

**अवन्तीषु देवनिर्मिता शैवी तनुरिव उद्दामभोगभूतिविभूषिता पद्मावती भोगवती हिरण्यवतीति च कृतादिषु त्रिषु युगेषु पुरी क्रमशः आसीत्। कलौ च उज्जयिनीति पुरी अस्ति, तस्यामासीद् वीरदेवो नाम नृपतिः, तस्य पद्मरतिनाम्नी महादेवी आसीत्।**



### व्याख्या

सः राजा विक्रमादित्यः शिंशपान्तिकं शिंशपावृक्षस्य अन्तिकम् समीपम्, गत्वा तं वेतालं स्कन्धेन आदाय स्वीकृत्य, प्रस्थितः चलितः। तेन वेतालेन प्राग्वद् पूर्ववद्, अभ्यधायि उक्तम् - राजन् महाराज, कथम् कुतः, अस्मिन् श्मशाने दाहस्थाने, निशि रात्रौ ते तव, एतादृक् एवंविधः, प्रयासः यत्नः। भूतसङ्कुलं भूतपिशाचादिव्याप्तम्, रात्रिभीषणं रात्रौ भीषणाकारम्, चिताधूमैः चिताभस्मैः, इव ध्वान्तैः अन्धकारैः, निरुद्धं व्याप्तम्, पितृकाननं पूर्वपुरुषविहारस्थानम्, किं नेक्षसे किं त्वं न पश्यसि। तस्य भिक्षोः तापसस्य, अनुरोधतः अनुरोधवशात्, कथम् ईदृशा एवंविधेन, प्रयासेन यत्नेन, आत्मानं स्वम्, खेदयसि तापयसि। तद् तस्मात् इमं मे प्रश्नं मार्गविनोदकं मार्गश्रान्त्यपहारकम् शृणु आकर्णय कथाम् शृणु इति तात्पर्यम्।

अवन्तीषु उज्जयिनीनगरेषु, देवनिर्मिता दैवसम्पद्भरिता, शैवी तनुः शिवस्य शरीरमिव, उद्दामभोगभूतिविभूषिता उद्धतसर्पेण भस्मना च शोभितं शिवस्य शरीरम् इव, पद्मावती भोगवती, हिरण्यवती इति च कृतादिषु चतुर्षु युगेषु पुरी नगरी क्रमशः शनैः शनैः आसीत्। उद्दामभोगभूतिविभूषिता शैवी तनुः इव कृतादिषु त्रिषु युगेषु क्रमशः उद्यामभोगभूतिविभूषिता देवनिर्मिता पद्मावती, भोगवती, हिरण्यवती इति पुरी आसीत् इत्यन्वयः। कलौ च उज्जयिनी इति पुरी अस्ति। तस्याम् नगर्याम् आसीत् वीरदेवः नाम नृपतिः राजा, तस्य राज्ञः पद्मरतिनाम्नी महादेवी महाराज्ञी आसीत्।

### सरलार्थः

राजा शिंशपावृक्षात् वेतालं नीत्वा भिक्षोः सकाशं गच्छन् आसीत्। तदा स वेतालः राजानं पृष्टवान् यत् कथं सः राजा भूतपिशाचादिव्याप्तं श्मशानम् आगत्य एवं प्रयासं करोति। कथं सः भिक्षोः अनुरोधात् कार्ये व्यस्तः। ततः परं सः वेतालः कथां श्रावितवान्।

पुरा उज्जयिनी इत्याख्या नगरी आसीत्। सा नगरी भगवतः महादेवस्य देहवत् भोगविलासेन सम्पत्त्या सह विभूषिता आसीत्। तस्याः सत्ययुगे पद्मावती इति नाम, त्रेतायुगे भोगवती इति नाम, द्वापरयुगे हिरण्यवती इति नाम आसीत्। कलियुगे च तस्याः एव नगर्याः उज्जयिनी इति नाम। तत्र वीरदेवः इति नामकः राजा आसीत्। तस्य पत्न्याः नाम आसीत् पद्मरतिः इति।

### व्याकरणविमर्शः

१) शिंशपान्तिकम् - शिंशपायाः अन्तिकम्, षष्ठीसमासः।

२) चिताधूमैः - चितायाः धूमः, तैः इति षष्ठीसमासः।

३) उद्दामभोगभूतिविभूषिता - उद्दामश्चासौ भोगश्चेति उद्दामभोगः, उद्दामभोगश्च भूतिश्च उद्दामभोगभूती, उद्दामभोगभूतिभ्यां विभूषिता उद्दामभोगभूतिविभूषिता।

४) ईक्षसे- ईक्ष दर्शने इति आत्मनेपदिनः धातोः लटि मध्यमपुरुषैकवचने रूपम्।



## ४.२.२) विभागः २

**एकदा राजा तया साकं मन्दाकिनीतटे पुत्रकाम्यया तपसा हरमाराधयामास, चिरञ्च तपश्चरन् कदाचित् परितुष्टशङ्करोदिताम् आकाशवाणीं शुश्राव- "राजन्, उत्पत्स्यते ते पुत्रः शूरः कुलोद्वहः, कन्या चैका लावण्येन जिताप्सराः "। एतां नाभसीं वाणीं श्रुत्वा स भूपतिरभीष्टसिद्धिप्रहृष्टो महिष्या समं स्वनगरीमाययौ। तस्य प्रथमं पद्मरत्यां देव्यां शूरदेवो नाम पुत्रः, तदनु च अनङ्गरतिर्नाम अनङ्गमोहिनी कन्या समजायत। क्रमेण च तस्यां वृद्धिं गतायां स राजा सदृशं वरं प्रेप्सुः पृथिवीमण्डलस्थान् सर्वान् नृपतीन् पटलिखितानानाययत्। यदा तेषु एकोऽपि तस्याः सदृशो न प्रत्यभासत, तदा स राजा वात्सल्यात् तां सुतामभाषत- " वत्से, अहं तावत् ते सदृशं वरं न पश्यामि, तत् सर्वान् नृपान् समानाय्य स्वयंवरं कुरुष्व।" एतत् पितृवचनमाकर्ण्य सा राजपुत्री जगाद- " तात, स्वयंवरम् अतिहेपणं, तदहं नेच्छामि, यो हि युवा सुरूपः केवलं पूर्णं विज्ञानं वेत्ति, तस्मै त्वया अहं देया, न्यूनाधिकेन मे नास्ति प्रयोजनम्।"**

### व्याख्या

एकदा एकस्मिन् दिवसे, तया पद्मरत्या साकं सह, मन्दाकिनीतटे मन्दाकिनी इत्याख्यायाः नद्याः तीरे, पुत्रकाम्यया पुत्रं लब्धुम्, तपसा तपस्यया, हरं महादेवम्, आराधयामास पूजितवान्, चिरञ्च बहुकालं यावत् तपश्चरन् तपस्यां कृत्वा, कदाचित् परितुष्टशङ्करोदितां परितुष्टेन सन्तुष्टेन शङ्करेण महादेवेन उक्ताम् कथिताम् आकाशवाणीं शुश्राव श्रुतवान्, राजन् नृप उत्पत्स्यते जनिष्यते, ते पुत्रः शूरः वीरः कुलोद्वहः कुलरक्षकः कन्या च एका लावण्येन सौन्द्रर्येण जिताप्सराः जिताः सुराङ्गनाः यया सा। एतां नाभसीं वाणीम् आकाशवाणीम्, श्रुत्वा आकर्ण्य, स भूपतिः नृपः, अभिष्टसिद्धिप्रहृष्टः अभीष्टस्य ईप्सितस्य सिद्ध्या प्रहृष्टः प्रफुल्लः, महिष्या राज्ञ्या सह स्वनगरीम् आययौ। तस्य प्रथमं पद्मरत्यां देव्यां शूरदेवः नाम पुत्रः सुतः, तदनु च अनङ्गरतिः नाम अनङ्गमोहिनी कामदेवम् अपि मोहयति या सा तादृशी कन्या पुत्री समजायत उत्पन्ना अभूत्। क्रमेण च तस्यां वृद्धिं गतायां यौवनावस्थायां प्राप्तायाम्, स राजा सदृशं समानम् वरं जामातारम्, प्रेप्सुः प्राप्तुम् इच्छुः, पृथिवीमण्डलस्थान् भूस्थितान्, सर्वान् नृपतीन् महाराजान् पटलिखितान् आमन्त्रणपत्रेण आहूतान् आनाययत्। यदा तेषु एकः अपि तस्याः सदृशः न प्रत्यभासत न दृष्टः, तदा स राजा वात्सल्यात् सन्तानप्रेम्णा, तां सुताम् अभाषत उक्तवान्, वत्से अहं तावत् ते तव सदृशं वरं न पश्यामि तत् तस्मात् सर्वान् नृपान् समानाय्य स्वयंवरं कुरुष्व। एतत् पितृवचनम् आकर्ण्य श्रुत्वा सा राजपुत्री जगाद उक्तवती, तात स्वयंवरम् अतिहेपणम् अयौक्तिकम् तदहं नेच्छामि न वाञ्छामि, यो हि युवा पुरुषः केवलं पूर्णं विज्ञानं वेत्ति तस्मै त्वया अहं देया न्यूनाधिकेन विस्तरेण मे नास्ति प्रयोजनम् इति।

### सरलार्थः

स राजा अपुत्रकः आसीत्। तस्माद् स पत्न्याः साकं पुत्रं प्राप्तुं मन्दाकिनीनद्याः तटे शिवस्य आराधनां कृतवान्। तस्य तपस्यया शिवः तुष्टः सन् वररूपेण उक्तवान् यत् तस्य एकः शूरः पुत्रः एका अतिसुन्दरी कन्या च भविष्यति इति। ततः परं तस्यां पद्मरत्यां एकः पुत्रः एका अतिरम्या कन्या च जन्म



अलभत। तस्य पुत्रस्य नाम आसीत् शूरदेवः, कन्यायाः अनङ्गरतिः इति। तस्याः एवं रूपम् आसीत् येन कामदेवः अपि मोहितः स्यात्। क्रमेण सा यौवनावस्थां प्राप्तवती। तां योग्यवराय दानाय सः राजा नृपान् आहूतवान् परन्तु तस्याः सदृशः एकः अपि नासीत्। परं पिता ताम् अनङ्गरतिम् उक्तवान् यत् तया सदृशः वरः न दृश्यते। तस्माद् स्वयंवरं करणीयम् इति। तदा सा उक्तवती यत् स्वयंवरेण बहुधनव्ययः भविष्यति। तस्माद् तत् नापेक्ष्यते। सा परम् उक्तवती यत् - यः रूपसम्पन्नः पुरुषः पूर्णं विज्ञानं जानाति, तं सा परिणेष्यति इति।

**व्याकरणविमर्शः**

१. परितुष्टशङ्करोदिताम् - परितुष्टश्चासौ शङ्करश्चेति परितुष्टशङ्करः इति कर्मधायसमासः, परितुष्टशङ्करेण उदिताम् परितुष्टशङ्करोदिताम् इति तृतीयातत्पुरुषसमासः।

२. आराधयामास – आपूर्वकात् राध्धातोः लिट्-लकारे प्रथमपुरुषैकवचनम्।

३. उत्पत्स्यते - उत्पूर्वकात् पत्-धातोः कर्मणि लृट्लकारे प्रथमपुरुषैकवचनम्।

४. अभीष्टसिद्धिप्रहृष्टः - अभीष्टस्य सिद्धिः अभीष्टसिद्धिः इति षष्ठीसमासः। अभीष्टसिद्ध्या प्रहृष्टः अभीष्टसिद्धिप्रहृष्टः इति तृतीयातत्पुरुषः।

५. अनङ्गमोहिनी - अनङ्गं कामदेवम् (अपि) मोहयति या सा इति विग्रहः।

६. समजायत – सम्पूर्वकात् जनी प्रादुर्भावे इति धातोः लङ्लकारे प्रथमपुरुषैकवचनम्।

७. जगाद – गद व्यक्तायाम् वाचि इति धातोः लिट्लकारे प्रथमपुरुषैकवचनम्।

८. आययौ - आपूर्वकस्य या प्रापणे इति धातोः लिटि प्रथमपुरुषैकवचने रूपम्।

## ४.२.३) विभागः - ३

**इति दुहितुर्वचः समाकर्ण्य यावत् स भूपतिस्तादृशं वरम् अन्विष्यति, तावत् तत् लोकमुखात् विदित्वा चत्वारो वीरा विज्ञानिनो भव्याः पुरुषा दक्षिणपथात् तं राजानमाययुः। ते च राज्ञा सत्कृताः एकैकशः स्वं स्वं विज्ञानं राजसमक्षं शशंसुः। तेषामेको जगाद- " अहं तावत् शूद्रः नाम्ना पञ्चफुट्टिकः, एकोऽहमन्वहं पञ्च अग्र्याणि वसनयुग्मानि करोमि, तेषामेकं देवाय प्रयच्छामि, एकं द्विजाय, एकमात्मनः कृते परिगृह्णामि, एकञ्च भार्यायै (या मे भवति) ददामि, पञ्चमञ्च विक्रीय आहारादिकं विदधामि। तदेवं विज्ञानिने मह्यम् अनङ्गरतिस्ते दुहिता दीयताम् "इति। द्वितीयोऽब्रवीत्- " अहं तावत् वैश्यः भाषाज्ञो नाम सर्वेषां मृगपक्षिणां रुतं वेद्मि, तदेषा राजपुत्री मह्यं दीयताम् "इति। ततस्तृतीयोऽभाषत- " अहं खड्गधरो नाम भुजवीर्यशाली क्षत्रियः, खड्गविद्याविज्ञाने अस्यां क्षितौ मे प्रतिमल्लो नास्ति, हे राजन्, तदेषा तनया ते मह्यं दीयताम् "इति। ततश्चतुर्थोऽब्रवीत्- " राजन्, अहं तावत् जीवदत्तो नाम विप्रः, मम चैतादृशं विज्ञानमस्ति यत्, मृतानपि जन्तून् आनीय आशु जीवतो दर्शयामि, तद्वीरचर्य्यासिद्धं माम् एषा ते तनया पतिं प्रपद्यताम् "इति। एवं ब्रुवतः तान् दिव्यावेशाकृतीन् पश्यन् राजा वीरदेवः सुतया दोलारूढः इवाभवत्। "**



### व्याख्या

इति दुहितुः कन्यायाः वचः कथनम् यावत् स भूपतिः नृपः तादृशं वरम् अन्विष्यति, तावत् तत् लोकमुखात् विदित्वा चत्वारः वीराः विज्ञानिनः भव्याः सुरूपाः पुरुषाः दक्षिणपथात् अवन्तिनगरीम् अतिक्रम्य दक्षिणदिग्वर्तिदेशभेदात् तं राजानम् आययुः आगतवन्तः। ते च राज्ञा सत्कृताः सम्मानिताः एकैकशः प्रत्येकम् स्वं स्वं विज्ञानं विद्वत्ताम्, राजसमक्षं नृपस्य समीपम् शशंसुः प्रशंसितवन्तः। तेषाम् एकः जगाद – अहं तावत् शूद्रः नाम्ना पञ्चफुट्टिकः एकः अहम् अन्वहम् प्रत्यहम्, पञ्च अग्र्याणि श्रेष्ठानि वसनयुग्मानि वस्त्राणि करोमि। तेषाम् एकं देवाय देवतायै, प्रयच्छामि ददामि, एकं द्विजाय ब्राह्मणाय, एकम् आत्मनः स्वस्य कृते परिगृह्णामि स्वीकरोमि, एकं च भार्यायै या तस्य पत्नी भविष्यति तस्यै, ददामि पञ्चमं च विक्रीय आहारादिकं विदधामि व्यवस्थापयामि। तदेवं विज्ञानिने मह्यम् अनङ्गरतिः ते तव दुहिता कन्या दीयताम् प्रदीयताम्। द्वितीयः अब्रवीत् उक्तवान् अहं तावत् वैश्यः भाषाज्ञः इति नामकः, सर्वेषां मृगपक्षिणां पशूनाम् रुतं रवम् वेद्मि जानामि, तदेषा राजपुत्री मह्यं मे, दीयताम् समर्प्यताम्। ततः परम् तृतीयः अभाषत अवदत् अहं खड्गधरः नाम भुजवीर्यशाली बलशाली क्षत्रियः खड्गविद्याविज्ञाने अस्यां क्षितौ पृथिव्याम् मे मम प्रतिमल्लः प्रतिस्पर्धी नास्ति, हे राजन् नृप, तदेषा तनया कन्या, ते तव मह्यं दीयताम् अर्प्यताम्। ततः अनन्तरम्, चतुर्थः अब्रवीत् अकथयत् राजन् अहं तावत् जीवदत्तः नाम विप्रः ब्राह्मणः मम च एतादृशं विज्ञानम् अस्ति यत् मृतान् प्राणैः वियुक्तान् अपि जन्तून् पशून् आनीय आशु शीघ्रम् जीवतो दर्शयामि जीवनं दास्यामि, तद्वीरचर्यासिद्धं माम् एषा ते तनया पुत्री पतिं प्रपद्यताम् अङ्गीकुरुताम्। एवं ब्रुवतः कथयतः तान् दिव्यवेशाकृतीन् सुवेशधारिणः, पश्यन् दृष्ट्वा, राजा वीरदेवः सुतया कन्यया, दोलारूढः किंकर्तव्यविमूढः, इव अभवत् जातः इत्यर्थः।

### सरलार्थः

तदा तस्याः वचनं श्रुत्वा पिता तादृशवरस्य अन्वेषणे प्रवृत्तः अभवत्। तदा मध्ये एकस्मिन् दिवसे लोकमुखात् वृत्तान्तं श्रुत्वा चत्वारः पुरुषाः राज्ञः सकाशम् आगतवन्तः। तेषां मध्ये एकः आसीत् शूद्रः। तस्य नाम आसीत् पञ्चफुट्टिकः इति। स प्रतिदिनं पञ्च वस्त्राणि वपति स्म। तेषु एकं देवतायै प्रयच्छति, एकं ब्राह्मणाय, एकं स्वयं स्वीकरोति, एकं या तस्य भार्या भविष्यति तस्यै दास्यति, अवशिष्टेन आहारादिकं क्रीणाति। द्वितीयः आसीत् वैश्यः। तस्य नाम आसीत् भाषाज्ञः इति। सः सर्वेषां मृगादिपशूनां पक्षिणां च भाषां जानाति स्म। तृतीयः आसीत् क्षत्रियः। तस्य नाम आसीत् खड्गधरः इति। सः सम्यक्तया खड्गचालनं जानाति स्म। तत्सदृशः खड्गधरः पृथिव्यां दुर्लभः आसीत्। चतुर्थः आसीत् एकः ब्राह्मणः। तस्य नाम आसीत् जीवदत्तः इति। सः एकां विशिष्टां विद्यां जानाति स्म। स मृते जन्तौ पुनः प्राणसञ्चारं कर्तुं शक्नोति स्म।

### व्याकरणविमर्शः

१. शशंसुः शंसु स्तुतौ इति धातोः लिट्लकारे प्रथमपुरुषबहुवचने रूपम्।

२. आययुः - आपूर्वकस्य या प्रापणे इति धातोः लिटि प्रथमपुरुषबहुवचने रूपम्।

३. वेद्मि - विद ज्ञाने इति धातोः लटि उत्तमपुरुषैकवचने रूपम्।



४. अब्रवीत् - ब्रूञ् व्यक्तायां वाचि इति धातोः लङि प्रथमपुरुषैकवचने रूपम्।

५. अभाषत – भाष व्यक्तायाम् वाचि इति धातोः लङि प्रथमपुरुषैकवचने रूपम्।

६. प्रतिमल्लः - प्रति प्रतिरूपः मल्लः बलीयान् प्रतिमल्लः तुल्यबलवान् प्रतियोद्धा।

७. वीररचर्य्यासिद्धम् - वीरचर्य्यया वीराचारेण सिद्धम् सफलताम् गतम् प्राप्तैश्वर्यम् इत्यर्थः वीरचर्य्यासिद्धम्।

८. दिव्यावेशाकृतीन् - दिव्याः रमणीयाः वेशाः नेपथ्यानि वसनभूषणानि आकृतयः रूपाणि च येषां तान् दिव्यावेशाकृतीन् सुपरिच्छदान् सुरूपाणि इत्यर्थः इति बहुव्रीहिसमासः।

## ४.२.४) विभागः - ४

**इति कथामाख्याय वेतालः राजानमप्राक्षीत्- "राजन्, ब्रूहि, एतेषां कस्मै कन्यैषा देया, यदि जानन्नपि मे तत्त्वं न वदिष्यसि, तदा ते मूर्द्धा निश्चितं शतधा स्फुटिष्यति, यदि च सदुत्तरं दास्यसि, तदाहं पुनस्तव स्कन्धात् तमेव शिंशपातरुम् आश्रयिष्ये" इति। एतदाकर्ण्य राजा तं वेतालं प्रत्यवादीत्- " योगेश्वर, भवान् केवलं कालक्षेपाय मां मौनं त्याजयति, अन्यथा कोऽयं गहनः प्रश्नः। तदुच्यताम्, शूद्राय कुविन्दाय कथं क्षत्रिया दीयते, वैश्याय च। यच्च तद्गतं मृगादिभाषाविज्ञानं, तत् कस्मिन् कार्ये उपयुज्यते। विप्रेण तेन स्वकर्मप्रच्युतेन ऐन्द्रजालिकेन पतितेन वीरमानिना किम्। तस्मात् क्षत्रियायैव खड्गधराय विद्याशौर्यशालिने सा देया " इति। एतत्तस्य वचो निशम्य स वेतालो योगबलात् स्कन्धदेशात् सहसा अलक्षितः क्वापि जगाम। राजाऽपि तथैव तमनुययौ, सोत्साहघने हि वीरहृदये न जातु खेदोऽन्तरं लभते।।**

### व्याख्या

इति एवंविधाम्, कथाम् आख्याय श्रावयित्वा, वेतालः राजानम् विक्रमादित्यम्, अप्राक्षीत् पृष्टवान्, राजन्, पूर्वोक्तं शापं स्मृत्वा ब्रूहि कथय, एतेषां कस्मै कन्या एषा देया प्रदेया इति। एतद् आकर्ण्य श्रुत्वा राजा तं वेतालं प्रत्यवादीत् प्रत्युत्तरं कृतवान्, भवान् केवलं कालक्षेपाय मां मौनं त्याजयति त्यागं कारयति, अन्यथा कः अयं गहनः गभीरः प्रश्नः। तदुच्यताम् कथ्यताम्, शूद्राय कुविन्दाय तनुतवायाय कथं क्षत्रिया दीयते, वैश्याय च। यच्च तद्गतं मृगादिभाषाविज्ञानं तत् कस्मिन् कार्ये उपयुज्यते न कुत्रापि तस्य प्रयोजनम् अस्ति इत्यर्थः। विप्रेण अपि तेन स्वकर्मप्रच्युतेन निजकार्यविच्युतेन, ऐन्द्रजालिकेन पतितेन वीरमानिना किम्। तस्मात् क्षत्रियाय एव खड्गधराय विद्याशौर्यशालिने सा देया प्रदेया इति। एतत् तस्य वचः वाक्यम्, निशम्य श्रुत्वा, सः वेतालः योगबलात् स्कन्धदेशात् सहसा हठात्, अलक्षितः अदृष्टः, क्वापि जगाम गतवान्। राजा अपि तथैव तम् अनुययौ अनुसृतवान्, सोत्साहघने उत्साहभरिते, हि वीरहृदये शूराणां मनसि, न जातु खेदः कष्टम्, अन्तरम् अवसानं, लभते प्राप्नोति इत्यर्थः।

### सरलार्थः

एवं कथां श्रावयित्वा सः वेतालः विक्रमादित्यं पृष्टवान् यत् एतेषु कः ताम् अनङ्गरतिं प्राप्स्यति इति। तदा तस्य प्रश्नं श्रुत्वा सः विक्रमादित्यः उत्तरं दत्तवान् यत् - अयम् सरलः प्रश्नः इति। तथाहि



कन्या क्षत्रिया। तस्मात् सा उच्चकुलोद्भवा। सा शूद्राय न दातुं शक्यते। किञ्च वैश्यः मृगादिभाषां जानाति स्म। पत्न्याः परिग्रहे तस्य ज्ञानस्य कापि आवश्यकता नास्ति। किञ्च विप्रस्य जपध्यानपूजादिकं कार्यम्। सः स्वकर्म परित्यज्य अन्यस्मिन् कर्मणि नियुक्तः। तस्मात् सः अपि तां प्राप्तुं न शक्नोति। तस्मात् यः क्षत्रियः खड्गधरः आसीत्। सः एव तस्याः रक्षणे समर्थः. तस्मात् तस्मै एव कन्या देया। एतेन तस्याः समग्रं जीवनं सुखमयं स्यात्। एवं समीचीनम् उत्तरं प्राप्य स वेतालः पुनः शिंशपावृक्षं प्रति गतवान्। राजा अपि पुनः तम् आनेतुं गतवान्। यतो हि उत्साहपूर्णं वीराणां हृदयम् अवसादं क्लेशं वा कदापि न अनुभवति।

**व्याकरणविमर्शः**

१. अप्राक्षीत् - प्रच्छ ज्ञीप्सायाम् इति धातोः लुङ्लकारे प्रथमपुरुषैकवचने रूपम्।

२. सोत्साहघने - उत्साहेन अध्यवसायेन घनः दाढर्यम् उत्साहघनः, उत्साहश्च घनश्च उत्साहघनौ ताभ्यां सह वर्तमाने सोत्साहघने उद्यमदृढतासंयुक्ते इत्यर्थः अथवा उत्साहेन घनः दृढः दृढोत्साहः इत्यर्थः। तेन सह वर्तमाने अथवा उत्साहेन घनः सान्द्रः निरन्तरः इत्यर्थः, पूर्णम् इति यावत्। पूर्णोत्साहः इत्यर्थः तेन सह विद्यमाने इति बहुव्रीहिसमासः।

३. निशम्य – निपूर्वकात् शम्-धातोः ल्यपि निशम्य इति रूपम्। तस्य च श्रुत्वा इत्यर्थः।

४. जगाम – गमॢ गतौ इति धातोः लिट्लकारे प्रथमपुरुषैकवचने रूपम्।

## ४.२.५) प्रथमकथायाः तात्पर्यार्थः

अत्र कथायां वेतालः वीरविक्रमादित्याय एकां कथां श्रावितवान्। अत्र कस्याश्चित् कन्यायाः कन्यादानप्रसङ्गः वर्णितः। तत्र तां कन्यां प्राप्तुं चत्वारः वर्णीयाः आगतवन्तः। तेषु एकः शूद्रः, एकः वैश्यः, एकः क्षत्रियः अपरश्च ब्राह्मणः आसीत्। ते स्वस्वकार्याणि राज्ञे उक्तवन्तः। ततः परं राजा विचलितः अभवत् यतो हि सः निश्चयं कर्तुं न शक्तवान् यत् कस्मै कन्या देया इति। तदा वेतालः अमुं प्रश्नं विक्रमादित्यं प्रति उक्तवान्। सः उक्तवान् यत् क्षत्रियात् अन्ये सर्वे अनुपयुक्तकार्यरताः स्वस्वकर्मप्रच्युताः आसन्। तेषु कः योग्यः स्यात् इत्यस्मिन् प्रश्ने वेतालेन राज्ञे पृष्टे सति सः राजा स्वधर्मं पालयित्रे क्षत्रियाय सा कन्या प्रदेया इति सम्यक् उत्तरितवान्। तदा वेतालः पुनः शिंशपावृक्षं गतवान् राजा अपि तम् आनेतुम् तत्र गतः। इत्येवम् कथा समाप्ता।



## पाठगतप्रश्नाः-१

१. श्मशानं कीदृशम् आसीत्।

२. उज्जयिन्याः राजा कः।

३. उज्जयिन्याः सत्ययुगे किं नाम।

४. त्रेतायुगे उज्जयिन्याः नाम किम्।



५. हिरण्यवतीति कस्मिन् युगे प्रख्याता आसीत्।

६. कलौ पद्मावत्याः नाम किम्।

७. वीरदेवस्य पत्न्याः नाम किम्।

८. राजा पुत्रप्राप्त्यर्थं कस्य आराधनां कृतवान्।

९. राज्ञः पुत्रस्य नाम किम्।

१०. शिववरप्रदत्तायाः कन्यायाः नाम किम्।

११. कीदृशं वरं सा याचितवती।

१२. शूद्रस्य नाम किम्।

१३. शूद्रः प्रतिदिनं कति वस्त्राणि वपति स्म।

१४. वैश्यस्य नाम किम्।

१५. वैश्यः किं जानाति स्म।

१६. क्षत्रियस्य नाम किम्।

१७. ब्राह्मणस्य नाम किम्।

१८. जीवदत्तस्य किं वैशिष्ट्यम् आसीत्।

१९. विक्रमादित्यस्य मतानुसारेण कस्मै कन्या देया।

२०. कीदृशं हृदयं क्लेशं न लभते।

२१. स राजा ........... गत्वा तं ........ स्कन्धेनादाय प्रस्थितः।

२२. कथमस्मिन् .......... निशि ते एकादृक् प्रयासः।

२३. कलौ ............ इति पुरी अस्ति।

२४. उज्जयिन्याम् आसीत् ........... नाम नृपतिः।

२५. राजा ........... तटे पुत्रकाम्यया तपसा हरमाराधयामास।

२६. प्रथमं पद्मरत्यां ........ नाम पुत्रः जातः।

२७. वीरदेवः कन्यायाः ......... कृते वरान् अन्विषति स्म।

२८. स्वयंवरम् .........., तदहं नेच्छामि।

२९. परितुष्टशङ्करोदिताम् इत्यस्य विग्रहं लिखत।

३०. अहं तावत् शुद्रः नाम्ना ...........।

३१. अहं वैश्यः ......... नाम सर्वेषां मृगपक्षिणां रुतं वेद्मि।

३२. अहं भुजवीर्यशाली क्षत्रियः ......... नाम।

३३. अहं ........ नाम विप्रः।



३४.यदि जानन्नपि मे तत्त्वं न वदिष्यति, तदा ते मूर्द्धा निश्चितं ........ स्फुटिष्यति।

३५.योगेश्वर, भवान् केवलं ........... मां मौनं त्याजयति।

३६. सोत्साहघने हि ........... न जातु खेदः अन्तरं लभते।

३७.स्तम्भं मेलयत।

| स्तम्भः १ | स्तम्भः २ |
|---|---|
| १. श्मशानम्। | वीरहृदयम् |
| २. उज्जयिनी सत्ययुगे | खड्गधरः |
| ३. वीरदेवस्य पत्नी | द्वापरयुगे |
| ४. हिरण्यवती | भूतसङ्कुलम् |
| ५. क्षत्रियः | पद्मावती |
| ६. सोत्साहघनम् | पद्मरतिः |

## ४.३) कः त्यागी

### ४.३.१) पूर्वपीठिका

यतो धर्मस्ततो जयः। अर्थात् यत्र धर्मः अस्ति तत्र जयः निश्चितः एव। अत्र कथायां सा मदनसेना स्वस्याः वचन-सत्यतायाः पालनाय स्वपत्युः सकाशात् क्षमाम् अनुमतिं च याचितवती। अपि च चौरं दुर्जनं ज्ञात्वापि वचनपालनाय पुनः तस्य निकटं गतवती। तस्मात् अस्याः कथायाः अध्ययनेन सत्यतायाः पालनं सर्वदा सर्वथा च करणीयमिति विवेकः लभ्यते। अपि च वचनैः बद्धा सती अपि सा मदनसेना स्वपितुः मनसः अभिलाषः अन्यथा यथा न स्यात् तदर्थं स्वस्याः भाविदुःखमपि अङ्गीकृतवती। तस्माद् एतेन तस्याः पितरं प्रति स्वकुलं प्रत्यपि श्रद्धा आत्मत्यागश्च परिलक्ष्यते। किञ्च चौरस्य त्यागोऽपि अत्र मुख्यः।

### ४.३.२) विभागः १

**ततश्च स राजा पुनः शिंशपामूलं गत्वा तं वेतालं तथैव स्कन्धमारोप्य सत्वरं कृतमौनः समुच्चचाल। प्रयान्तञ्च तं स्कन्धवर्ती स वेतालोऽपृच्छत्- राजन्, श्रान्तोऽसि, तदिमां श्रान्तिहारिणीं कथां शृणु-**

**आसीद् वीरबाहुर्नाम सकलभूपालशिरःसमभ्यर्चितशासनः पाकशासन इवापरो नृपतिः, तस्यानङ्गपुरं नाम नगरवरमभवत्। तत्रार्थदत्तो नाम महाधनः सार्थवाहः प्रतिवसति स्म। तस्य धनदत्तो नाम ज्येष्ठः पुत्रः कनीयसी च कन्या मदनसेना नाम समजायत। एकदा धर्मदत्तो नाम कस्यचिद् वणिक्पतेस्तनयः तां लावण्यरसनिर्झरां कुचकुम्भाग्रबलित्रितयरञ्जितां यौवनद्विरहस्येव**



**लीलामज्जनवापिकां वीक्ष्य सद्यः स्मरबाणौघपातापहृतचेतनः समपद्यत- अहो, मारेण धारधिरूढेन अमुना रूपेण द्योतिता मल्ली मे हृदयं भेत्तुमिव निर्मिता। इत्येवं प्रासादाग्रमारूढां तां दृष्ट्वा चिन्तयतः चक्राह्वस्येव तस्य वासरोऽतिचक्राम। ततः सा मदनसेना चित्तञ्च तस्य धर्मदत्तस्य तद्दर्शनदुःखाग्निसन्तप्तं गृहान्तरं विवेश। भास्वांश्च तद्दर्शनजनितरागोऽपराम्बुधौ निपपात। ताञ्च सुमुखीं नक्तम् अभ्यन्तरागतां दृष्ट्वा तन्मुखाब्जविनिर्जितश्चन्द्रः शनैरुदगात्। धर्मदत्तश्च तावद् गृहं गत्वा तामनुचिन्तयन् शयने चन्द्रपादाहतो लुठन् निपत्य तस्थौ, यत्नेन सखिभिर्बन्धुभिश्च पृच्छयमानो न किञ्चित् कथयामास। निशि च कृच्छ्रात् प्राप्तनिद्रः तथैव तां पश्यन् अनुनयंश्च समुत्सुकः किमिव नाकरोत्। प्रातश्च प्रबुद्धो गत्वा रहसि स सखीं प्रतीक्षमाणाम् उद्यानवर्तिनीं मदनसेनां ददर्श, उपेत्य च परिष्वङ्गलालसः प्रेमपेशलैर्वचोभिश्चरणानलः उपच्छन्दयामास।**

### व्याख्या

ततः च राजा पुनः शिंशपामूलं गत्वा तं वेतालं तथैव स्कन्धम् आरोप्य स्थापयित्वा, सत्वरं शीघ्रम्, कृतमौनः तूष्णीम्, समुच्चचाल। प्रयान्तं च तं स्कन्धवर्ती स वेतालः अपृच्छत् राजन् श्रान्तः क्लान्तः असि, तद् तस्मात् इमां श्रान्तिहारिणीं क्लेशापकारिणीम् कथां शृणु कथय।

आसीद् वीरबाहुः नाम सकलभूपालशिरःसमभ्यर्चितशासनः समस्तराज्ञाम् मूर्ध्ना पूजितः शासनः, पाकशासनः असुरविशषस्य हन्ता इन्द्रः इव अपरः द्वितीयः अपरः पाकशासनः इव इत्यन्वयः। नृपतिः नरपतिः। तस्य अनङ्गपुरं नाम नगरवरम् नगरश्रेष्ठम् श्रेष्ठनगरम् इत्यर्थः, अभवत् आसीत् इत्यर्थः। तत्र अर्थदत्तः नाम महाधनः धनिकः, सार्थवाहः वणिक्, प्रतिवसति स्म निवसति स्म। तस्य धनदत्तः नाम ज्येष्ठः पुत्रः, कनीयसी च कन्या मदनसेना नाम समजायत आसीत्। एकदा एकस्मिन् दिवसे धर्मदत्तः नाम कस्यचिद् वणिक्पतेः वणिक्श्रेष्ठस्य वणिजः तनयः पुत्रः, तां लावण्यरसनिर्झरां रूपसौन्दर्यपरिपूर्णाम्, कुचकुम्भाग्रबलित्रितयरञ्जितां पूर्णकुम्भसदृशस्तनाभ्यां भूषितां त्रिबलिशोभिताम्, यौवनद्विरहस्येव यौवनावस्थासम्पन्नः गजः इव, लीलामज्जनवापिकाम् विहारयोग्यसरोवररूपाम्, वीक्ष्य दृष्ट्वा, सद्यः तत्क्षणम् वीक्षणक्षणमेव इत्यर्थः, स्मरबाणौघपातापहृतचेतनः कामशराघातविनष्टसंज्ञः, समपद्यत समजायत। अहो खेदे विस्मये वा, मारेण स्मरेण कामेन इत्यर्थः, धारधिरूढेन सेनापतिरूपिणा अमुना रूपेण सौन्दर्येण द्योतिता प्रकाशिता मल्ली मल्लिकापुष्पम्, मल्लिकापुष्पवत् सुकोमला मनोहारिणी च इत्यर्थः। मे मम हृदयं चेतः, भेत्तुम् बेद्धुम् इव निर्मिता रचिता। कामदेवः सैनापत्यं गतः मल्लिकापुष्पमेव ईदृशसौन्दर्येण परिवर्तितं कृत्वा मम हृदयं बेद्धुम् निर्मितवान् इति समुदायार्थः, कुसुमसुकुमारापि इयम् निशितशरवत् मम हृदयम् पीडयति, इत्यहो इति भावः यद्वा धारा खड्गादेः निशितमुखम् ताम् अधिरूढेन तथात्वं गतेन धारात्वं प्राप्तेन इत्यर्थः, धाराधिरूढेन तीक्ष्णाग्रखड्गादिरूपिणा, हृदयभेदकसाधर्म्यात् इति भावः इति द्वितीयातत्पुरुषसमासः। इत्येवं प्रासादाग्रम् आवासस्य सम्मुखस्थानम्, आरूढाम् आगताम्, तां दृष्ट्वा चिन्तयतः चक्राह्वस्येव चक्रवाकाख्यपक्षिविशेषः इव निशि प्रियाविरहविधुरस्येति भावः, चक्रवाकदम्पती रात्रौ परस्परम् एकत्र स्थातुम् न शक्नुतः, नद्याः जलाशयस्य वा एकस्मिन् तीरे चक्रवाकः अपरस्मिन् चक्रवाको रात्रौ अवस्थाय प्रभाते पुनः संयुज्येते इति प्रसिद्धिः। दुःखेन तस्य वासरः दिवसः,



अतिचक्राम अतीयाय, व्यपगतवान् इत्यर्थः रजनी समागतवती इति भावः विरहसम्पादनात् रजनीसमागमो यथा चक्रवाकस्य दुःखकरः, वासराभ्युदयश्च मिलनसम्पादनात् तथा सुखकरः किन्तु सुखवासरो मुहूर्त्तमिव अतिगच्छति, दर्शनपिपासा च न पूर्णतृप्तिं लभते, एवं धर्मदत्तस्यापि मदनसेनादर्शनसुयोगसम्पादकः सुखवासरः मुहूर्तमिव अपजगाम, अदर्शनसम्पादिका सुदीर्घा दुःखरजनी च समायाता इति तात्पर्यम्।

ततः सा मदनसेना चित्तं मनः, मदनसेनया अपहृतम् इति भावः, धर्मदत्तस्य इत्यनेन सम्बन्धः। च तस्य धर्मदत्तस्य तद्दर्शनदुःखाग्निसन्तप्तं तदप्राप्तिनिमित्तकक्लेशानलदग्धम् इत्यर्थः, गृहान्तरं विवेश इति मदनसेनाया गृहमध्यप्रवेशात् तया अपहृतस्य धर्मदत्तचित्तस्यापि गृहमध्यप्रवेशो बोद्धव्यः इति भावः। भास्वान् सूर्यः च, तद्दर्शनजनितरागः तस्याः मदनसेनायाः दर्शनात् जनितः उत्पन्नः रागः अनुरागः रक्तवर्णता च यस्य तादृशः तद्दर्शनजनितरागः ताम् दृष्ट्वा समुत्पन्नरागः, अस्तगमनकालिकरक्तवर्णश्च, तादृशः सन् इत्यर्थः, अपराम्बुधौ पश्चिमसमुद्रे, निपपात तदप्राप्तिजनितदुःखात् इति भावः, अस्तं गतः अस्तमितः सूर्यः समुद्रगर्भे निमज्जतीति प्रतीतिर्जायते दूरात्। तां च सुमुखीं नक्तं रात्रौ अभ्यन्तरागतां गृहान्तरं गच्छन्तीं, दृष्ट्वा तन्मुखाब्जविनिर्जितः तद्वदनकमलपराभूतः चन्द्रः शनैः मन्दम् मन्दम् उदगात् उदगमत्। तस्याः मुखशोभया निर्जितचन्द्रः तदग्रे स्थातुम् लज्जितः सन् एतावन्तम् कालम् अन्तराले अतिष्ठत्, इदानीम् ताम् स्थानान्तरगताम् दृष्ट्वा पुनः शनैः तत्र आगतवान् इति तात्पर्यम्। धर्मदत्तश्च तावत् गृहं गत्वा ताम् अनुचिन्तयन् शयने शय्यायाम् चन्द्रपादाहतः चन्द्रस्य पादेन किरणेन आहतः पीडितः चन्द्रपादादाहतः चन्द्रांशुसन्तप्तः, चन्द्रकिरणस्य विरहोद्दीपकत्वात् इति भावः, लुठन् गात्राणि विक्षिपन् तस्थौ आसीत्। यत्नेन सखिभिः सुहृद्भिः बन्धुभिः स्वजनैः च यद्वा सखिभिः सहायैः सहचरैः इति यावत्, बन्धुभिः मित्रैः पृच्छ्यमानः जिज्ञास्यमानः न किञ्चित् न किमपि, कथयामास कथितवान्। निशि रात्रौ, च कृच्छ्रात् कष्टेन, प्राप्तनिद्रः तथैव पूर्ववदेव, मदनसेना प्रासादाग्रम् तत्पुरतः तिष्ठति इत्येवंरूपेण इत्यर्थः। तां पश्यन् स्वप्ने इति भावः। अनुनयन् अनुरोधं कुर्वन्, समुत्सुकः समुत्कण्ठितः तदप्राप्तिनिमित्तक इति भावः, किमिव नाकरोत्, प्रातश्च प्रबुद्धः जागरितः, गत्वा रहसि निर्जने स सखीं प्रतीक्षमाणाम् अपेक्ष्यमानाम्, उद्यानवर्तिनीं मदनसेनां ददर्श अपश्यत्, उपेत्य तत्समीपं गत्वा, च परिष्वङ्गलालसः परिषङ्गाय संश्लेषाय, आलिङ्गनाय इत्यर्थः, लालसा अतीव तृष्णा, औत्सुक्यं वा यस्य तादृशः परिष्वङ्गलालसः आलिङ्गनकामः सन् इत्यर्थः आलिङ्गभिलाषी इति यावत्, प्रेमपेशलैः प्रेम्णा अनुरागेण पेशलैः चारुभिः मनोहरैः इत्यर्थः, प्रेमपेशलैः अनुरागमधुरैः इति यावत्। वचोभिः वाक्यैः, चरणानलः पादौ पतितः, उपच्छन्दयामास प्रार्थयामास प्रार्थितवान् स्वम् पतिरूपेण ग्रहणार्थम् अनुरुरोध इत्यर्थः।

### सरलार्थः

राजा विक्रमादित्यः पूर्ववद् शिंशपामूलं गत्वा वेतालं च नीत्वा आगच्छन् आसीत्। स वेतालः राज्ञः श्रमस्य नाशाय कथां कथितुम् आरब्धवान्। प्राचीनकाले वीरबाहुः इति नाम्ना प्रसिद्धः कश्चन नृपतिः आसीत्। सः सुरलोकस्य इन्द्रः इव समस्तभूपतीनां पूजनीयः आसीत्। सः अनङ्गपुरम् इत्याख्ये नगरे वसति स्म। तस्मिन् नगरे अर्थदत्तनामकः महान् धनिकः वणिक् वसति स्म। तस्य पुत्रस्य नाम



आसीत् धनदत्तः, कन्यायाः नाम आसीत् मदनसेना। धनदत्तस्य सखा धर्मदत्तः एकस्मिन् दिवसे तां मदनसेनां दृष्टवान्। एकवारं दृष्ट्वा एव स तस्याः प्रेम्नि पतितः। तां प्राप्तुं तस्य मनसि आकाङ्क्षा प्रबला अभवत्। रात्रौ तस्याः विरहवेदनया निद्रां कर्तुमपि स न शक्तवान्। चन्द्रस्य प्रभा अपि तस्य समीपे वेदनीया इति प्रतिभाति स्म। परस्मिन् दिवसे प्रातः उद्याने तां दृष्ट्वा तस्याः सकाशं गत्वा स्वस्य अभिलाषम् उक्तवान्।

**व्याकरणविमर्शः**

- सकलभूपालशिरःसमभ्यर्चितशासनः - सकलानाम् सर्वेषाम् भूपालानाम् राज्ञाम् शिरोभिः मस्तकैः यद्वा सकलैः भूपालैः शिरसा नतमस्तकेन समभ्यर्चितम् सम्पूजितम् समादारेण गृहीतम् इति यावत्, शासनम् आज्ञा यस्य सः सकलभूपालशिरःसमभ्यर्चितशासनः सर्वराजपूजितादेशः इति बहुव्रीहिसमासः।
- पाकशासनः - पाकः असुरविशेषः, तस्य शासनः निहन्ता पाकशासनः इन्द्रः।
- सार्थवाहः - सार्थम् समूहम् धनसमूहम् द्रव्यसमूहम् वा इत्यर्थः, वहति यः सः सार्थवाहः, वणिक् इति यावत्।
- लावण्यनिर्झराम् - लावण्यम् मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥ इत्युक्तलक्षणकान्तिविशेषः, तदेव रसः जलम् (रसो गन्धरसे जले इति मेदिनी।) तस्य निर्झरः वारिप्रवाहः, स इव इत्यर्थः, ताम् लावण्यरसनिर्झराम् लावण्यवारिझराम्, अतीव लावण्यवतीम् इत्यर्थः इति षष्ठीतत्पुरुषसमासः।
- कुचकुम्भाग्रबलित्रितयरञ्जिताम् - कुचौ स्तनौ कुम्भौ घटौ हस्तिशिरःस्थमांसपिण्डौ इव वा, तयोः अग्रम् कुचकुम्भाग्रम् चुचुकम् बलिः जठरावयवविशेषः, तस्याः त्रितयम् त्रिसंख्यकम् बलित्रितयम् उदररेखात्रयम्, कुचकुम्भाग्रम् च बलित्रितयम् च कुचकुम्भाग्रबलित्रितये ताभ्याम् रञ्जिताम् शोभिताम् कुचकुम्भाग्रबलित्रितयरञ्जिताम् चुचुकत्रिबलिशोभिताम् इति तृतीयातत्पुरुषसमासः।
- यौवनद्विरहस्येव – यौवनम् तारुण्यम् एव, द्विरदः हस्ती दुर्वारवेगत्वात् इति भावः। तस्य यौवनद्विरदस्य तारुण्यगजस्य इति यावत्।
- लीलामज्जनवापिकाम् विहारयोग्यसरोवररूपाम् - लीलार्थम् क्रीडार्थम् जलक्रीडार्थम् च, मज्जनवापिका स्नानसरः, ताम् तादृशीम् लीलामज्जनवापिकाम् क्रीडासरसीम् इव इत्यनेन अन्वयः, द्विरदः यथा सरसि अवगाह्य क्रीडति तथा यौवनमपि लावण्यरसनिर्झरे निमज्ज्य चिक्रीडिषति इति चतुर्थीतत्पुरुषसमासः।
- स्मरबाणौघपातापहृतचेतनः स्मरस्य कामस्य बाणौघानाम् शरसमूहानाम् पञ्चानामेव बाणानाम् इत्यर्थः, पातेन पतनेन आघातेन इत्यर्थः, अपहृता चोरिता, विनष्टा इत्यर्थः, चेतना संवित् यस्य तादृशः स्मरबाणौघपातापहृतचेतनः कामशराघातविनष्टसंज्ञः इति बहुव्रीहिसमासः।
- धारधिरूढेन धारा सैन्धाग्रिमस्कन्धः, सैन्धपुरोभागः इत्यर्थः। तत्र अधिरूढेन अधिष्ठितेन धाराधिरूढेन सैन्धाग्रस्थितेन, सेनापतिरूपिणा इत्यर्थः।



- अतिचक्राम – अतिपूर्वकात् क्रमधातोः लिटि तिपि णलि रूपम्।
- तद्दर्शनदुःखाग्निसन्तप्तम् - तस्याः मदनसेनायाः दर्शनेन अवलोकनेन यत् दुःखम् कामबाणाहुतिजनिकष्टम्, तदेव अग्निः अनलः तेन सन्तप्तम् प्रज्वलितम् तद्दर्शनदुःखाग्निसन्तप्तम् तदप्राप्तिनिमित्तक्लेशानलदग्धम् इत्यर्थः।
- तन्मुखाब्जविनिर्जितः - तस्याः मदनसेनायाः मुखाब्जात् मुखपद्मात् विनिर्जितः पराभूतः अत एव पलायितः इति भावः, तन्मुखाब्जविनिर्जितः तद्वदनकमलपराभूतः।

## ४.३.३) विभागः -२

**साब्रवीत्- अहं कन्या, साम्प्रतं ते परदाराश्च, यतोऽहं पित्रा समुद्रदत्ताय वणिजे वाचा दत्ता। कतिपयैरेव दिनैर्विवाहो मे भविता। तत् तूष्णीं गच्छ, मा कश्चित् पश्येत्, ततो दोषो भवेत्। इत्युक्तस्तया त्यक्तश्च स धर्मदत्तस्तां जगाद- सुन्दरि, यदस्तु, त्वां विना नाहं जीवेयम्। तदाकर्ण्य सा वणिक्सुता कन्याभावदूषणभयाकुला तमुवाच- तर्हि विवाहो मे तावत् सम्पद्यतां, पिता मे चिरकाङ्क्षितं कन्यादानफलं लभताम्। ततोऽहं त्वां निश्चितं प्रणयेन समुपेष्यामि। तदाकर्ण्य सोऽब्रवीत्- अन्यपूर्वा प्रिया मम नेष्टा। परभुक्ते कमले विमलेऽपि किं रतिर्जायते। इति तेनाभिहिता सावादीत्- तर्हि कृतोद्वाहैव पूर्वं त्वामुपयास्यामि, ततः पतिम् इति। एवमुक्तवतीं तां वणिक्पुत्रीम् प्रत्ययार्थं शपथेन सत्येन स धर्मदत्तः सम्बन्धः। ततस्तेनोज्झिता सा समुद्विग्ना स्वं मन्दिरं विवेश।**

**व्याख्या**

सा मदनसेना, अब्रवीत् अवदत्, अहं कन्या कुमारी, अनूढा अविवाहिता इति यावत्, साम्प्रतम् अधुना ते परदाराः परपत्नी च, यतः यस्मात्, अहं पित्रा जनकेन, समुद्रदत्ताय वणिजे व्यापारिणे, वाचा वाक्येन, दत्ता समर्पिता, अहम् वाग्दत्ता अभवम् इत्यर्थः, कन्याम् इमाम् तुभ्यम् अहम् विवाहविधिना दास्यामि, इत्येवंरूपेण पित्रादिभिः दातुम् सङ्कल्पिता कन्या वाग्दत्ता, तस्याः अन्येन सह विवाहः गर्हितः इति शास्त्रकृताम् मतम्, कतिपयैः एव दिनैः विवाहः परिणयः, मे भविता भविष्यति, तत् तस्मात्, तूष्णीं किमपि अनुक्त्वा, गच्छ याहि, मा कश्चित् पश्येत्, ततः दोषः भवेत्। इत्युक्तः तया त्यक्तः प्रत्याख्यातः च स धर्मदत्तः तां जगाद अकथयत् सुन्दरि सौम्ये, यदस्तु, त्वां विना नाहं जीवेयम् जीवितुं शक्नुयाम्। तद् आकर्ण्य श्रुत्वा सा वणिक्सुता कन्याभावदूषणभयाकुला विवाहपूर्वावस्थायाः नाशरूपभयेन व्याकुला, तम् उवाच अवदत् तर्हि यद्येवं तदा इत्यर्थः, विवाहः मे तावत् सम्पद्यतां सिध्यतु निष्पन्नो भवतु इत्यर्थः, पिता मे चिरकाङ्क्षितं सदाप्रार्थितम्, कन्यादानफलं कन्यादानेन दुहितृदानेन यत् फलम् पुण्यरूपम् इत्यर्थः, लभताम्, ततः अहं त्वां निश्चितम् अवश्यम्, प्रणयेन प्रेमभावेन, समुपेष्यामि सङ्गमिष्ये, त्वत्प्रणयिनीरूपेण तव समीपं गमिष्यामि इत्यर्थः। तद् आकर्ण्य श्रुत्वा सः अब्रवीत् उक्तवान् अन्यपूर्वा केनापि पूर्वं स्वीकृता, मम प्रिया नेष्टा न काङ्क्षिता, परभुक्ते अन्योपभुक्ते अपरेण सेविते, कमले पद्मे विमले शुभ्रे अपि किं रतिः प्रीतिः, अनुरागः इति यावत्। जायते भवति। इति तेन अभिहिता कथिता, सा अवादीत् उक्तवान् तर्हि कृतोद्वाहैव विवाहं कृत्वा एव, पूर्वं विवाहानन्तरम् स्वामिसम्भाषणात् प्रागेव त्वाम् उपयास्यामि तव समीपं गमिष्यामि, ततः पतिम् इति। एवम् उक्तवतीं कथयन्तीम्, तां वणिक्पुत्रीं प्रत्ययार्थं विश्वासार्थम्, शपथेन



सत्येन च स धर्मदत्तः सम्बद्धः। ततः तेन उज्झिता मुक्ता, सा समुद्विग्ना व्याकुलचित्ता, स्वं मन्दिरं स्वस्याः गृहम्, विवेश प्रविष्टवती इत्यर्थः।

**सरलार्थः**

तदा सा उक्तवती यत् सा कन्या, तस्याः विवाहः न अभवत्। किञ्च समुद्रदत्तेन सह तस्याः विवाहः अपि निश्चितः। तस्मात् तत् न सम्भवति इति। तदा स उक्तवान् यत् तां न प्राप्नोति चेत् स न जीविष्यति इति। तदा स्वस्याः चरित्रदूषणं स्याद् इति चिन्तया व्याकुला सा उक्तवती यत् विवाहानन्तरं तस्य सकाशं गमिष्यति इति। तदा स उक्तवान् यत् केनापि पूर्वं स्वीकृतां प्रियां स न स्वीकरिष्यति इति। ततः परं सा वचनं दत्तवती यत् - विवाहात् परम् आदौ धर्मदत्तस्य समीपम् आगमिष्यति, परं समुद्रदत्तस्य समीपम् गमिष्यति इति।

**व्याकरणविमर्शः**

- कन्याभावदूषणभयाकुला - कन्याभावस्य कुमारीत्वस्य, पुंसंसर्गाभावरूपस्य इत्यर्थः, दूषणम् दुष्टिः, बलपूर्वकालिङ्गनादिना धर्मदत्तेन तद्विशुद्धितायाः अपनोदनम् इत्यर्थः, तस्मात् भयाकुला त्रस्ता कन्याभावदूषणभयाकुला सतीत्वनाशभयव्यस्ता।
- अन्यपूर्वा - अन्यः अपरः पुरुषः पूर्वः प्रथमः प्रणयीति भावः, यस्याः सा अन्यपूर्वा पूर्वप्रणयिनं विहाय पश्चात्कृततद्भिन्नप्रणयपात्रा, पुनर्भूरिति यावत् इति बहुव्रीहिसमासः। यद्वा अन्येन पुरुषान्तरेण पूर्वम् प्रथमम् उपभुक्तम् इति भावः या सा अन्यपूर्वा पुरुषान्तरोपभुक्ता इति बहुव्रीहिसमासः।
- कृतोद्वाहः - कृतः सम्पादितः उद्वाहः परिणयः यस्याः सा कृतोद्वाहा सम्पन्नविवाहव्यापारा।

## ४.३.४) विभागः ३

**अथ प्राप्ते लग्नदिवसे निर्वृत्तोद्वाहमङ्गला सा गत्वा पतिगृहं नीत्वा च उत्सवेन वासरं, निशि पत्या समं शयनीय-गृहमध्यास्त, तत्र शय्यानिषण्णापि असम्मुखी समुद्रदत्तस्य तस्याः पत्युः परिष्वङ्गं न प्रत्यपद्यत। तेनानुनीयमानापि सा यदा उदश्रुः बभूव, नाहमस्या अभिमतोऽस्तीति हृदाकरोत्, अवादीच्च- सुन्दरि, यदि तेऽहं नाभिमतः, तत्ते योऽभिमतः,तं सेवितुं गच्छ। तदाकर्ण्य सा नतमुखी शनैरवादीत्- नाथ, त्वं मे प्राणाधिकः प्रेयान्, किन्तु मे विज्ञप्तिमेकां शृणु, सहर्षं मे अभयं प्रयच्छ, शपथञ्च कुरुष्व, आर्यपुत्र, अवक्तव्यमपि ते वदामि। एवमुक्तवती सा तथेति कृच्छ्रात् प्रतिपाद्यमानं तं सविषादं सलज्जं सभयञ्चावादीत्- नाथ, एकदा एकाकिनीं गृहोद्याने मां दृष्ट्वा धर्मदत्तो नाम मम भ्रातुः सखा युवा स्मरातुरः मामरुणत्। अहं परीवादं पितुः कन्यादानफलञ्च रक्षन्ती हठप्रवृत्तस्य तस्य वाचमयच्छं यत्- पूर्वं विवाहिता त्वामुपेष्यामि, ततः पतिम् इति। तत् प्रभो, मे सत्यं प्रतिपालय, अनुमन्यस्व मां तदन्तिकगमनाय, तन्निकटं गत्वा क्षणेन आगमिष्यामि, न हि आबाल्यसेवितं सत्यमतिक्रमितुं शक्नोमि। इति तस्याः वचोवज्रपातेन सहसा हतः समुद्रदत्तः सत्येन बद्धः क्षणमचिन्तयत्- अहो धिक्, इयमन्यरक्ता, एतया ध्रुवमेव गन्तव्यं, तत् कथं**



**सत्यं हन्मि। यातु इयं, कोऽस्याः परिग्रहः। इत्यालोच्य तां यथेष्टगमनाय अनुमेने। सापि सहसा समुत्थाय तस्माद् वेश्मनो निरगात्।**

### व्याख्या

अथ प्राप्ते उपस्थिते लग्नदिवसे विवाहदिवसे, निर्वृत्तोद्वाहमङ्गला सम्पन्नशुभपरिणयव्यापारा, सा गत्वा पतिगृहं स्वामिगृहम्, नीत्वा अतिवाहयित्वा उत्सवेन आनन्देन, वासरं दिवसम्, निशि च पत्या समं शयनीयगृहम् अध्यास्त प्रविष्टवती। तत्र शय्यानिषण्णापि शय्यायाम् उपविष्टापि शय्यास्थितापि, असम्मुखी विमुखी पत्यौ पराङ्मुखी इत्यर्थः, समुद्रदत्तस्य तस्याः पत्युः परिष्वङ्गम् आलिङ्गनम्, न प्रत्यपद्यत न प्राप्नोत्, पतिं पश्चात्कृत्य स्थिततत्वात् तस्य आलिङ्गनादिकं न बहु अमन्यत इत्यर्थः। तेन अनुनीयमाना अनुरोधिता अपि सा यदा उदश्रुः अश्रुयुक्ता बभूव अजायत, तदा सः समुद्रदत्तः नाहम् अस्याः अभिमतः अस्मि प्रार्थितः, प्रियः इत्यर्थः नास्मि इति हृदाकरोत् हृदा मनसा अकरोत् स्वीकृतवान्, अवादीत् उक्तवान् च सुन्दरि, यदि ते तव अहं नाभिमतः, तत्ते यः अभिमतः, तं सेवितुं गच्छ। तदाकर्ण्य सा नतमुखी शनैः अवादीत् नाथ, स्वामिन्, त्वं मे प्राणाधिकः प्रेयान् प्रियतमः, किन्तु मे विज्ञप्तिम् एकां विज्ञापनम् एकम् शृणु, सहर्षं हर्षेण आनन्देन सह सहर्षम् सानन्दम्, प्रसन्नचेतसा इत्यर्थः मे मह्यम्, अभयं प्रयच्छ आश्वासं देहि, शपथं च कुरुष्व आर्यपुत्र इति पत्युः सम्बोधनम्, अवक्तव्यम् अनुच्चार्यम् अपि लज्जाकरत्वात् इति भावः, ते तुभ्यम्, वदामि विज्ञापयामि एवम् उक्तवती सा तथा तदेव भवतु, वक्तव्यम ते ब्रूहि, अभयं ददामि, शपथं च करोमि इत्येवंरूपम् इत्यर्थः। इति कृच्छ्रात् प्रतिपद्यमानं अङ्गीक्रियमाणम् तं समुद्रदत्तम्, सविषादं सलज्जं सभयं च अवादीत् नाथ, एकदा एकाकिनीं गृहोद्याने मां दृष्ट्वा धर्मदत्तः नाम मम भ्रातुः सखा मित्रम्, युवा स्मरातुरः कामार्तः, माम् अरुणत् रुद्धवान्। अहं परीवादम् अपवादम् लोकनिन्दाम् इति यावत्। पितुः कन्यादानफलं च रक्षन्ती पालयन्ती हठप्रवृत्तस्य तस्य वाचम् वाक्यम्, अयच्छम् अददाम् अङ्गीकृतवती इत्यर्थः। यत् पूर्वं विवाहिता त्वाम् उपेष्यामि, ततः पतिम् इति। तत् प्रभो, मे सत्यं प्रतिपालय रक्ष, अनुमन्यस्व अनुमतिं प्रयच्छ, मां तदन्तिकगमनाय तस्य समीपगमनार्थम्, तन्निकटं गत्वा क्षणेन आगमिष्यामि, न हि आबाल्यसेवितं सत्यम् अतिक्रमितुं शक्नोमि पारयामि। इति तस्याः वचोवज्रपातेन वाग्बाणेन, सहसा हतः समुद्रदत्तः सत्येन बद्धः क्षणम् अचिन्तयत् चिन्तितवान्, अहो, धिक्, इयम् अन्यरक्ता पतिव्यतिरिक्तं प्रीणाति, एतया ध्रुवम् एव गन्तव्यं गमनीयम्, तत् कथं सत्यं हन्मि लङ्घयामि। यातु गच्छतु इयम्, कः अस्याः परिग्रहः ग्रहणम्। अस्याः ग्रहणे किं प्रयोजनम्। नैव एनाम् पत्नीत्वेन गृह्णामी इत्यर्थः। इति आलोच्य विवेचनाम् कृत्वा, तां यथेष्टगमनाय स्वाभिष्टस्थाने गमनार्थम्, अनुमेने अनुमतिम् अयच्छत्। सा अपि सहसा हठात् समुत्थाय उत्थिता तस्मात् वेश्मनः गृहात् निरगात् बहिः अगच्छत् इत्यर्थः।

### सरलार्थः

विवाहात् परं वासररात्रौ पत्युः सकाशं गत्वा सा क्रन्दितुम् आरब्धवती। यदा समुद्रदत्तः कारणं पृष्टवान् तदा सा स्वस्याः विवाहात् पूर्ववृत्तान्तम् तस्मै कथितवती। समुद्रदत्तः दृष्टवान् यत् सा अन्यं प्रीणाति। इयम् माम् न प्रीणाति। अतः अस्याः अवरोधः मास्तु। तस्माद् स गमने शीघ्रम् अनुमतिं दत्तवान्। सापि अनुमतिम् प्राप्य धनदत्तसमीपम् गन्तुम् गृहात् झटिति निर्गता।



**व्याकरणविमर्शः**

- लग्नदिवसे - लग्नेन शुभराशीनाम् उदयेन हेतुना दिवसे विवाहार्थनिर्दिष्टदिने लग्नदिवसे वैवाहिकशुभराशियुक्तदिने इति तृतीयातत्पुरुषसमासः।
- निर्वृत्तोद्वाहमङ्गला - निर्वृत्तं निष्पन्नम् उद्वाहाय विवाहाय विवाहकर्मसम्पादनाय इत्यर्थः, मङ्गलम् शुभकर्म यस्याः सा निर्वृत्तोद्वाहमङ्गला सम्पन्नशुभपरिणयव्यापारा।
- उदश्रुः - उत् उद्गतम् अश्रु नेत्रोदकं यस्याः सा उदश्रुः दृष्टनेत्रनीरा रोदनोन्मुखी इति यावत् इति बहुव्रीहिसमासः।
- हठप्रवृत्तस्य – हठे बलात्कारे बलपूर्वकावरोधे इत्यर्थः, प्रवृत्तस्य उद्यतस्य हठप्रवृत्तस्य इति सप्तमीतत्पुरुषसमासः। प्रसभम् माम् अवरोद्धुम् उपक्रान्तस्य तस्य धनदत्तस्य।
- वचोवज्रपातेन - वचांसि वाक्यानि वज्रम् अशनिरिव तस्य पातेन पतनेन वचोवज्रपातेन वाग्वज्राघातेन इत्यर्थः इति षष्ठी तत्पुरुषसमासः।
- अन्यारक्ता - अन्यस्मिन् पुरुषान्तरे पतिव्यतिरिक्ते रक्ता अनुरक्ता अनुरागिणी अन्यरक्ता परपुरुषासक्ता इति सप्तमीतत्पुरुषसमासः।

## ४.३.५) विभागः ४

**अथ सा यान्ती मदनसेना निशि मार्गे एकाकिनी केनापि चौरेण प्रधाव्य वसनाञ्चलाद् रुरुधे, ऊचे च बिभ्यती सा- का त्वं सुभ्रु। क्व यासि। सावादीत्- मुञ्च माम्, किं तवानेन प्रसङ्गेन। कार्यमस्ति मे। ततश्चौरोऽब्रवीत्- सुन्दरि, चौरात् मत्तः कथं त्वं मुच्यसे। तदाकर्ण्य सावदत्- गृहाण मे आभरणानि। ततश्चौरः अभ्यधात्- शोभने, किमेभिरुत्पलैः। चन्द्रकान्ताननां जगदाभरणभूतां भवतीं नैवाहं त्यजामि। इति तेनोक्ता विवशा सा वणिङ्नन्दिनी निजवृत्तान्तमाख्याय तमेवं प्रार्थयामास- भद्र, क्षणम् अपेक्षस्व, यावत् सत्यमनुपालयामि। एतदाकर्ण्य चौरस्तां सत्यसन्धां मत्वा मुमोच, तस्थौ च तत्र तदागमं प्रतीक्षमाणः। सापि तस्य धर्मदत्तस्य वणिजोऽन्तिकमाजगाम। स च धर्मदत्तस्ताम् अभीष्टां प्राप्तां दृष्ट्वा यथावृत्तं पृष्ट्वा विचिन्त्य च क्षणमब्रवीत्- सुन्दरि, सत्येन ते पुष्टोऽस्मि, त्वया परस्त्रिया मे नास्ति प्रयोजनम्। यावत् त्वां कश्चिन्नेक्षते, तावत् यथागतं गम्यताम् इति तेन त्यक्ता सा तथेति तद्गेहात् प्रत्यागमत्। अथ पथि चौरस्य प्रतिपालयतो निकटं प्राप्य- ब्रूहि, कस्ते वृत्तान्तस्तत्र गतायाः। इति पृच्छते तस्मै सा तेन वणिजा यथोक्तं तत् सर्वमाख्यातवती। ततः चौरस्तामवादीत्- यद्येवं, तत् मयापि सत्यतुष्टेन विमुक्तासि, साम्प्रतं साभरणा गृहं व्रज इति। एवं तेनापि सन्त्यक्ता रक्षिता अनृणा अलुप्तशीलमुदिता पत्युरन्तिकमाययौ। तत्र गुप्तं प्रविष्टा प्रहृष्टैवागता पृष्टा तस्मै पत्ये तत् सर्वं यथावद् अवर्णयत्। सोऽपि अम्लानमुखकान्तिमसम्भोगलक्षणाम् अनष्टचारित्रां सत्यपालनगताम् अदुष्टमानसां सम्भाव्य अभिनन्द्य च तया सह यथासुखं तस्थौ।**



### व्याख्या

अथ सा यान्ती गच्छन्ती, मदनसेना निशि रात्रौ मार्गे एकाकिनी निःसङ्गिनी, केनापि चौरेण प्रधाव्य धावित्वा वसनाञ्चलाद् वस्त्रप्रान्तदेशम् आकृष्य इत्यर्थः। रुरुधे प्रतिरुद्धा, ऊचे उक्ता च बिभ्यती त्रस्ता सा का त्वं सुभ्रु सुन्दरभ्रूसमन्विते, क्व कुत्र यासि गच्छसि। सा अवादीत् अवदत्, मुञ्च त्यज, मां किं तवानेन प्रसङ्गेन व्यापारेण। कार्यम् अस्ति मे। ततः चौरः अब्रवीत् उक्तवान्, सुन्दरि, चौरात् मत्तः कथं त्वं मुच्यसे मुक्तिं प्राप्स्यसि। तदाकर्ण्य सा अवदत् गृहाण मे आभरणानि सुवर्णानि। ततः चौरः अभ्यधात् उक्तवान् शोभने, किम् एभिः उत्पलैः प्रस्तरैः। चन्द्रकान्ताननां इन्दुसुन्दरमुखीम् जगदाभरणभूतां भवतीं नैव अहं त्यजामि त्यक्तुं शक्नोमि। इति तेन उक्ता विवशा व्याकुला किमपि कर्तुम् असमर्था, सा वणिङ्नन्दिनी निजवृत्तान्तम् आख्याय उक्त्वा, तम् एव प्रार्थयामास प्रार्थितवती भद्र, क्षणम् अपेक्षस्व अपेक्षां कुरु, यावत् सत्यम् अनुपालयामि, इहस्थस्यैव अत्रैव वर्तमानस्य, ते तव, पार्श्वं समीपम्, सत्वरं शीघ्रम्, एष्यामि आगमिष्यामि, नाहम् इमां गिरम् वाचम्, उल्लङ्घयिष्यामि अन्यथा करिष्यामि। एतद् आकर्ण्य चौरः तां सत्यसन्धां मत्वा बुद्ध्वा, मुमोच मुक्तिम् अयच्छत्, तस्थौ आसीत् च तत्र तदागमं प्रतीक्षमाणः प्रतीक्षां कुर्वन्। सा अपि तस्य धर्मदत्तस्य वणिजः व्यापारिणः, अन्तिकं समीपम्, आजगाम आगतवती। स च धर्मदत्तः तां अभीष्टाम् ईप्सिताम्, प्राप्तां लब्धाम्, दृष्ट्वा यथावृत्तं वृत्तान्तम्, पृष्ट्वा विचिन्त्य चिन्तनं कृत्वा च क्षणम् अब्रवीत् उक्तवान् सुन्दरि, सत्येन सत्यपालनेन ते तुष्टः प्रीतः अस्मि त्वया परस्त्रिया परपत्न्या, मे नास्ति प्रयोजनम् आवश्यकता, यावत् त्वां कश्चित् नेक्षते न पश्यति, तावत् यथागतं गम्यतां गच्छतु, इति तेन त्यक्ता सा तथा येन प्रकारेण पथा वा आगतवती तेनैव प्रकारेण पथा वा तद्गेहात् प्रत्यागमत् प्रत्यागतवती।

अथ पथि चौरस्य प्रतिपालयतः प्रतीक्षमाणस्य, निकटं समीपम् प्राप्य ब्रूहि वद, कस्ते वृत्तान्तः तत्र गतायाः गतवत्याः इति पृच्छते तस्मै सा तेन वणिजा यथोक्तं तत् सर्वम् आख्यातवती उक्तवती। ततः चौरः ताम् अब्रवीत् उक्तवान् यदि एवं तत् तद्धेतोः, मया अपि सत्यतुष्टेन सत्येन सत्यधर्मसंरक्षणेन तुष्टः प्रीतः तेन सत्यतुष्टेन सत्यपालनहेतुकसन्तुष्टेन विमुक्ता मुक्ता असि त्वम् इति शेषः, साम्प्रतम् अधुना साभरणा आभरणयुता गृहं स्वस्याः आवासम् व्रज गच्छ इति। एवं तेन अपि सन्त्यक्ता विमुक्ता, रक्षिता अनृणा प्रतिज्ञा-ऋणमुक्ता, अलुप्तशीलमुदिता निजसतीत्वसंरक्षणप्रीता इत्यर्थः, पत्युः भर्तुः, अन्तिकं समीपम्, आययौ आगतवती तत्र गुप्तं सुरक्षितम् अन्यैः अदृष्टम् यथा तथा इत्यर्थः। प्रविष्टा प्रहृष्टा स्मिता एव आगता, पृष्टा पत्या इति शेषः। तस्मै पत्ये तत् सर्वं सकलम्, यथावद् अवर्णयत् वर्णितवती सः अपि अम्लानमुखकान्तिं अकलङ्कचारित्रतया हृष्टवदनाम् , ताम् असम्भोगलक्षणां चम्बननखक्षतादिसम्भोगलक्षणवर्जिताम्, अनष्टचारित्रां अकलङ्कितस्वभावाम्, सत्यपालनगतां प्रतिज्ञारक्षणार्थमेव प्रस्थिताम्, अदुष्टमानसां विशुद्धहृदयाम्, सम्भाव्य वितर्क्य, अभिनन्द्य प्रशस्य सन्तोष्य वा, च तया सह यथासुखं सुखेन, तस्थौ कालं यापितवान् इत्यर्थः।

### सरलार्थः

परं यदा सा धर्मदत्तस्य समीपं आगच्छन्ती आसीत् तदा मार्गे एकः चौरः समागतः। सः अपि तां गन्तुम् अनुमतिं न ददाति स्म। तदा धर्मदत्तात् प्रत्यागमनसमये तस्य समीपम् आगमिष्यति इत्युक्त्वा सा



ततः निर्गत्य धर्मदत्तस्य निकटं गतवती। एतेषु दिनेषु गतेषु धर्मदत्तस्य कामपीडा शान्ता जाता। अपि च सा परपत्नी। तस्माद् सः तां स्वपत्युः समीपं गमनाय उक्तवान्। तदा तस्य सकाशात् आगमनसमये चौरसमीपं गतवती। चौरः तस्याः सत्यनिष्ठतां दृष्ट्वा प्रीतः सन् तां स्वगृहगमनाय उक्तवान्। परं यदा सा पत्युः समीपं गतवती तदा समुद्रदत्तः दृष्टवान् यत् तस्याः गात्रे कुत्रापि सम्भोगचिह्नं नास्ति। किञ्च सा सत्यपालनं कृतवती परन्तु स्वपित्रोः यथा अवमाननं न स्यात् तथा कृतवती। एतेन मदनसेनायाः उपरि समुद्रदत्तस्य प्रीतिः वर्धिता। सः तां सादरं स्वीकृतवान्।

**व्याकरणविमर्शः**

- सुभ्रु - सु सुष्ठु शोभने भ्रुवौ यस्याः सा सुभ्रूः तत्सम्बुद्धौ सुभ्रु सुन्दरभ्रूसमन्विते इत्यर्थः।
- चन्द्रकान्ताननाम् - चन्द्रवत् कान्तम् सुन्दरम् आननम् वदनम् यस्याः ताम् चन्द्रकान्ताननाम् इन्दुसुन्दरमुखीम् इति बहुव्रीहिसमासः।
- जगदाभरणभूताम् - जगताम् भुवनानाम् आभरणभूताम् अलङ्काररूपिणीम् जगदाभरणभूताम् लोकखलामभूतान्, अतीव सुरूपाम् इत्यर्थः इति षष्ठीतत्पुरुषसमासः।
- सत्यसन्धाम् - सत्या अमृषा सन्धा प्रतिज्ञा यस्याः तादृशीम् सत्यसन्धाम् यथार्थवादिनीम् इति यावत् इति बहुव्रीहिसमासः।
- अनृणा - नास्ति ऋणम् देयम् प्रतिज्ञापालनरूपम् अवश्यपरिशोधनीयमित्यर्थः यस्याः सा अनृणा प्रतिज्ञा-ऋणमुक्ता इति बहुव्रीहिसमासः।
- अलुप्तशीलमुदिता - अलुप्तेन अविनष्टेन शीलेन सद्वृत्तेन चारित्र्येण हेतुना इत्यर्थः, मुदिता हृष्टा इति तृतीयातत्पुरुषसमासः। यद्वा अलुप्तम् शीलम् यस्याः सा अलुप्तशीला सा च असौ मुदिता चेति कर्मधारयसमासः।
- अम्लानमुखकान्तिम् - अम्लाना अमलिना प्रफुल्ला इति यावत्, मुखकान्तिः मुखशोभा यस्याः ताम् अम्लानमुखकान्तिम् अकलङ्कचारित्रतया हृष्टवदनाम् इति बहुव्रीहिसमासः।
- असम्भोगलक्षणाम् - न विद्यते सम्भोगस्य रतस्य पुंसंसर्गस्य इत्यर्थः, लक्षणम् चिह्नम् विशृङ्खलवेशादिकम् इति यावत्, यस्याम् यस्या वा ताम् असम्भोगलक्षणाम् अदृष्टशृङ्गारचिह्नाम् यथापूर्ववेशाम् इति यावत् इति बहुव्रीहिसमासः।
- अनष्टचारित्राम् अनष्टम् अस्खलितम् चारित्रम् सद्वृत्तम् सत्स्वभावः इत्यर्थः, यस्याः ताम् अनष्टचारित्राम् अकलङ्कितस्वभावाम् इति बहुव्रीहिसमासः।
- सत्यपालनगताम् - सत्यस्य शपथस्य पालनाय रक्षणाय गताम् प्रयाताम् सत्यपालनगताम् प्रतिज्ञारक्षणार्थमेव प्रस्थिताम् न तु अभिसारार्थम् इति भावः इति चतुर्थीतत्पुरुषसमासः।
- अदुष्टमानसाम् - अदुष्टम् पवित्रम् मानसम् चित्तम् यस्याः ताम् अदुष्टमानसाम् विशुद्धहृदयाम् इति बहुव्रीहिसमासः।



## ४.३.६) विभागः - ५

**इति कथामुक्त्वा स वेतालस्तं भूपं पृच्छति स्म- राजन्, पूर्वोक्तं शापमनुस्मृत्य ब्रूहि, एषां चौरवणिजां मध्ये कः त्यागी। इति। तदाकर्ण्य स राजा मौनं विहाय तं वेतालमाह स्म- एषां चौरस्त्यागी, न पुनरुभौ तौ वणिजौ। यो हि पतिस्ताम् अत्यज्यां विवाह्यापि अजहात्, स कुलजः सन् अन्यासक्तां भार्यां जानन् कथं वहति। योऽपि अपरः, स भयात्। अथवा कालेन जीर्णासक्तिवेगात् तामत्याक्षीत्। चौरस्तु गूढचारी निरपेक्षः पापी, प्राप्तं साभरणं स्त्रीरत्नं यदमुञ्चत्, तेन स एव त्यागी इति। एतदाकर्ण्यैव स वेतालः पूर्ववत् स्वं पदमगात्, राजापि पुनस्तमानेतुं सयत्नोऽभवत्।।**

### व्याख्या

इति कथाम् उपाख्यानम्, उक्त्वा स वेतालः तं भूपं विक्रमादित्यम्, पृच्छति स्म राजन्, पूर्वोक्तं प्राक् कथितं शापमनुस्मृत्य शापं स्मृत्वा ब्रूहि वद, एषां चौरवणिजां चौरस्य तथा समुद्रदत्तधर्मदत्ताख्यवणिग्द्वयोश्च मध्ये कः त्यागी त्यागशीलः। तद् आकर्ण्य स राजा मौनं विहाय त्यक्त्वा, तं वेतालम् आह स्म उक्तवान् एषां चौरः त्यागी, न पुनः उभौ तौ वणिजौ। यः हि पतिः ताम् अत्यज्यां विवाह्य विवाहं कृत्वा अपि अजहात् त्यक्तवान्, स कुलजः सत्कुलोत्पन्नः सन् अन्यासक्तां भार्यां जानन् कथं वहति गृह्णाति इत्यर्थः, मोचयितुम् शक्नोति इति यावत्। केन प्रकारेण स्थापयति। यः अपि अपरः धर्मदत्तः, स भयात्। अथवा कालेन जीर्णासक्तिवेगात् जीर्णः क्षीणः आसक्तिवेगः अनुरागातिशय्यम् तस्मात् जीर्णासक्तिवेगात् जीर्णः क्षीणः आसक्तिवेगः अनुरागातिशय्यम् तस्मात्, बहुकालादर्शनेन मन्दानुरागत्वात् ताम् अत्याक्षीत् त्यक्तवान्, चौरः तु गूढचारी गूढं गुप्तम् चरति भ्रमति इति गूढचारी निशाविहारी, निर्जनप्रदेशविहारी वा निरपेक्षः समाजसम्बन्धपरिशून्यः पापी, प्राप्तं साभरणं स्त्रीरत्नं ललनाश्रेष्ठं यद् अमुञ्चत् त्यक्तवान्, तेन स एव त्यागी इति एतद् आकर्ण्य एव स वेतालः पूर्ववत् स्वं स्वकीयम्, पदं स्थानम् शिंशपावृक्षम् इत्यर्थः, अगात् गतवान् राजा अपि पुनः तम् आनेतुं यत्नवान् अभवत् इत्यर्थः।

### सरलार्थः

एवं कथां श्रावयित्वा वेतालः पृष्टवान् यत् चौर-समुद्रदत्त-धर्मदत्तानां मध्ये कः त्यागी इति। तदा विक्रमादित्यः उत्तरं दत्तवान् यत् चौरः एव त्यागी इति। यतो हि समुद्रदत्तः तां परस्मिन् पुरुषे अनुरक्तां ज्ञात्वा गमने अनुमतिं दत्तवान्। धर्मदत्तः परपत्न्याः उपभोगे पापं स्यात् इति भयेन तां स्वपत्युः निकटं गमनाय उक्तवान्। चौरस्य सा पत्नी अपि नासीत्, न वा तस्य मनसि पापभीतिः वर्तते। सा आभरणविशिष्टां रूपयौवनसम्पन्नां सुन्दरीं मदनसेनां प्राप्य अपि तां स्वगृहगमनाय उक्तवान्। तस्माद् सः एव त्यागी इति। ततः परं वेतालः विक्रमादित्यात् समीचीनम् उत्तरं प्राप्य पुनः शिंशपावृक्षं प्रति गतवान्।



## ४.३.७) द्वितीयकथायाः तात्पर्यार्थः

अत्र वेतालः विक्रमादित्यं प्रति कथां कथयित्वा सत्यमार्गावलम्बनस्य माहात्म्यं वर्णितवान्। सः कथायाम् एवम् उक्तवान् यत् अनङ्गपुरनामके नगरे अर्थदत्तनामकः वणिक् वसति स्म। तस्य पुत्री आसीत् मदनसेना, पुत्रश्च धनदत्तः इति। एकदा यदा सा उद्याने आसीत् तदा तस्याः भ्रातुः सखा धर्मदत्तः तां दृष्टवान्। तां प्राप्तुं सः इष्टवान्। ततः परं सा उक्तवती यत् समुद्रदत्तेन साकं तस्याः वाग्दानम् अभवत्। सः तस्याः वाक्यं कथमपि न शृणोति स्म। तदा सा तस्मै वचनं दत्तवती यत् विवाहात् परम् आदौ तस्य समीपम् आगमिष्यति, परं पत्युः समीपम् इति। एवं श्रुत्वा सन्तुष्टः सः गृहं गतवान्। परं यदा मदनसेनायाः विवाहः अभवत् तदा विवाहानन्तरं सा पत्युः अनुमतिं स्वीकृत्य धर्मदत्तस्य समीपम् आदौ आगच्छति तदा मार्गे एकः चौरः ताम् गृहीतवान्। तदा तस्यापि समीपं सा वचनं दत्तवती यत् सा प्रत्यागमनसमये तस्य समीपम् आगमिष्यति, तस्य वचनं श्रोष्यति च। परं यदा सा धर्मदत्तस्य समीपं गतवती तदा सः चिन्तितवान् यद् इयं परस्त्री। तस्मात् गृहगमनाय ताम् उक्तवान्। परं यदा चौरसमीपम् आगतवती तदा तस्याः सत्यपालनं दृष्ट्वा सः अपि तां गृहगमनाय उक्तवान्। परं तस्याः पतिः सकलं वृत्तान्तं श्रुत्वा तस्याः सतीत्वं च ज्ञात्वा आनन्दितः भूत्वा तां सानन्दम् स्वीकृतवान्। इमां कथां श्रावयित्वा वेतालः राजानम् अपृच्छत् यत् तेषां मध्ये त्यागी कः इति। तदा राजा उक्तवान् यत् धर्मदत्तः पापभयात् तां गृहगमनाय उक्तवान्। तस्याः पतिः अन्यरक्ता इति मत्वा तां गमनाय अनुमतिं दत्तवान्। परन्तु चौरः तस्याः सत्यतां दृष्ट्वा तां गृहं प्रेषितवान्। तस्मात् सः चौरः एव प्रकृतत्यागी इति। समीचीनम् उत्तरं प्राप्य वेतालः पुनः श्मशानं प्रति गतवान्।



### पाठगतप्रश्नाः-२

१. वेतालः कुत्र प्रतिवसति स्म।

२. अनङ्गपुरस्य नृपस्य नाम किम्।

३. वणिजः नाम किम् आसीत्।

४. वणिजः पुत्रस्य नाम किम्।

५. धनदत्तस्य भगिन्याः नाम किम्।

६. कः मदनसेनायाः प्रेम्णि पतितः।

७. मदनसेनायाः पत्युः नाम किम्।

८. धर्मदत्तः कुतः मदनसेनां स्वपत्युः सकाशं गमनाय उक्तवान्।

९. किं दृष्ट्वा चौरः तां त्यक्तवान्।

१०. तेषां मध्ये कः त्यागी इति राज्ञः मतम्।

११. स्तम्भं स्तम्भेन मेलयत -



| स्तम्भः १ | स्तम्भः २ |
|---|---|
| १. अनङ्गपुरस्य नृपः | धनदत्तः |
| २. वणिजः पुत्रः | अनङ्गपुरम् |
| ३. धनदत्तस्य भगिनी | धर्मदत्तः |
| ४. धनदत्तस्य सखा | वीरबाहुः |
| ५. त्यागी | मदनसेना |
| ६. मदनसेनायाः गृहम् | चौरः |

१२. आसीद् वीरबाहुर्नाम सकलभूपालशिरः समभ्यर्चितशासनः ............. इवापरः नृपतिः।

१३. अर्थदत्तः ............... प्रतिवसति स्म।

१४. अर्थदत्तस्य ........... नाम ज्येष्ठः पुत्रः।

१५. राजन्, श्रान्तः असि, तदिमां ............ कथां शृणु।

१६. आसीद् .......... नाम सकलभूपालशिरः पाकशासनः इवापरः नृपतिः।

१७. अनङ्गपुरे नगरे ......... नाम महाधनः सार्थवाहः प्रतिवसति स्म।

१८. तस्य धनदत्तः नाम ज्येष्ठः पुत्रः कनीयसी च कन्या .......... नाम समजायत।

१९. अहं कन्या, साम्प्रतं ते परदाराश्च, यतः अहं पित्रा .......... वणिजे वाचा दत्ता।

२०. पिता मे चिरकाङ्क्षितं .......... लभताम्।

२१. परभुक्ते कमले ......... अपि किं रतिर्जायते।

२२. सुन्दरि, ......... मत्तः कथं त्वं मुच्यसे।

२३. प्राप्तं साभरणं ......... यद् अमुञ्चत्, तेन स एव त्यागी इति।



## पाठसारः

अस्मिन् पाठे वेतालपञ्चविंशतिः इति ग्रन्थात् द्वे कथे स्वीकृते। अनयोः कथयोः पठनेन साहित्यगुणानां परिचयो भवति। किञ्च अत्र कन्यादानविषये सततायाः रक्षणविषये किञ्च योग्यवरः कः इति विषये वर्णना विहिता। प्रथमकथायाम् अनङ्गरतिं प्राप्तुं चत्वारः आगताः - एकः ब्राह्मणः, एकः क्षत्रियः,एकः वैश्यः, एकः शूद्रश्च। तेषु कः तां प्राप्स्यति इति राजा पृष्टवान्। तदा राजा उक्तवान् यत् क्षत्रियः एव तां प्राप्तुं शक्नोति। अत्र कन्यादानं कस्मै क्रियते इति विषये चर्चा विहिता।

द्वितीयायां कथायां मदनसेना धर्मदत्तस्य समीपे वचनं दत्तवती। तस्मात् वचनसत्यतापालनाय स्वपतिमपि क्षणम् स्थापयित्वा वचनपालनार्थं गतवती। मध्ये मार्गे चौरः प्राप्तः। तस्मै अपि वचनं दत्तवती।



धर्मदत्तः चौरश्च तस्याः सत्यतारक्षणं दृष्ट्वा तां गृहं प्रति गमनाय उक्तवान्। पतिः अपि तस्याः सतीत्वं सत्यतारक्षणं दृष्ट्वा तां सहर्षम् स्वीकृतवान्। अत्र कस्मै अपि वचनं दीयते चेत् तस्य यथा कथञ्चित् रक्षणं विधेयम् इति उपदेशः प्राप्यते।



## किमधिगतम्

१. सोत्साहघने हि वीरहृदये न जातु खेदः अन्तरं लभते।

२. न हि आबाल्यसेवितं सत्यम् अतिक्रमितुं शक्यते।



## योग्यताविस्तारः

➢ **सन्दर्भग्रन्थपरिचयः**

चर्चया वर्धते विद्या। तस्मात् विद्यायाः यावत् अध्ययनं क्रियते तावत् सा विद्या सुदृढा भवति। वेतालपञ्चविंशतेः अध्ययनम् अनेन पाठेन सम्यग् भवति। अत्र अस्मिन् पाठे यदि अध्यातारः अधिकं पठितुम् इच्छन्ति तर्हि –

पण्डितदामोदरझामहोदयस्य व्याख्यासमेतं चौखम्बाविद्याभवनात् प्रकाशितं वेतालपञ्चविंशतिः इति ग्रन्थं पठेयुः।

तस्मिन् ग्रन्थे पञ्चविंशतिः कथाः वर्णिताः। किञ्च तस्मिन् ग्रन्थे हिन्दीभाषया एतेषां कथानां व्याख्यादिकम् अपि लभ्यते।

➢ **भावविस्तारः**

१. अस्मिन् पाठे विक्रमादित्यस्य धीरताविषये ज्ञायते। शतवारं कार्ये साफल्यं नायाति चेदपि पुनः एकवारं प्रयतनीयम्, तत्कार्यं नैव त्याज्यम् - इति विवेकः लभ्यते।

२. इमाः कथाः नाटकरूपेण मञ्चादिषु उपस्थापयितुं शक्यते। तेन भाषायाः विस्तारः अपि स्यात्, सर्वेषां ज्ञानमपि भवेत्।

३. एका पत्रिका प्राप्यते। तस्याः नाम चन्द्रमामा इति। तस्यां पत्रिकायां प्रत्येकं सख्यायां वेतालपञ्चविंशतेः कथाः प्रकाश्यन्ते। तत्र तत्सदृशाः अपि कथाः प्राप्यन्ते। तेन छात्राः अधिकतया कथाग्रन्थान् पठितुं शक्नुवन्ति।

४. वेतालपञ्चविंशतेः अनेकाः कथाः युट्युब-मध्ये चलच्चित्ररूपेण नाटकरूपेण वा प्राप्यन्ते। ताः अपि छात्राः द्रष्टुं शक्नुवन्ति।



५. विविधाः दूरदर्शनपरिचालकसंस्थाः धारावाहिकचलच्चित्ररूपेण प्रतिरविवासरं वेतालपञ्चविंशतेः कथाः दर्शयन्ति। ताः अपि सर्वे द्रष्टुं शक्नुवन्ति।

६. अत्र याः कथाः प्रदत्ताः तेषु कश्चन नायकः वर्तते। सः च कस्यचित् गुणस्य प्रकाशकः। तं गुणं यदि वयं स्वीकरिष्यामः, नायकः यथा व्यवहरति तथा अनुसरिष्यामः तर्हि अस्माकमेव लाभः स्यात्।

➢ **भाषाविस्तारः**

१. अत्र बहवः अल्पसमासयुक्ताः शब्दाः वर्तन्ते। तेषां तालिका करणीया। तेन परं तालिकायाः पठनेन नवीनशब्दानां ज्ञानं समासबोधसारल्यम् अपि जायते।

२. नवीनसुबन्तशब्दानां रूपाणि लेख्यानि।

३. नवीनतिङन्तशब्दानां लट्लकारे, लङ्लकारे, लृट्लकारे, विधिलिङ्लकारे, लुट्लकारे च रूपाणि पत्रमध्ये लिखित्वा अभ्यासः आवश्यकः।

४. ये अव्ययशब्दाः दृष्टाः तेषाम् अपि तालिका प्रस्तुतव्या। स्वयं यदा किमपि उत्तरं लिख्यते तदा एतेषां प्रयोगः करणीयः।



## पाठान्तप्रश्नाः

१. राज्ञः वीरदेवस्य सन्तानप्राप्तिवृत्तान्तं तयोः नाम च लिखत।

२. चतुर्णां विज्ञानिनां परिचयं प्रदत्त।

३. विक्रमादित्यः कुतः उक्तवान् यत् खड्गधराय कन्या देया इति युक्तिसहितं वर्णयत।

४. कथं मदनसेना धर्मदत्ताय वचनदानाय बद्धा अभवत् सवृत्तान्तं वर्णयत।

५. तस्याः गमनवृत्तान्तान् वर्णयत।

६. चौरः किं विचिन्त्य किं च उक्त्वा तां स्वगृहगमनाय उक्तवान्।

७. विक्रमादित्यस्य मते कथं चौरः त्यागी, वर्णयत।

८. सत्यपालनं कुर्वत्याः मदनसेनायाः सतीत्वं कथं रक्षितमिति कथां वर्णयित्वा उपस्थापयत।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि १**

१. भूतसङ्कुलम्।

२. वीरदेवः।

३. पद्मावती इति नाम।

४. भोगवती इति नाम।

५. द्वापरयुगे।

६. उज्जयिनी इति नाम।



७. पद्मरतिः।

८. शिवस्य।

९. शूरदेवः।

१०. अनङ्गरतिः।

११. सुरूपः यः युवा पूर्णं विज्ञानं वेत्ति तादृशः।

१२. पञ्चफुट्टिकः।

१३. पञ्च।

१४. भाषाज्ञः।

१५. मृगादिपशूनां तथा पक्षिणाम्।

१६. खड्गधरः इति नाम।

१७. जीवदत्तः इति नाम।

१८. सः मृतं जन्तुं जीवयति स्म।

१९. क्षत्रियाय खड्गधराय।

२०. उत्साहघनं वीरहृदयम्।

२१. शिंशपान्तिकम्, वेतालम्।

२२. श्मशाने।

२३. उज्जयिनी।

२४. वीरदेवः।

२५. मन्दाकिन्याः।

२६. शूरदेवः।

२७. अनङ्गरत्याः।

२८. अतिह्रेपणम्।

२९. परितुष्टशङ्करोदिताम् - परितुष्टश्चासौ शङ्करश्चेति परितुष्टशङ्करः इति कर्मधारयसमासः, परितुष्टशङ्करेण उदिताम् परितुष्टशङ्करोदिताम् इति तृतीयातत्पुरुषसमासः।

३०. पञ्चफुट्टिकः।

३१. भाषाज्ञः।

३२. खड्गधरः।

३३. जीवदत्तः।

३४. शतधा।

३५. कालक्षेपाय।

३६. वीरहृदये।

३७. **स्तम्भमेलनम्**

१) भूतसङ्कुलम्।

२) पद्मावती।

३) पद्मरतिः।

४) द्वापरयुगे।

५) खड्गधरः।

६) वीरहृदयम्।

**उत्तराणि २**

३८. शिंशपावृक्षे।

३९. वीरबाहुः।

४०. अर्थदत्तः।

४१. धनदत्तः।

४२. मदनसेना।

४३. धनदत्तस्य सखा धर्मदत्तः।

४४. समुद्रदत्तः।

४५. परस्त्रीभोगजं पापं स्मृत्वा।

४६. चौरः।

४७. श्रान्तिहारिणीम्।

४८. **स्तम्भमेलनम्**

१. वीरबाहुः

२. धनदत्तः

३. मदनसेना

४. धर्मदत्तः

५. चौरः

६. अनङ्गपुरम्

४९. पाकशासनः

५०. अनङ्गपुरे।



५१. धनदत्तः।
५२. श्रान्तिहारिणीम्।
५३. वीरबाहुः।
५४. अर्थदत्तः।
५५. मदनसेना।
५६. समुद्रदत्ताय।
५७. कन्यादानफलम्।
५८. विमले।
५९. चौरात्।
६०. स्त्रीरत्नम्।

॥ इति चतुर्थः पाठः॥





# वेतालपञ्चविंशतिः-२

## प्रस्तावना

क्लेशः फलेन हि पुनर्नवतां विधत्ते। अर्थात् कस्यापि ग्रन्थस्य तथा कथायाः अवसानं यदि ज्ञायते तर्हि ग्रन्थरचनायाः फलं किं तज्ज्ञातुं शक्यते। किञ्च तज्ज्ञानेन पुनः तद्ग्रन्थपठने इच्छा जायते। पूर्वस्मिन् पाठे भवन्तः वेतालपञ्चविंशतिः इति ग्रन्थस्य कथाद्वयम् ज्ञातवन्तः। प्रस्तुतेऽस्मिन् पाठे भवन्तः तस्य ग्रन्थस्य समाप्तिः कथम् अभूत् इत्यस्मिन् विषये ज्ञास्यन्ति। किन्तु ततः पूर्वम् तस्मात् ग्रन्थात् स्वीकृता एका कथापि वक्ष्यते। तदपि पठिष्यति। राजा विक्रमादित्यः वेतालम् आनेतुं श्मशानं प्रति गतवान्। ततः आनयनसमये वेतालः कथादिकं श्रावयित्वा विलम्बम् उत्पादयति स्म। तत् कथम्। इत्येतस्य प्रश्नस्य उत्तरान्वेषणाय यतामहे वयं पाठावगमने।

## ५.१) को मे भर्ता।

### ५.१.१) पूर्वपीठिका

सुलक्षणां नारीं स्वभार्यारूपेण प्राप्तुं यतन्ते हि युवकाः। सर्वे वाञ्छन्ति यत् मम भार्या एवं गुणवती मनोहरा सुन्दरी च भवेत् इति। परन्तु केवलं सुन्दरी भार्या प्राप्यते चेदपि न सर्वं प्राप्यते। स्वेनापि उत्तमपतित्वेन भाव्यम्। प्रस्तुतायां कथायां वयं पश्यामः यत् चत्वारः युवकाः समागताः पाणिग्रहणाय। तस्याः युवत्याः मरणात् परमपि तेषाम् युवकानाम् तस्याम् अतीव प्रेम आसीत्। किन्तु तन्मध्ये कः पतिः स्यात् इति वेतालेन पृष्टस्य प्रश्नस्य उत्तरम् अपि स्वयं राजा विक्रमादित्यः अनायासेन ददाति।

### ५.१.२) विभागः - १

**अथ स राजा त्रिविक्रमसेनः पुनस्तं वेतालम् आनेतुं शिंशपातरुमूलम् अगमत्। यावत्तत्र प्राप्तः समन्तात् वीक्षते स्म तावत् तं वेतालं भूमौ कूजन्तं ददर्श। ततश्च तस्मिन् नृपे तं मृतदेहस्थं वेतालं स्कन्धमारोप्य जवात् तूष्णीमानेतुं प्रवृत्ते स्कन्धस्थितः स वेतालस्तमब्रवीत् - राजन् महति अनुचिते क्लेशे पतितोऽसि तस्मात् तव विनोदाय पुनः कथामेकां कथयामि श्रूयताम्।**

#### व्याख्या

अथ अनन्तरम्, वेतालस्य शिंशपावृक्षाश्रयणानन्तरम् स राजा त्रिविक्रमसेनः विक्रमादित्यः, पुनः तम् वेतालम् आनेतुं शिंशपातरुमूलं शिंशपावृक्षमूलम्, अगमत् गतवान्। यावत् तत्र प्राप्तः गतः समन्तात्



सर्वतः वीक्षते स्म अवलोकते स्म, तावत् तम् वेतालं भूमौ कूजन्तं अव्यक्तशब्दम् कुर्वन्तम् रुदन्तम् इति यावत् ददर्श दृष्टवान्। ततः च तस्मिन् नृपे राजनि, मृतदेहे मृतशरीरे तिष्ठति इति तं मृतदेहस्थं शवाधिष्ठितम् वेतालं मृतदेहम् एकम् आश्रित्य यः वेतालः आसीत् तम्, स्कन्धमारोप्य स्कन्धेन आदाय, जवात् वेगात् तूष्णीम् मौनम्, आनेतुं प्रवृत्ते स्कन्धस्थितः स वेतालः तम् अब्रवीत् उक्तवान् राजन् नृप, महति भीषणे अनुचिते अनभ्यस्ते क्लेशे परिश्रमे पतितः असि नियुक्तः भवसि त्वम् इति शेषः, तस्मात् तव विनोदाय क्रीडायै मनोरञ्जनार्थम् इति यावत् पुनः कथाम् एकां कथयामि वदामि श्रूयताम् आकर्ण्यताम् त्वया इति शेषः।

**सरलार्थः**

राजा विक्रमादित्यः पुनः वेतालम् आदाय गन्तुम् शिंशपावृक्षस्य अधः गतवान्। तत्र वेतालस्य अन्वेषणं कृतवान्, किन्तु दृष्टवान् यत् भूमौ वेतालः स्थित्वा शब्दं करोति स्म। तदा वेतालं स्कन्धे स्थापयित्वा यदा राजा गच्छति स्म तदा वेतालः राजानम् उक्तवान् यत् अत्यन्तानुचिते कर्मणि राजा नियुक्तः इति। तस्मात् राज्ञः मनोरञ्जनार्थम् वेतालः एकां कथां श्रावयितुम् आरब्धवान्।

**व्याकरणविमर्शः**

- अगमत् - गमॢ गतौ इति धातोः लुङि प्रथमपुरुषैकवचनम्।
- ददर्श - दृशिर् प्रेक्षणे इति धातोः लिटि प्रथमपुरुषैकवचनम्।
- समन्तात् - एतत् अव्ययम्। अस्यार्थः सर्वतः, चतुर्दिक्षु इति वा।

## ५.१.३) विभागः - २

**अस्ति कालिन्दीतटे ब्रह्मस्थलाभिधः कश्चिदग्रहारः। तत्र अग्निस्वामीति समभवत् कश्चित् वेदपारगो विप्रः। तस्य अतिरूपवती मन्दारवती नाम कन्यका अजनि यां नवानर्घलावण्यां निर्माय विधिर्नियतं निजं स्वर्गनारीपूर्वनिर्माणकौशलं जुगुप्सते। तस्यां शैशवातिक्रान्तायां कान्यकुब्जात् समसर्वगुणोपेतास्त्रयो ब्राह्मणदारकाः समाययुः। तेषामेकैकः आत्मार्थं तत्पितरं तामयाचत। तत्पिता प्राणव्ययेऽपि तामन्यस्मै दातुमनिच्छन् तन्मध्यादेकस्मै दातुं मतिमरोत्। सा तु कन्या अन्ययोर्बाधात् भीता कियन्तं कालं न पाणिमग्राहयत्। ते च त्रयोऽपि तस्याः मुखेन्दुनिक्षिप्तदृष्टयः चकोरव्रतमालम्ब्य दिवानिशं तत्रैव तस्थुः।**

**व्याख्या**

अस्ति वर्तते कालिन्दीतटे कालिन्दी यमुना तस्याः तटे तीरदेशे यमुनातीरे इति यावत्। ब्रह्मस्थलाभिधः ब्रह्मस्थलम् इति नाम्ना, कश्चिद् अग्रहारः ग्रामः। तत्र अग्निस्वामी इति समभवत् समासीत्, कश्चित् वेदपारगः वेदविद्वान्, विप्रः ब्राह्मणः। तस्य अतिरूपवती अत्यन्तसुन्दरी मन्दारवती नाम कन्यका पुत्री अजनि अभूत् यां नवानर्घलावण्यां अत्युत्कृष्टाम्, निर्माय सृष्ट्वा, विधिः विधाता ब्रह्मा इति यावत्, नियतम् निश्चितम् सततम् वा, निजं स्वर्गनारीपूर्वनिर्माणकौशलं स्वर्गे स्थिताः नार्य्यः स्वर्गनार्य्यः देवयोषितः अप्सरसो वा, तासाम् पूर्वम् पूर्वकालिकम् पुरा अवलम्बितम् इत्यर्थः यत्



निर्माणकौशलम् सृष्टिनैपुण्यम् तत् जुगुप्सते निन्दति, नाद्रियते इति यावत्। देवयोषिद्भ्योऽपि (अप्सरोभ्यो वा) अतीव सुन्दरी सा मन्दारवती इति भावः। तस्यां कन्यकायाम् शैशवातिक्रान्तायां अपगतबाल्यायाम् प्राप्तयौवनायाम् इति भावः। कान्यकुब्जात् कान्यकुब्जप्रदेशात् समसर्वगुणोपेताः तुल्यगुणिनः त्रयः ब्राह्मणदारकाः विप्रबालकाः समाययुः समाजग्मुः आगतवन्तः। तेषाम् एकैकः प्रत्येकम् आत्मार्थं स्वस्य कृते तत्पितरं तस्याः पितरम् ताम् मन्दारवतीम् अयाचत प्रार्थितवान्। तत्पिता प्राणव्ययेऽपि जीवननाशेऽपि, ताम् अन्यस्मै ब्राह्मणकुमाराभ्याम् इतरस्मै वराय इत्यर्थः दातुं प्रदातुम् अनिच्छन् अनभिलषन् न इष्टवान् इति यावत्, तेषाम् ब्राह्मणत्रयाणाम् मध्यात् तन्मध्यात् तेषु एकस्मै एकतमाय वराय युगपत् त्रिभिरेव दुहितुः पाणिग्रहणासम्भवात् दातुं मतिम् इच्छाम् अकरोत् कृतवान्। सा तु कन्या अन्ययोः यं स्वपाणिम् ग्राहयिष्यति तदितरयोः इत्यर्थः। बाधात् दुःखात् मनःपीडाभयात् इत्यर्थः, भीता त्रस्ता कियन्तं कालं न पाणिम् अग्राहयत् आत्मानम् न पर्य्यणाययत केनापि इति शेषः, तेषु कस्यापि न विवाहं कृतवती इत्यर्थः। ते च त्रयः अपि तस्याः मुखेन्दुनिक्षिप्तदृष्टयः चन्द्रसमानमुखे निक्षिप्ताः पतिताः दृष्टयः येषां ते, चकोरव्रतम् आलम्ब्य आश्रित्य दिवानिशम् अहोरात्रम् तत्रैव तस्थुः स्थितवन्तः। चकोरः पक्षिविशेषः तस्य व्रतम् इव व्रतम् नियमविशेषः तत् चकोव्रतम् चकोरवत् आचरणम्, चकोरः यथा चन्द्रमण्डलात् क्षरिष्यत्सुधापानतृष्णया नान्यज्जलादिकं पिबति, तामेव प्रतीक्ष्य ऊर्ध्वमुखः तिष्ठति, तथा ते अपि मन्दारवतीलालसया नार्यान्तरम् विहाय केवलम् तन्मुखार्पितनेत्राः समवर्तन्त इति चकोरवत् नियमविशेषः इति भावः।

**सरलार्थः**

कालिन्दीनद्याः तटे ब्रह्मस्थलनामकः कश्चन ग्रामः आसीत्। तत्र अग्निस्वामी इति नामकः वेदेषु निष्णातः कश्चन ब्राह्मणः आसीत्। तस्य मन्दारवती नामिका काचन पुत्री आसीत्। तस्याः एवं सौन्दर्यम् आसीत् यत् तस्याः निर्माणकाले ब्रह्मा अप्सरसां निर्माणकौशलम् अपि न्यक्कृतवान्। सा यदा यौवनावस्थायाम् आगता तदा कान्यकुब्जात् त्रयः ब्राह्मणपुत्राः आगताः तस्याः पाणिग्रहणार्थम्। पिता कस्मै कन्यां दास्यति इति निश्चेतुं समर्थः न अभवत्। पुत्री अपि कस्यापि कष्टम् उत्पाद्य विवाहं कर्तुं न इच्छति स्म। ते तस्याः पितुः वचनात् कतिपयदिनानि तस्याः मुखे दृष्टिं स्थापयित्वा तत्र आसन्।

**व्याकरणविमर्शः**

- ब्रह्मस्थलाभिधः ब्रह्मस्थलम् इति अभिधा (नाम) यस्य तादृशः ग्रामः इति बहुव्रीहिसमासः।
- वेदपारगः वेदानाम् ऋग्यजुःसामाथर्वणाम् चतुर्णाम् पारम् अन्तम् गच्छति इति वेदपारगः, साङ्गवेदः अधीतः इत्यर्थः।
- अजनि - जनी प्रादुर्भावे इति धातोः लुङि प्रथमपुरुषैकवचने रूपम्। अजनिष्ट इत्यपि रूपम् भवति।
- नवानर्घलावण्याम् नवम् नूतनम् अर्घम् मूल्यम् न नास्ति यस्य तत् नवानर्घम् इति बहुव्रीहिसमासः। अनर्घम् अमूल्यम् इत्यर्थः, अत्युत्कृष्टम् इति यावत्, नवानर्घम् लावण्यम् (दैहिकसौन्दर्यविशेषः) यस्याः ताम् नवानर्घलावण्याम् इति बहुव्रीहिसमासः।



- शैशवातिक्रान्तायाम् शैशवम् अतिक्रान्ता अपगता शैशवातिक्रान्ता तस्याम् शैशवातिक्रान्तायाम् इति द्वितीयातत्पुरुषसमासः। शैशवम् अतिक्रान्तम् अपगतम् यस्याः तथाभूतायाम् इति वा बहुव्रीहिसमासः।
- समसर्वगुणोपेताः समैः तुल्यैः सर्वगुणैः दयादाक्षिण्यादिगुणसमूहैः उपेताः युक्ताः समसर्वगुणोपेताः तुल्यगुणिनः।
- मुखेन्दुनिक्षिप्तदृष्टयः मुखम् इन्दुः इव (उपमितसमासः) इति मुखेन्दुः, तस्मिन् मुखेन्दौ मुखचन्द्रे निक्षिप्ता पातिता (सप्तमीतत्पुरुषः) दृष्टिः नेत्रम् यैः येषाम् वा तथाभूताः सन्तः (बहुव्रीहिसमासः)
- तस्थुः स्थाधातोः लिटि प्रथमपुरुषबहुवचनम्। आसाञ्चक्रिरे इत्यर्थः।
- दिवानिशम् दिवा च निशा च दिवानिशम् अहोरात्रम् (अत्यन्तसंयोगे द्वितीया)।

## ५.१.४) विभागः - ३

**अथाकस्मात् समुत्पन्नेन ज्वरदाहेन आर्ता सा मन्दारवती पञ्चतामाप। ततस्ते विप्रकुमारास्तां परासुं दृष्टां शोकार्ता कृतप्रसाधनां श्मशानं नीत्वा अग्निसादकुर्वन्। ततश्च तेषामेकस्तत्र मठं निर्माय तद्भस्मशय्यायां भैक्ष्येण जीवन्नतिष्ठत्। द्वितीयोऽस्थीनि तस्या उपादाय भागीरथ्यां निक्षेप्तुं जगाम। तृतीयस्तु तापसो भूत्वा देशान्तराणि भ्रमितुमगात्। स तु भ्राम्यन् तापसः वज्रालोकाभिधं ग्रामं प्राप्य कस्यापि विप्रस्य गृहे अतिथिरभूत्।**

### व्याख्या

अथ अकस्मात् सहसा समुत्पन्नेन जातेन ज्वरदाहेन ज्वरप्रभावेण आर्ता पीडिता सा मन्दारवती पञ्चत्वं मृत्युम् आप प्राप्तवती। ततः ते विप्रकुमाराः तां परासुं मृताम्, दृष्ट्वा शोकार्ता शोकेन व्याकुलाः कृतप्रसाधनां तस्याः प्रसाधनां कृत्वा श्मशानं नीत्वा अग्निसाद् अकुर्वन् समपादयन् तस्याः अग्निक्रियां कृतवन्तः। ततश्च तेषां कुमाराणाम् एकः तत्र श्मशाने मठम् आश्रमविशेषम् सन्यासीयोग्यम् कुटिरम् इति यावत् निर्माय विरचय्य तद्भस्मशय्यायां तस्याः मन्दारवत्याः चिताभस्म शय्याम् परिकल्प्य तत्र इत्यर्थः, भैक्ष्येण भिक्षाणाम् समुहः भैक्ष्यम् तेन भैक्ष्येण भिक्षासमूहेन नित्यभिक्षानुष्ठानेन इत्यर्थः जीवन् प्राणान् प्राणधारणम् कुर्वन् इत्यर्थः। भिक्षया स्वजीवनं परिपालयन् अतिष्ठत् आसीत्। श्मशाने कुटीरनिर्माणम् कृत्वा भिक्षाव्रतेन प्राणान् धारयन् मन्दारवत्याः भस्मोपरि शयनम् अकरोत् इत्यर्थः।

द्वितीयः अपरः ब्राह्मणकुमारः तस्याः मन्दारवत्याः अस्थीनि उपादाय गृहीत्वा भागीरथ्यां गङ्गायाम् निक्षेप्तुं न्यस्तुम् पयसि जले समर्पयितुम् जगाम गतवान्।

तृतीयस्तु तापसः सन्न्यासी भूत्वा देशान्तराणि अन्यदेशान् भ्रमितुम् विचरितुम् अगात् गतवान्। स तु भ्राम्यन् इतस्ततो विचरन् तापसः वज्रालोकभिधं वज्रालोकनामकं ग्रामं जनस्थानम् प्राप्य लब्ध्वा कस्यापि विप्रस्य ब्राह्मणस्य गृहे अतिथिः अभूत् अभवत्।



**सरलार्थः**

एकस्मिन् दिवसे हठात् सा ज्वरेण पीडिता अभवत्। तेन ज्वरेण तस्याः मरणम् अभवत्। तदा सर्वे कुमाराः तस्याः मरणं दृष्ट्वा अत्यन्तं दुःखिताः अभवन्। तस्याः अन्तिमक्रियां समाप्य एकः तत्रैव श्मशाने मठं निर्माय तस्याः भस्मनः उपरि शय्यां निर्माय भिक्षान्नेन जीवितुम् आरब्धवान्। एकः गङ्गायाम् अस्थीनि समर्पयितुं गतवान्। तृतीयः सन्न्यासी भूत्वा विभिन्नेषु देशेषु भ्रमितुम् आरब्धवान्। एवं भ्रमणसमये एकदा सः वज्रालोकनामकं ग्रामं गतवान्। तत्र एकस्य ब्राह्मणस्य गृहे सः अतिथिः अभवत्।

**व्याकरणविमर्शः**

- ज्वरदाहेन - ज्वरेण सह दाहः, ज्वरजनितः दाहो वा तेन ज्वरदाहेन दाहज्वरेण इत्यर्थः।
- कृतप्रसाधनाम् - कृतम् विहितम् प्रसाधनम् नववस्त्रपुष्पमाल्यालक्तकादिना भूषणम् यस्याः सा कृतप्रसाधना ताम कृप्रसाधनाम् इति बहुव्रीहिसमासः।
- कृत्स्नम् देहम् अग्निम् समापादयन्त इति अग्निसात् अकुर्वन्, कृत्स्नो देहः तस्याः भस्मावशेषः अभूत् इति भावः।
- जगाम - गमॢ गतौ इति धातोः प्रथमपुरुषैकवचनम्।
- वज्रालोकाभिधम् - वज्रालोक इति अभिधा (नाम) यस्य सः वज्रालोकाभिधः तम् (बहुव्रीहिसमासः)
- अतिथिः - अतति गच्छति एकाम् निशाम् न तिष्ठति इति अतिथिः आगन्तुः। नास्ति तिथिः प्रतिपदादिः अस्य इति अतिथिः इति वा। यः प्रतिपदादितिथिनियमम् अविगणय्यैव यस्मिन् कस्मिन् दिने आगच्छति सः अतिथिः इत्यर्थः।

## ५.१.५) विभागः - ४

**तेन च गृहपतिना पूजितो यावत् तत्र भोक्तुं प्रावर्त्तत तावत्तस्य एकः शिशुः रोदितुं प्रवृत्तोऽभवत्। स च शिशुः सान्त्व्यमानोऽपि यदा न व्यरंसीत् तदाऽस्य गृहिणी तं बाहावादाय ज्वलत्यग्नौ क्रुद्धा प्राक्षिपत् क्षिप्त एव स कोमलाङ्गस्तत्क्षणात् भस्मसादभूत्। तदवलोक्य स तापसः संजातरोमाञ्चः प्राब्रवीत् - हा धिक्। कष्टम्। प्रविष्टोऽहं ब्रह्मराक्षसवेश्मनि तस्मात् मूर्तं किल्बिषमिदमन्नं नाधुना भक्षयामि। एवं वादिनं तमतिथिं स गृहस्थः प्रत्यब्रवीत् - ब्रह्मन् पश्य मे पठितसिद्धस्य मृतसंजीवनीं शक्तिम् इत्युक्त्वा पुस्तकमुद्घाट्य तां विद्यां बहिष्कृत्य अनुवाच्य च तस्मिन् भस्मनि जलमक्षिपत् क्षिप्तमात्रे च जले स पुत्रस्तथैव जीवन्नुदतिष्ठत्। ततः स तापसः सुनिर्वृतस्तत्र सहर्षं बुभुजे। गृहस्थोऽपि स नागदन्तके पुस्तकमवस्थाप्य भुक्त्वैव तेन तापसेन सह रात्रौ शयनमभजत।**

**व्याख्या**

तेन च गृहपतिना गृहस्थेन गृहस्वामिना इति यावत्, पूजितः पाद्यार्घ्यादिना अर्चितः यावत् तत्र भोक्तुं खादितुम् प्रावर्तत उपाक्रमत आरब्धवान् इति यावत् तावत् तस्य ब्राह्मणस्य एकः शिशुः रोदितुं क्रन्दितुम् प्रवृत्तः अभवत् आरब्धवान्। स च शिशुः बालः सान्त्व्यमानः अपि अनुकूलीक्रियमाणः



मधुरवचनादिना प्रबोध्यमानोऽपि इत्यर्थः मात्रादिभिः इति शेषः। यदा न व्यरंसीत् न्यवृतत् विरतः अभवत्, तदा अस्य गृहस्थविप्रस्य गृहिणी तं बाहौ भुजे आदाय ज्वलति दीप्यमाने अग्नौ क्रुधा क्रोधेन प्राक्षिपत् न्यस्यत् क्षिप्तवती। क्षिप्तः पातितः एव स कोमलाङ्गः तत्क्षणात् भस्मसाद् भस्मीभूतः अभूत् अभवत् कृत्स्नः देहः भस्म समपादि इति भस्मसात् अभूत् भस्मविशेषः अजनि इत्यर्थः। तदवलोक्य स तापसः सञ्जातरोमाञ्चः प्राब्रवीत् उक्तवान् - हा (हा इति खेदसूचकम् अव्ययम्) धिक् (धिक् इति आत्मनिर्भर्त्सनसूचकम् अव्ययम्), कष्टम् क्लेशम् अतीव दुःखावहम् इत्यर्थः, एतत्तु अतीव क्लेशकरम् यत् अहं विशेषम् अज्ञात्वा एव बालघातिनः अस्य महापातकिनः गृहम् आगतोऽस्मि, अतो माम् धिक् इति आत्मभर्त्सनम् इति फलितम्। प्रविष्टः उपस्थितः इत्यर्थः। अहं ब्रह्मराक्षसवेश्मनि ब्रह्मराक्षसस्य गृहे, मूर्त्तम् मूर्त्तिमत् देहधारि इत्यर्थः। किल्बिषम् पापम् पापजनकम् इत्यर्थः। किल्बिषम् इदम् अन्नम् अधुना न भक्षयामि। राक्षसवत् बालहननात् पापिनोऽस्य विप्रस्य अन्नेऽपि पापजनकत्वारोपः, पापान्नस्य अग्राह्यत्वात् इति भावः। एवंवादिनं इत्युक्तवन्तम् तम् अतिथिम् स गृहस्थः प्रत्यवादीत् - ब्रह्मन्, पश्य मे पठितसिद्धस्य पठितेन गुरोः अध्ययनेन सिद्धः सिद्धिम् प्राप्तः ज्ञातमार्गस्य इति यावत्, मृतसञ्जीवनीं प्रेतोज्जीवनीम् शक्तिं क्षमताम् इति उक्त्वा पुस्तकम् उद्घाट्य तां विद्यां बहिष्कृत्य अनुवाच्य पठित्वा च तस्मिन् भस्मनि जलम् अक्षिपत् क्षिप्तवान्। क्षिप्तमात्रे च जले जलं यदा क्षिप्तवान् तदा स पुत्रः तथैव जीवन् उदतिष्ठत् उत्थितवान् उत्थितः अभवत् इति यावत्। ततः स तापसः सुनिर्वृतः सन्तुष्टः भूत्वा तत्र सहर्षं बुभुजे भुक्तवान्। गृहस्थः अपि स नागदन्तके समीपे पुस्तकम् अवस्थाप्य स्थापयित्वा भुक्त्वैव तेन तापसेन सह रात्रौ शयनम् शय्याम् अभजत आशयत।

### सरलार्थः

तृतीयः ब्राह्मणस्य गृहं गत्वा अभ्यर्थितः भूत्वा यदा भोजनं कर्तुम् उपविष्टवान् तदा गृहस्थस्य पुत्रः रोदितुम् आरब्धवान्। तस्य क्रन्दनम् न क्षाम्यति इत्यस्मात् कुपितः ब्राह्मणस्य भार्या तम् अग्नौ प्रक्षिप्तवती। तस्याः एवंविधं कार्यं दृष्ट्वा तृतीयः चिन्तितवान् यत् सः ब्रह्मराक्षसस्य गृहम् आगतः। तस्मात् अत्र भोजनं न करिष्यति इति। तदा अतिथिः किमपि न भुक्त्वा गच्छतीति दृष्ट्वा ब्राह्मणः तस्य पुस्तकम् उद्घाट्य मृतसञ्जीवनीमन्त्रम् उच्चार्य तं बालकम् उज्जीवितवान्। एतत् दृष्ट्वा सः तापसः शान्तेन मनसा तत्र स्थितवान्। ब्राह्मणः अपि पुस्तकं स्थापयित्वा तापसेन सह भोजनं कृत्वा शयनं कृतवान् इति।

### व्याकरणविमर्शः

- कोमलाङ्गः - कोमलानि मृदूनि अङ्गानि अवयवाः यस्य सः कोमलाङ्गः सुकुमारदेहः इति बहुव्रीहिसमासः।
- सञ्जातरोमाञ्चः - सञ्जातः समुत्पन्नः रोमाञ्चः रोमहर्षणम् रोमोद्गमः इति यावत् यस्य सः सञ्जातरोमाञ्चः, घृणया भयेन वा कण्टकिततनुः सन् इत्यर्थः इति बहुव्रीहिसमासः।
- ब्रह्मराक्षसनिवेशनि - ब्रह्मा विप्रोऽपि राक्षसः कुकर्मभिः राक्षसयोनिं गतः ब्रह्मराक्षसः राक्षसरूपताम् प्राप्तः भूतविशेषः इत्यर्थः। ब्रह्मराक्षस इव आचारविशिष्टः इत्यर्थः। तस्य ब्रह्मराक्षसस्य वेश्मनि गृहे इति ब्रह्मराक्षसनिवेशनम् इति षष्ठीतत्पुरुषसमासः।
- मृतसञ्जीवनीम् - मृतः गतप्राणः सञ्जीव्यते प्राण्यते अनया ताम् मृतसञ्जीवनीम् प्रेतोज्जीवनीम्।



- बुभुजे - भुजोऽनवने इति धातोः लिटि प्रथमपुरुषैकवचनम्।
- नागदन्तके - अत्यन्तम् समीपे सकाशे निकटे वा इति तदर्थः।
- अभजत – भज सेवायाम् इति धातोः लङि प्रथमपुरुषैवकवचनम्।

## ५.१.६) विभागः - ५

**अथ सुप्ते गृहपतौ स तापसः स्वैरमुत्थाय शङ्कितः स्वप्रियाया मन्दारवत्या जीवनार्थं तां पुस्तिकामग्रहीत्। गृहीत्वैव तस्मात् निर्गत्य रात्रिन्दिवं व्रजन् शनैस्तत् श्मशानमासदत् अद्राक्षीच्च सहसा तं द्वितीयम् उपस्थितं यो हि गङ्गाम्भसि तदस्थि क्षेप्तुमगात्। अथ प्राप्य च तत्रस्थं तस्या भस्मनि शायिनं तृतीयं निबद्धमठं स तापसः प्रोवाच - मठिका त्यज्यतां भ्रातः। प्रियां तामहमुत्थापयामि इति। ततः ताभ्यां निर्बन्धतः परिपृष्टः पुस्तिकामुद्धाट्य मन्त्रमनुवाच्य मन्त्रपूतानि जलानि तस्मिन् भस्मनि प्राक्षिपत् क्षिप्तमात्रेषु जलेषु सा मन्दारवती जीवन्ती सहसा समुत्तस्थौ। तदा सा कन्या वह्निं प्रणम्य निष्क्रान्ता पूर्वाधिकद्युतिः काञ्चनेनेव निर्मितं वपुर्बभार। तादृशीं तां पुनर्जीवितां वीक्ष्य त्रयोऽपि ते स्मरातुराः तत्प्राप्त्यर्थमन्योऽन्यं कलहं चक्रुः। एकेनोक्तम् - इयं मन्मन्त्रबलात् जीविता तदेषा ममैव भार्या। अपरोऽब्रवीत् - मदीयेन तीर्थभ्रमपुण्येन इयं जीविता तदेषा ममैव भार्या। तृतीयेन अभिहितं - मया भस्मानि रक्षितानि तत एवेयं जीविता तस्मात् ममैवेय प्रणयिनी इति।**

### व्याख्या

अथ सुप्ते गृहपतौ गृहस्वामी यदा निद्रितः तदा स तापसः सन्यासी स्वैरम् मन्दम् निःशब्दम् इत्यर्थः उत्थाय उद्गम्य उत्थितो भूत्वा इत्यर्थः। शङ्कितः भीतः चौरकर्मकरणात् इति भावः। स्वप्रियायाः मन्दारवत्याः जीवनार्थं प्राणदानार्थम् तां पुस्तिकाम् अग्रहीत् आदत्त स्वीकृतवान् इति यावत्। गृहीत्वा एव तस्मात् निर्गत्य बहिर्भूय रात्रिन्दिवम् रात्रौ च दिवा च रात्रिन्दिवम् अहर्निशम्, व्रजन् गच्छन् शनैः मन्दम् मन्दम् अद्रुतम् इत्यर्थः, तत् श्मशानम् आसदत् प्राप्तवान्, अद्राक्षीत् च अपश्यत् च, सहसा तं द्वितीयम् उपस्थितम् तत्र समागतम् यः हि खलु गङ्गाम्भसि गङ्गाजले तदस्थि मन्दारवत्याः अस्थि क्षेप्तुम् न्यस्तुम् अगात् गतः। तत्र तस्मिन् श्मशाने तिष्ठति इति तम् तत्रस्थम् श्मशानवासिनम् तस्याः भस्मनि शेते इति शायी तम् शायिनम् शयानम् तृतीयं ब्राह्मणकुमारम् निबद्धमठं निर्मितनिलयम् स तापसः प्रोवाच उक्तवान् - मठिका अल्पः मठः मठकः क्षुद्रः मठः इत्यर्थः, त्यज्यताम् मुच्यताम्, भ्रातः प्रियां मन्दारवतीम् ताम् अहम् उत्थापयामि जीवयिष्यामि इति। ततः ताभ्यां द्वितीयतृतीयब्राह्मणकुमाराभ्याम् निर्बन्धितः आग्रहातिशयेन निर्बन्धं कृत्वा इत्यर्थः, परिपृष्टः जिज्ञासितः पुस्तिकाम् क्षुद्रपुस्तकम् उद्धाट्य मन्त्रम् अनुवाच्य मन्त्रपूतानि जलानि तस्मिन् भस्मनि प्राक्षिपत् क्षिप्तवान्। क्षिप्तमात्रेषु जलेषु सा मन्दारवती जीवन्ती जन्म लभमाना सहसा समुत्तस्थौ उत्थितवती। तदा सा कन्या बह्निं प्रणम्य नमस्कृत्य निष्क्रान्ता निर्गता पूर्वाधिकद्युतिः पूर्वादप्यतिशयितप्रभम् काञ्चनेनेव सुवर्णेन इव निर्मितं वपुः शरीरम् बभार दधार प्राप्तवान्। तादृशीम् गतजीविताम् तां पुनर्जीवितां वीक्ष्य दृष्ट्वा त्रयः अपि स्मरातुराः स्मरेण कामेन आतुराः पीडिताः कामोन्मत्ताः इति यावत्, तत्प्राप्त्यर्थम् अन्योऽन्यं परस्परं कलहं विवादं चक्रुः कृतवन्तः। एकेनोक्तम् - इयं



मन्मन्त्रबलम् मम मन्त्रबलम् मन्त्रप्रभावः तस्मात् मम मन्त्रशक्तितः अर्थात् मम मन्त्रबलम् प्राप्य जीविता प्राप्तजीवना पुनः जीवनं प्राप्तवती, तदेषा तत् तस्मात् एषा मन्दारवती ममैव भार्या भ्रियते या सा भार्य्या पत्नी। अपरः अब्रवीत् उक्तवान् - मदीयेन तीर्थभ्रमणपुण्येन इयं जीविता, तत् तस्मात् एषा मन्दारवती ममैव भार्या पत्नी। तृतीयेन अभिहितं कथितम् - मया भस्मानि रक्षितानि जलानिलादिभ्यः यत्नतः स्थापितानि इत्यर्थः, ततः एवेयं जीविता मम कारणात् पुनरुज्जीवनं प्राप्तवती, तस्मात् ममैव इयं प्रणयिनी प्रिया इति।

### सरलार्थः

रात्रौ यदा गृहस्वामी शयनं करोति तदा मन्दारवत्याः पुनरुज्जीवनार्थं स तापसः शनैः उत्थाय पुस्तिकाम् आदाय श्मशाने तस्याः भस्मसमीपम् अगच्छत्। तत्र सः दृष्टवान् यत् द्वितीयः अपि तीर्थभ्रमणं समाप्य आगतवान्। आगत्य च तस्याः अस्थि गङ्गाजले क्षेप्तुम् गतवान्। ततः तस्मात् तापसात् अस्थि स्वीकृतवान्। अनन्तरम् मठवासिनम् तापसम् उक्तवान् यत् एनाम् प्रियाम् जीवयिष्यामि तस्मात् त्वम् मठिकां त्यज इति। ततः परं सः तापसः तानि मन्त्रपूतानि जलानि तस्याः भस्मनः उपरि क्षिप्तवान्। तत्क्षणादेव सा मन्दारवती पुनरुज्जीविता अभवत्। सा पूर्वापेक्षया अधिकसुन्दरी आसीत्। तदा तां दृष्ट्वा त्रयः एव तां प्राप्तुम् इष्टवान्। एकः अवदत् यत् सः मन्त्रबलात् जीवनं दत्तवान् तस्मात् सा तस्य इति। द्वितीयः अवदत् यत् सः तीर्थादौ भ्रमणं कृत्वा पुण्यम् अर्जितवान् तस्मात् सा उज्जीविता इत्यतः सा तस्य भवेत् इति। तृतीयः उक्तवान् यत् यदि सः तस्याः भस्मानि सम्यक्तया न अस्थापयिष्यत् तर्हि कुतः सा उज्जीविता अभविष्यत् इत्यस्मात् कारणात् सा तस्य पत्नी भवेत् इति।

#### व्याकरणविमर्शः

- शङ्कितः - शङ्का सञ्जाता अस्य इति शङ्कितः।
- जीवनार्थम् - जीवनाय इदम् इति जीवनार्थम् इति चतुर्थीतत्पुरुषसमासः।
- निबद्धमठम् - निबद्धः विरचितः मठः कुटीरविशेषः येन सः निबद्धमठः तम् निबद्धमठम् निर्मितनिलयम् इति बहुव्रीहिसमासः।
- पूर्वाधिकद्युतिः - पूर्वस्मात् अर्थात् मृत्योः पूर्वकालम् अपेक्ष्य अधिका द्युतिः कान्तिः यत्र तादृशम् पूर्वाधिकद्युति पूर्वादप्यतिशयितप्रभम् इति बहुव्रीहिसमासः।
- तीर्थभ्रमणपुण्येन - तीर्थेषु काश्यादिपुण्यक्षेत्रेषु यत् भ्रमणम् प्रव्रजनम् तेन यत् पुण्यम् सुकृतम् तेन तीर्थभ्रमणपुण्येन काश्यादिस्थानविचरणजनितधर्मसञ्चयेन।

## ५.१.७) विभागः - ६

**हे महीपते तेषां विवादनिर्णये त्वमेव शक्तः तद्ब्रूहि कन्याऽसौ कस्य एतेषां भार्या भवितुमर्हति। यदि जानन् मृषा वदिष्यसि तदा ते मूर्द्धा विदलिष्यति। इति वेतालादाकर्ण्य स राजा एवम् अभ्यधात् - यः क्लेशेन मन्त्रमानीय एनामजीवयत् स खलु पितृकार्यकरणात् न पतिः।**



**यश्च तस्या अस्थीनि गङ्गायां क्षेप्तुं गतः स पुत्रकार्यकरणात् न पतिः। यस्तु तद्भस्मशय्यां समाश्लिष्य तपश्चचार श्मशान एव स एवास्याः प्रणयिकार्यकरणात् पतिर्भवितुमर्हति इति।**

**इत्थं नृपात् त्रिविक्रमसेनादाकर्ण्य स वेतालस्तस्य स्कन्धादतर्कितं स्वपदं प्रायात्। राजा च भिक्षुकार्यार्थं पुनस्तं प्राप्तुं मनो बबन्ध प्राणात्ययेऽपि महासत्त्वाः प्रतिपन्नमर्थम् असाधयित्वा न निवर्तन्ते।**

### व्याख्या

हे महीपते राजन् तेषां विवादनिर्णये वैतण्डिकविषयस्य याथार्थ्यावधारणे त्वमेव शक्तः समर्थः तत् ब्रूहि वद कन्या असौ कस्य एतेषां ब्राह्मणकुमाराणाम् त्रयाणाम् मध्ये भार्या भवितुम् अर्हति शक्नोति। यदि जानन् ज्ञात्वा अपि मृषा मिथ्या वदिष्यसि कथयिष्यसि तदा ते मूर्द्धा शिरः विदलिष्यति स्फुटिष्यति। इति वेतालाद् आकर्ण्य श्रुत्वा स राजा विक्रमादित्यः एवम् अभ्यधात् अकथयत् - यः क्लेशेन मन्त्रम् आनीय आनयनम् कृत्वा एनां मन्दारवतीम् अजीवयत् जीवितवान्, स खलु पितृकार्यकरणात् पितृवत् कार्यम् जन्मदानरूपम् इति यावत् अकरोत् तस्मात् न पतिः स्वामी भवितुम् अर्हति इति यावत्। यः च तस्याः अस्थीनि गङ्गायां क्षेप्तुं गतः, सः पुत्रकार्यकरणात् न पतिः। यस्तु तद्भस्मशय्यायां समाश्लिष्य समालिङ्ग्य तपः तपस्याम् चचार चरितवान् कृतवान् इति यावत्। श्मशाने घोरे भयाकुले निर्जने स्थाने एव, स एवास्याः प्रणयिकार्यकारणात् प्रियवत् कार्यं कृतवान् इत्यतः (पत्नीवियोगनिर्वेदात् संसारासक्तिम् विहाय तस्याः एव सततस्मरणगुणकीर्त्तनादिकम् कर्म, तत्करणात् प्रणयिकार्य्यकरणात्) भर्तृकर्तव्यप्रतिपालनात् पतिः भवितुम् अर्हति शक्नोति इति। इत्थं नृपात् राज्ञः त्रिविक्रमसेनाद् विक्रमादित्यात् आकर्ण्य श्रुत्वा स वेतालः तस्य स्कन्धात् अतर्कितं अविचारितम् स्वपदं निजस्थानम् प्रायात् प्रातिष्ठत प्राप्तवान्। राजा च भिक्षुकार्यार्थं पुनः तं प्राप्तुं मनो बबन्ध स्थिरीकृतवान्। प्राणात्यये अपि प्राणानां नाशे सत्यपि, महासत्त्वाः उदारचरिताः महाबलाः प्रतिपन्नम् अङ्गीकृतम् अर्थं वस्तु प्रयोजनम् वा, अङ्गीकृतविषयम् इत्यर्थः, असाधयित्वा असम्पाद्य न निवर्तन्ते न विरमन्ति।

### सरलार्थः

कथां श्रावयित्वा वेतालः राजानं पृष्टवान् यत् तेषां विवादस्य समाधाने राजा एव समर्थः। तस्मात् तेषु कः तस्य भर्ता भविष्यति इति। यदि उत्तरं ज्ञात्वा न वदिष्यति तर्हि महाराजस्य शिरः शतधा खण्डितं भवेद् इति। तदा राजा उक्तवान् यत् यः मन्त्रमानीय जीवनं दत्तवान् सः पितुः कार्यं कृतवान्। यः भागीरथ्याम् अस्थीनि समर्पयितुं गतवान् सः पुत्रस्य कार्यं कृतवान्। यः तस्मिन् एव घोरे श्मशाने तस्याः भस्मनः उपरि एव शयनं कृत्वा कालं व्यतीतवान् सः एव वास्तवेन पत्युः कार्यं कृतवान्। तस्मात् सः एव तां भार्यारूपेण प्राप्स्यति इति। एवम्प्रकारेण सम्यगुत्तरं प्राप्य वेतालः पुनः स्वस्थानं गतवान्। महाराजः अपि तत्र गतवान् यतो हि महान्तः एकवारं यत् कार्यं स्वीकुर्वन्ति तस्य यावत् समाप्तिः न भवति तावत् तत् त्यक्त्वा न गच्छन्ति।

### व्याकरणविमर्शः

➢ अतर्कितम् - न तर्कितम् तर्कः विचारः इत्यर्थः, यस्मिन् कर्मणि तत् अतर्कितम्, किञ्चित् अपि



विलम्बम् अकृत्वा एव, सहसा इति यावत्।

- महासत्त्वाः - महत् उदारम् सत्त्वम् स्वभावः येषाम् ते अथवा महत् प्रभूतम् सत्त्वम् बलम् येषाम् ते महासत्त्वाः उदारचरिताः, महाबलाः वा इति बहुव्रीहिसमासः।

## ५.१.८) तात्पर्यार्थः

राजा विक्रमादित्यः भिक्षोः कार्यं समापयितुं श्मशानं गत्वा वेतालं स्वीकृत्य यदा आगच्छति तदा वेतालः तं एकां कथां श्रावयितुम् आरब्धवान्। कालिन्दीनद्याः तटे ब्रह्मस्थलनामकः ग्रामः आसीत्। तत्र अग्निस्वामी इति नामकः विप्रः आसीत्। तस्य पुत्री आसीत् मन्दारवती। सा यदा यौवनावस्थां प्राप्तवती तदा कान्यकुब्जात् त्रयः विप्राः आगताः। ते तां प्रार्थितवन्तः। तदा कस्मै सा दास्यते इति निश्चेतुं तस्याः पिता कञ्चन कालं स्वीकृतवान्।

एकस्मिन् दिवसे सा ज्वरग्रस्ता अभवत्, परं ज्वरेण पीडिता मरणं प्राप्तवती। तदा तस्याः अन्तिमक्रियां कृत्वा एकः तस्याः एव भस्मोपरि शय्यां कृत्वा मठं निर्माय तत्र स्थातुम् आरब्धवान्। एकः तस्याः अस्थीनि गङ्गायां समर्पयितुं गतवान्। अपरः तापसः भूत्वा देशान्तरं गतवान्। एकदा सः तापसः एकस्य ब्राह्मणस्य अतिथिः अभवत्। तत्र सः दृष्टवान् यत् ब्राह्मणी तस्याः पुत्रः अग्निकुण्डे निक्षिप्तवान् तस्य क्रन्दनं स्थगयितुम्। सः भस्मीभूतः अभवत्। तद् दृष्ट्वा तापसः भोक्तुम् न इष्टवान्। तदा ब्राह्मणः एकां पुस्तिकाम् उद्घाट्य मन्त्रोच्चारणेन तं पुनः उज्जीवितवान्। एतत् दृष्ट्वा रात्रौ यदा सर्वे सुप्ताः तदा तां पुस्तिकाम् आदाय सः श्मशानम् आगतवान्। तदा द्वितीयः अपि तत्र आगतवान्। सः मन्त्रपूतं जलं तस्याः उपरि निक्षिप्तवान्। तदा सा मन्दारवती पुनः उज्जीविता अभवत्। तदा कः तां प्राप्स्यति इति विषये तेषां मध्ये द्वन्द्वः आरब्धः। तस्य समाधानार्थं वेतालः राजानम् उक्तवान्। तदा राजा अकथयत् यत् यः मन्त्रेण जीवनं पुनः दत्तवान् सः पितुः कार्यं कृतवान्। यः अस्थीनि गङ्गायां क्षेप्तुम् गतवान् सः पुत्रस्य कार्यं कृतवान्। यः तस्याः भस्म यत्र महाघोरे श्मशाने आसीत् तत्रैव आसीत् सः एव पत्युः कार्यं कृतवान्। दुःखे अपि तां परित्यज्य न गतवान्। तस्मात् सः एव तस्याः पतिः इति। वेतालः उत्तरं श्रुत्वा पुनः स्वस्य स्थानं गतवान्। राजा अपि तम् अनुसृतवान्। यतो हि महान्तः जनाः यदा किमपि कार्यं स्वीकुर्वन्ति तदा तत् समाप्य एव विरमन्ति समाप्तेः पूर्वम् न कदापि विरमन्ति।



## पाठगतप्रश्नाः-१

१. कन्यायाः ग्रामस्य नाम किम्।

२. ब्रह्मस्थलग्रामः कस्याः नद्याः तीरे आसीत्।

३. विप्रस्य नाम किम्।

४. कथायाः नायिकायाः नाम किम्।

५. त्रयः कुमाराः कुतः आगतवन्तः।

६. तापसः कस्मिन् ग्रामे ब्राह्मणस्य अतिथिः अभवत्।



७. तापसः कस्य कार्यं कृतवान्।

८. यः गङ्गायां गतवान् सः कस्य कार्यं कृतवान्।

९. कः मन्दारवत्याः भर्ता।

१०. महासत्त्वाः किम् अकृत्वा न निवर्तन्ते।

११. यावत्तत्र प्राप्तः समन्तात् वीक्षते स्म तावत् तं वेतालं भूमौ ........ ददर्श।

१२. राजन्, महति अनुचिते ......... पतितः असि।

१३. अस्ति कालिन्दीतटे ............. कश्चिद् अग्रहारः।

१४. अग्निस्वामिनः अतिरूपवती ........... नाम कन्यका अजनि।

१५. ततश्च तेषाम् एकः तत्र मठं निर्माय तद्भस्मशय्यायां .......... जीवन् अतिष्ठत्।

१६. द्वितीयः तस्याः ......... उपादाय भागीरथ्यां निक्षेप्तुं जगाम।

१७. स तु भ्राम्यन् तापसः .............. ग्रामं प्राप्य कस्यापि विप्रस्य गृहे अतिथिरभूत।

१८. यः क्लेशेन मन्त्रमानीय एनाम् अजीवयत् स खलु .......... न पतिः।

१९. .......... प्रतिपन्नम् अर्थम् असाधयित्वा न निवर्तन्ते।

२०. स्तम्भं मेलयत -

| स्तम्भः कः | स्तम्भः खः |
|---|---|
| १. ग्रामस्य नाम | मठवासी |
| २. विप्रः | महासत्त्वाः |
| ३. त्रयः कुमाराः | अग्निस्वामी |
| ४. नदी | मन्दारवती |
| ५. अग्निस्वामिनः कन्या | ब्रह्मस्थलम् |
| ६. तापसः | पितुः कार्यम् |
| ७. मन्दारवत्याः भर्ता | कालिन्दी |
| ८. प्रतिपन्नमर्थं साधयन्ति | कान्यकुब्जात् |

## ५.२) कथोपसंहृतिः

### प्रस्तावना

शिष्टपरिपालनं दुष्टदमनञ्च परम्परास्माकं भारतीयानाम्। कथं वेतालः विक्रमादित्यस्य विलम्बं जनयति स्म, कथं वा प्रश्नोत्तरेण तं बध्नाति स्म – इति विषये अवलोकयितुमेव प्रारब्धोऽयं भागः। अत्र वयं पश्यामः कथं राजा दुष्टनिग्रहं विदधाति कथं वा वेतालः सत्कर्मणि राज्ञः साहाय्यं कुरुते।



## ५.३) मूलपाठः

क्षान्तिशीलस्य आज्ञानुसारं राजा त्रिविक्रमसेनः वेतालम् आदाय यावत् भिक्षोः सकाशम् आगन्तुकामः तावत् मार्गमध्ये सः वेतालः तस्मै कथां श्रावयित्वा प्रश्नम् अपृच्छत्। तदा नियमानुसारेण सः राज्ञः समीचीनम् उत्तरं श्रुत्वा पुनः शिंशपावृक्षं प्रति गच्छति स्म। एवं चतुर्विंशतिवारम् अभवत्। ततः परं स वेतालः राजानं सत्यम् अकथयत्।

वस्तुतस्तु स भिक्षुः न साधुः सन्न्यासी परन्तु धूर्तः लोभी च। सः विद्याधरपदप्राप्त्यर्थं यागं करोति स्म। परन्तु तस्मिन् यागे वेतालस्य पूजनं कस्यापि महतः जनस्य अर्थात् यः सज्जनः, दयादाक्षिण्यादिसत्त्वगुणसम्पन्नः - एवंविधस्य कस्यापि बलिश्च अर्पणीयः। एवंविधमहद्गुणसम्पन्नः राजा विक्रमादित्यः एव भविष्यति इति विचिन्त्य सः धूर्तः भिक्षुः राजानं छलकपटेन वेतालानयनाय प्रेषितवान्। किञ्च सः लोभी तस्मात् स यदि विद्याधरपदं प्राप्नोति तर्हि जगतः अकल्याणं भवेत्। तस्मात् सः रोधनीयः। एवं व्याख्याय वेतालः राजानम् उक्तवान् - "अहम् एकं शवम् आश्रयामि। त्वं तत् शवं नीत्वा याहि। सः भिक्षुः तं शवम् आधारीकृत्य मां पूजयिष्यति। पूजानन्तरं यदा सः भिक्षुः राजानं प्रणामार्थम् आह्वयिष्यति तदा - "नाहं तथा प्रणामं वेद्मि, प्राक् त्वं दर्शय, ततोऽहं तथा करिष्यामि"इति ब्रूयाः" इति। तथा भिक्षौ सम्पादिते राज्ञा तस्य शिरश्छेदः विधेयः इति।

एवं ध्यात्वा राजा वेतालाधिष्ठितं शवं कण्ठे संस्थाप्य तस्य भिक्षोः सकाशं गतवान्। तत्र गत्वा राजा दृष्टवान् यत् श्मशानं परितः अस्थिचूर्णं नृकपालिकाः शोणधाराः चिताधूमलेखा च विस्तृताः। राजा गत्वा तं शवं यथास्थानं संस्थापितवान्। ततः परं सः भिक्षुः तं शवं पूजयितुम् आरब्धवान्। पूजनानन्तरं राजानम् आहूय उक्तवान् - "राजन्, अयं मन्त्राधिराजः। अयं भवतः सर्वाः मनसः कामनाः पूरयिष्यति। तस्मात् साष्टाङ्गम् एनं प्रणम" इति। एवं श्रुत्वा वेतालोपदेशानुसारं सः भिक्षुम् उक्तवान् - "अहं तु राजा। तस्मात् तथाविधं साष्टाङ्गं प्रणामं न वेद्मि। ततः भवान् एव आदौ दर्शयतु। शिष्टमनु प्रवर्तन्ते हि लोकाः" इति। एवं श्रुत्वा सः भिक्षुः साष्टाङ्गप्रणतिः कथं भवति इति बोधयितुं यदा भूमौ न्यपतत् तदा विक्रमादित्यः स्वस्य खड्गेन तस्य शिरः छित्वा तं चिराय भूमौ शायितवान्। ततः परं हृत्पद्मम् उत्पाट्य तत् शिरश्च वेतालाय न्यवेदयत्। तदा साधुवादं कुर्वन् वेतालः शवात् बहिः आगत्य उक्तवान् - "राजन्, याथार्थ्येन वीरोऽसि। अयं भिक्षुः यत् विद्याधरेन्द्रत्वम् इष्टवान् तत् त्वं प्राप्स्यसि।"इति। ततः परं वेतालः अभीष्टवरलाभाय राजानम् अनुरुद्धवान्। तदा राजा उक्तवान् यत् वेतालः तस्मिन् प्रसन्नः चेत् तस्य वरस्तु लब्धः एव इति। वेतालः यदा पुनः प्रार्थयितुम् उक्तवान् तदा राजा कथितवान् यत् याः पञ्चविंशतिः कथाः उपदेशाश्च कथिताः ताः भुवि चिराय प्रसिद्धाः स्युः इति। तदा वेतालः प्रत्यभाषत यत् ये एवं कथाः श्रोष्यन्ति पठिष्यन्ति वा ते मुक्तपापाः भविष्यन्ति। किञ्च यत्र इमाः कथाः कथयिष्यन्ते तत्र यक्षराक्षसादयः न स्थास्यन्ति इति। एवमुक्त्वा वेतालः अन्तर्हितः अभवत्।

ततः परं साक्षात् महादेवः सर्वगणैः परिवृतः सन् तत्रागतः। सः राज्ञः प्रशंसां कुर्वन् तस्मै अपराजितनामैकं खड्गम् उपायनीकृतवान्। तदनन्तरं सः राजा प्रातः स्वभवनं गतवान्। महादेवस्य प्रासादात् राज्यशासनं कुर्वन् मरणानन्तरं विद्याधरेन्द्रपदं लब्ध्वा अन्तिमे भगवत्सायुज्यं प्राप्तवान्। एवमेव इयं कथा उपसंहृता इति शिवम्॥





## पाठगतप्रश्नाः- २

२१. भिक्षोः नाम किम्।

२२. राजा कतिवारं वेतालम् आदाय श्मशानं प्रत्यागन्तुम् अयतत।

२३. वेतालवचनान्तरं कः आविर्भूतः।

२४. महादेवः राज्ञे किम् अयच्छत्।

२५. भिक्षुणा किं पदम् अभीष्टमासीत्।



## पाठसारः

तृतीयायां कथायां मन्दारवत्याः मरणे प्राप्ते सत्यपि त्रयः विप्राः ये तस्यां प्रीताः आसन् तेषु एकः श्मशाने स्थितवान्, एकः देशान्तरं गतवान्, एकश्च गङ्गायां अस्थिविसर्जनार्थं गतवान्। तापसस्य मन्त्रेण सा पुनः उज्जीविता। तदा सा कस्य भवेत् इति प्रश्ने राजा उक्तवान् यत् यः श्मशाने आसीत् सः घोरे भयाकुले निर्जने अपि तस्याः पार्श्वे एव आसीत् इत्यस्मात् सः एव योग्यः वरः।

चतुर्थे वयं दृष्टवन्तः यत् कथं वेतालः राज्ञः विलम्बं जनयति स्म। वस्तुतस्तु भिक्षुः क्षान्तिशीलः न सज्जनः परन्तु धूर्तः। स स्वेष्टविद्याधरेन्द्रपदलाभाय राज्ञः बलिं वाञ्छति स्म। तस्मात् तं स्वकार्यसिद्धये बद्धवान्। परन्तु वेतालः तस्मै सर्वं वृत्तान्तम् अकथयत्। सः राज्ञे उक्तवान् यत् यदा सः भिक्षुः साष्टाङ्गप्रणामाय वदिष्यति तदा आदौ त्वं दर्शय ततः दृष्ट्वा आचरिष्यामि इति वदिष्यति। एवं ज्ञात्वा राजा विक्रमादित्यः वेतालनिविष्टं शवं नीत्वा श्मशानं गतवान्। तत्र स भिक्षुः शवस्य पूजनम् अकरोत्। पूजानन्तरं विविधप्रशंसावचनैः राजानं बोधयित्वा प्रणामाय तम् अकथयत्। तदा वेतालवचनं स्मृत्वा राजा आदौ प्रणामं दर्शयितुं भिक्षुम् उक्तवान्। यावत् स भिक्षुः प्रणामं करोति स्म तावत् वेतालवचनानुसारं स्वस्य खड्गेन तस्य शिरश्छेदम् अकरोत्। ततः परं शिरः हृत्पद्मञ्च वेतालाय न्यवेदयत्। तेन प्रीतः वेतालः शवात् आगत्य अकथयत् यत् राजा विक्रमादित्यः भूमौ राज्यशासनानन्तरं विद्याधरेन्द्रपदं प्राप्स्यतीति। तदा भगवान् महादेवः तत्र आविर्भूय तस्मै राज्ञे एकम् अपराजितनामकम् खड्गम् अयच्छत्। एवमेव भगवदनुग्रहेण विक्रमादित्यः भूमौ राज्यशासनं ततः स्वर्लोकशासनं चाकरोत्।



## किमधिगतम्

१. महासत्त्वाः प्रतिपन्नमर्थम् असाधयित्वा न निवर्तन्ते।

२. कन्यादानस्य भारतीयसंस्कृतौ गुरुत्वम्।



३. राज्ञः विक्रमादित्यस्य तीक्ष्णबुद्धिः विचारकौशलम् च।



## योग्यताविस्तारः

### सन्दर्भग्रन्थपरिचयः

ग्रन्थेऽस्मिन् राज्ञः विक्रमादित्यस्य वेतालस्य च कथाः वर्णिताः। अत्र पाठे एका कथा ग्रन्थोपसंहारश्च प्रदत्तः। कश्चित् अधिकं पठितुं वाञ्छति सः एनं ग्रन्थं पठेत् –

१. वेतालपञ्चविंशतिः – प्रकाशहिन्दीव्याख्योपेता

व्याख्याकारः – पण्डित दामोदर झा

प्रकाशकः – चौखम्बा विद्याभवन, वारणसी – १

### भावविस्तारः

१. अस्मिन् पाठे विक्रमादित्यस्य सम्यग् धीः शिष्टपालनं दुष्टनिग्रहश्च इति विषये ज्ञायते। शतवारं कार्ये साफल्यं नायाति चेदपि पुनः एकवारं प्रयतनीयम्, तत्कार्यं नैव त्याज्यम् - इति विवेकः लभ्यते।

२. इमाः कथाः नाटकरूपेण मञ्चादिषु उपस्थापयितुं शक्यन्ते। तेन भाषायाः विस्तारः अपि स्यात्, सर्वेषां ज्ञानमपि भवेत्।

३. एका पत्रिका प्राप्यते। तस्याः नाम चन्दमामा इति। तस्यां पत्रिकायां प्रत्येकं संख्यायां वेतालपञ्चविंशतेः कथाः प्रकाश्यन्ते। तत्र तत्सदृशाः अपि कथाः प्राप्यन्ते। तेन छात्राः अधिकान् कथाग्रन्थान् पठितुं शक्नुवन्ति।

४. वेतालपञ्चविंशतेः अनेकाः कथाः युट्युब-मध्ये चलच्चित्ररूपेण नाटकरूपेण वा प्राप्यन्ते। ताः अपि छात्राः द्रष्टुं शक्नुवन्ति।

५. विविधाः दूरदर्शनपरिचालकसंस्थाः धारावाहिकचलच्चित्ररूपेण प्रतिरविवासरं वेतालपञ्चविंशतेः कथाः दर्शयन्ति। ताः अपि सर्वे द्रष्टुं शक्नुवन्ति।

६. अत्र याः कथाः प्रदत्ताः तेषु कश्चन नायकः वर्तते। सः च कस्यचित् गुणस्य प्रकाशकः। तं गुणं यदि वयं स्वीकरिष्यामः, नायकः यथा व्यवहरति तथा अनुसरिष्यामः तर्हि अस्माकमेव लाभः स्यात्।

### भाषाविस्तारः

१. अत्र बहवः अल्पसमासयुक्ताः शब्दाः वर्तन्ते। तेषां तालिका करणीया। ततः परम् तालिकायाः पठनेन नवीनशब्दानां ज्ञानं समासबोधसारल्यम् अपि जायते।

२. नवीनसुबन्तशब्दानां रूपाणि लिखित्वा अभ्यासो विधेयः।

३. नवीनतिङन्तशब्दानां लट्लकारे, लङ्लकारे, लृट्लकारे, विधिलिङ्लकारे, लुट्लकारे लुङ्लकारे



च रूपाणि पत्रमध्ये लिखित्वा अभ्यासः आवश्यकः।

४. ये अव्ययशब्दाः दृष्टाः तेषाम् अपि तालिका प्रस्तुतव्या। स्वयं यदा किमपि उत्तरं लिख्यते तदा एतेषां प्रयोगः करणीयः।



## पाठान्तप्रश्नाः

१. कथं मन्दारवत्याः पिता कियत्कालं तत्र स्थातुं तान् अकथयत्।

२. तापसस्य वृत्तान्तं स्ववचनैः वर्णयत।

३. मन्दारवत्याः स्वामी कः इति विक्रमादित्यस्य वचनं व्याख्यायत।

४. कथायाः सारं सरलवचनैः प्रकटयत।

५. वेतालवचनानुसारं विक्रमादित्यः कथं दुष्टनिग्रहं कृतवान् इति विषयं सविस्तरं वर्णयत।

६. वेतालः राज्ञे किम् आदिष्टवान् व्याख्यात।



## पाठगतप्रश्नोत्तराणि

**उत्तराणि - १**

१. ब्रह्मस्थलम् इति नाम।

२. कालिन्दीनन्द्याः।

३. अग्निस्वामी।

४. नायिकायाः नाम मन्दारवती इति।

५. त्रयः कुमाराः कान्यकुब्जात् आगतवन्तः।

६. वज्रालोकनामके ग्रामे।

७. तापसः पितुः कार्यं कृतवान्।

८. पुत्रस्य।

९. यः तस्मिन् श्मशाने तस्याः मन्दारवत्याः भस्मेन साकम् आसीत् स एव भर्ता।

१०. प्रतिपन्नम् अर्थम् असाधयित्वा।

११. कूजन्तम्।

१२. क्लेशे।

१३. ब्रह्मस्थलाभिधः।



१४. मन्दारवती।

१५. भैक्ष्येण।

१६. अस्थीनि।

१७. वज्रालोकाभिधम्।

१८. पितृकार्यकरणात्।

१९. महासत्त्वाः।

२०. स्तम्भः।

१) ब्रह्मस्थलम्।

२) अग्निस्वामी।

३) कान्यकुब्जात्।

४) कालिन्दी।

५) मन्दारवती।

६) पुत्रस्य कार्यम्।

७) मठवासी।

८) महासत्वाः।

**उत्तराणि - २**

२१. क्षान्तिशीलः।

२२. चतुर्विंशतिवारम्।

२३. भगवान् महादेवः।

२४. अपराजितनामकं खड्गम्।

२५. विद्याधरेन्द्रपदम्।

॥ इति पञ्चमः पाठः ॥



# ६

# शुकसप्ततिः

## प्रस्तावना

अनिरुद्धवेगा हि गतिः अनङ्गस्य। न सापेक्षते अन्तरायं न वा विरामम्। भूयशोऽवरुद्धमानोऽपि स कामः प्रतिपदं मानिनीं कामिनीं विदधाति। परन्तु पुत्रः विपथि गच्छति चेद् किं पितरौ तं परित्यजति। नैव परन्तु तं बोधयति सन्मार्गे प्रावर्तयति च। एवमेव शुकसप्ततौ मदनविनोदः यदा वाणिज्यार्थं देशान्तरं गतवान् तदा नीत्युपदेशदानद्वारा कामहतायाः प्रभावत्याः चरित्ररक्षणं यथा स्यात् तदर्थं कथाः श्रावितवान्। पञ्चतन्त्रे राज्ञः पुत्राः अलसाः भोगेषु आसक्ताः मूर्खाश्च आसन्। विष्णुशर्मा नामकः विद्वान् कथाद्वारेण तान् प्रबोधितवान् तेन च ते ज्ञानिनः सञ्जाताः। अस्मिन् पाठे तु शुकसप्ततिः इति पुस्तकात् कथाः स्वीकृताः। शुकसप्ततौ शुकः अनैतिककर्मणः प्रभावतीं प्रतिषेद्धुं कथामुखेन नीत्युपदेशान् ददाति स्म।



## उद्देश्यानि

इमाः कथाः पठित्वा भवन्तः -

१. कथाच्छलेन नीतिवाक्यकथनम् ज्ञास्यन्ति।

२. संस्कृतवाङ्मये कथाः कथम् आनन्दम् जनयन्ति तद् बोद्धुं शक्नुवन्ति।

३. नैतिकशिक्षां व्यवहारिकशिक्षां च लप्स्यन्ते।

४. संस्कृतेन स्वयं कथाम् लेखितुं शक्नुयुः।

## ६.१) प्रथमकथा- सुदर्शनधीः

### ६.१.१) कथामुखम्

हरिदत्तः इत्याख्यस्य कस्यचित् वणिजः मदनविनोदः इति नाम्ना पुत्रः आसीत्। स च पुत्रः दुष्टः आसीत्। कुमार्गगामिनं पुत्रम् एनम् दृष्ट्वा पितरौ दुःखितौ सञ्जातौ। दुःखापन्नम् वणिजम् दृष्ट्वा बन्धुः त्रिविक्रमः इति नाम्ना कश्चित् ब्राह्मणः स्वगृहम् गतवान्। आगत्य च नीतिनिपुणे शुकसारिके आदाय तद्गृहम् पुनः यातवान्। तत्र गत्वा च उक्तवान् मित्र अयम् सपत्नीकः शुकः त्वया पुत्रवत् पालनीयः। अस्य यथायथं पालनेन तव दुःखम् अपगमिष्यति इति। हरदत्तस्तु तम् स्वपुत्राय दुष्टाय समर्पितवान्। मदनविनोदः तम् यथायथम् पालयति स्म। शुकोपदेशेन कालेन कुमार्गगामी दुष्टः पुत्रः मातरि पितरि च



साधुः अभवत् विनीतोऽपि सञ्जातः। अनन्तरम् पितरौ नमस्कृत्य तदाज्ञाम् आदाय पत्नीं च पृष्ट्वा वाणिज्यार्थम् नौकया देशान्तरम् गतवान्। तस्य गमनात् परम् पत्नी प्रभावती शोकव्याकुला कानिचित् दिनानि व्यतीतवती। व्यभिचारिणीभिः तत्सखीभिः इयम् बोधिता यत् पत्युः अनुपस्थितौ परपुरुषगमनम् कार्यम् इति। समुत्सुकायाः अस्याः अपि तद्विषये अभिलाषः सञ्जातः। एवम् यदैव परपुरुषेण रमणार्थम् इयम् गन्तुकामा भवति स्म तदैव शुको वारयति स्म मा गच्छतु इति। चतुरः शुकः कथयति स्म त्वं तादृशम् कुकर्म कर्तुम् अर्हसि परन्तु प्रतिकूलावस्थायाम् आत्मानम् रक्षितुम् तव बुद्धिः अपि आवश्यकी। प्रतिकूलावस्थायाम् दुष्टाः उपहसन्तः एव भवन्ति इत्येवम् श्रुतवत्याः प्रभावत्याः मदनविनोदस्य पत्न्याः औत्सुक्यम् अपगतम्। सः शुकः ताम् परपुरुषसङ्गमात् रक्षितुम् मनोरञ्जकाः नैकाः कथाः उक्तवान्। कथामध्ये अस्याम् विपत्तौ कीदृशम् आचरणम् विधेयम् इत्यादिप्रश्नम् अपि पृच्छति स्म। तासाम् कथानाम् संग्रहः शुकसप्ततिः इति। एवं शुकः तस्याः शीलम् रक्षितवान्। अन्ते मदनविनोदः विदेशात् आगतवान्। ततः स पत्न्या सह सुखेन कालम् व्यतीतवान् इत्येवम् ग्रन्थस्य परिसमाप्तिः।

## ६.१.२) पूर्वपीठिका

**अस्ति चन्द्रपुरं नाम नगरम्। वाणिज्यार्थं सारिकाप्रेषिते मदनविनोदनाम्नि वणिजि तत्पत्नी प्रभावती सम्प्राप्तमधुकाले अनलबाणाहता सती स्वैरिणीभिः सखीभिः प्रतिबोधिता यदा पुरुषान्तराभिलाषिणी सञ्जाता तदा तत् क्षमयितुम् अपि च तस्याः पातिव्रत्यं रक्षितुं शुकः उक्तवान् -**

## ६.१.३) प्रथमकथा- सुदर्शनधीः - मूलपाठः - विभागः - १

**शुकः -**

**गच्छ देवि किमाश्चर्यं यत्र ते रमते मनः।**
**नृपवद्यदि जानासि परित्राणं त्वमात्मनः॥**

**प्रभावती पृच्छति- कथमेतत्।**

**शुकः कथयति- अस्ति विशाला नगरी। तत्र सुदर्शनो राजा। तत्र च विमलो नाम वणिक्। तस्य च पत्नीद्वयं सुभगं रूपसम्पन्नं दृष्ट्वा कुटिलनामा धूर्तस्तद्भार्याद्वयग्रहणेच्छया अम्बिकां देवीमाराध्य विमलरूपं ययाचे। लब्ध्वा च तत्प्रकृतिं विमले बहिर्गते तद्गृहं गत्वा प्रभुत्वं चकार। प्रसाधनदानैर्वशीकृतोऽखिलोऽपि परिजनवर्गः। तद्भार्याद्वयं बहुमानदानादिना सन्तोष्य स्वेच्छया भुङ्क्ते। विमलोऽयं धनाद्यनित्यतां श्रुत्वा दाता बभूवेति परिजनोऽनवरतं चिन्तयति।**

### व्याख्या

चन्द्रपुरम् इति कश्चित् नगरम् आसीत्। तत्र वाणिज्यार्थं सारिकाप्रेषिते सारिकया प्रेषिते मदनविनोदनाम्नि मदनविनोदः इत्याख्ये वणिजि गते तत्पत्नी मदनविनोदपत्नी सम्प्राप्तमधुकाले अनलबाणहता सती स्वैरिणीभिः व्यभिचारिणीभिः सखीभिः मित्रैः प्रतिबोधिता विज्ञापिता यदा



पुरुषान्तराभिलाषिणी अन्यपुरुषसङ्गतौ अभिलाषवती सञ्जाता अभूत् तदा तत् पुरुषान्तरसङ्गमनेच्छाम् क्षमयितुम् प्रशमयितुम् तस्याः प्रभावत्याः पातिव्रत्यं सतीत्वम् च रक्षितुम् शुकः उक्तवान्-

**गच्छ देवि किमाश्चर्यं यत्र ते रमते मनः।**
**नृपवद्यदि जानासि परित्राणं त्वमात्मनः॥**

**अन्वयः**

देवि यदि त्वम् नृपवत् आत्मनः परित्राणम् जानासि यत्र ते मनः रमते गच्छ। किम् आश्चर्यम्।

**अन्वयार्थः**

हे देवि (प्रभावति) यदि त्वम् नृपवत् नृपः इव आत्मनः स्वस्य परित्राणम् रक्षां कर्तुम् जानासि तर्हि यत्र यस्मिन् पुरुषे ते तव मनः रमते संलग्नं वर्तते (तत्पार्श्वं) गच्छ। (अस्मिन् विषये)किम् आश्चर्यम्। किमपि आश्चर्यम् नास्ति, यस्याः मनः यत्र रमते सा तत्र यात्येव।

**तात्पर्यार्थः**

शुकेन प्रभावत्यां वारितायाम् अपि परपुरुषस्य रमणार्थम् गच्छन्तीम् ताम् प्रभावतीम् कथयति शुकः यत् परपुरुषरमणाय गच्छति चेत् तत्र किमपि आश्चर्यम् न भवति यतो हि या यम् इच्छति सा तत्र गच्छति एव तस्मात् हे देवि त्वम् अपि गन्तुम् शक्नोषि किन्तु देवि त्वम् विपदि नृपवद् रक्षणम् कर्तुम् जानासि चेदेव गच्छ अन्यथा कदाचित् महान् क्लेशः उत्पद्येत।

प्रभावती पृच्छति जिज्ञासति कथम् एतत् उक्तम् अर्थात् नृपः कथम् आत्मानम् रक्षितवान् इति प्रश्नः - अस्ति विशाला नगरी। तत्र विशालायाम् नगर्याम् सुदर्शनः इति कश्चित् राजा। तत्र च नगर्याम् विमलः इति कश्चित् वणिक्। तस्य च वणिजः पत्नीद्वयम् सुभगम् सुन्दरम् रूपसम्पन्नम् रूपवत् दृष्ट्वा वीक्ष्य कुटिलनामा कुटिलः इत्याख्यः धूर्तः दुष्टः तद्भार्याद्वयग्रहणेनच्छया तस्य वणिजः भार्याद्वयस्य ग्रहणस्य स्वीकरणस्य इच्छया लिप्सया वणिग्भार्याद्वयस्वीकरणलिप्सया अम्बिकाम् देवीम् आराध्य भगवत्याः अम्बिकायाः आराधनां कृत्वा इत्यर्थः, विमलरूपम् विमलस्य रूपं ययाचे याचितवान् इष्टवान्। लब्ध्वा प्राप्य च तत्प्रकृतिम् तस्य वणिजः प्रकृतिम् आकृतिम् विमले बहिर्गते तद्गृहम् तस्य विमलस्य गृहम् गत्वा प्रभुत्वम् स्वामित्वम् चकार कृतवान्। प्रसादधनदानैर्वशीकृतोऽखिलोऽपि प्रसादेन अनुग्रहेण धनस्य दानैः पुरस्काररूपेण धनं दत्त्वा वशीकृतो स्वायत्तीकृतः अखिलोऽपि सर्वोऽपि परिजनवर्गः भृत्यवर्गः। तद्भार्याद्वयम् तस्य विमलस्य भार्याद्वयम् स्त्रीद्वयम् बहुमानदानादिना अत्यन्तम् सम्मानदानादिना सन्तुष्टं कृत्वा स्वेच्छया यथेष्टम् भुङ्क्ते सम्भोगं करोति। विमलोऽयम् नूतनः अयम् विमलः धनाद्यनित्यताम् धनादेः अनित्यताम् श्रुत्वा मत्वा दाता दानशीलः बभूव अभवत् इति परिजनः भृत्यवर्गः अनवरतम् निरन्तरम् चिन्तयति भावयति।

**सरलार्थः**

चन्द्रपुरम् इति नगरस्य वणिजि मदनविनोदे वाणिज्यार्थं विदेशं गते तत्पत्नी प्रभावती कामातुरा सञ्जाता। ततः तत्सखीभिः विज्ञापितायाः तस्याः परपुरुषस्य रमणाय इच्छा सञ्जाता। किन्तु शुकः ताम् वारयन् कथयति यत्



यदि सा नृपवद् स्वस्याः रक्षणं कर्तुं शक्नोति, तर्हि सा परपुरषरमणाय गन्तुम् अर्हति। तदा सा प्रभावती नृपः कथं रक्षणं कृतवान् इति पृष्टवती। तदा शुकः उक्तवान् यत् विशालाख्या एका नगरी आसीत्। तत्रत्यस्य राज्ञः नाम आसीत् सुदर्शनः इति। तत्र निवसति स्म एको वणिक्, यस्य नाम विमलः इति। तस्य भार्याद्वयम् आसीत् - रुक्मिणी सुन्दरी च। तत्रैव नगर्याम् एको धूर्तः आसीत्। तस्य नाम कुटिलः इति। देव्याः अम्बिकायाः आराधनां कृत्वा तस्याः सकाशात् विमलाकृतिं प्राप्तवान्। ततः परं यदा विमलः गृहाद् बहिः प्रस्थितः, तदा स धूर्तः गृहं प्रविष्टवान्। स धनं प्रदाय भृत्यान् स्वाधीने कृतवान्। भार्ये तं स्वपतिरूपेण स्वीकृतवत्यौ। स सर्वेषां धनादिना सन्तोषमपि विहितवान्।

**व्याकरणविमर्शः -**

- पुरषान्तराभिलाषिणी - पुरुषान्तरस्य पतिभिन्नस्य अभिलाषिणी अभिलाषवती इति षष्ठीतत्पुरुषसमासः।
- प्रसादधनदानैः - प्रसादेन अनुग्रहेण धनस्य दानैः पुरस्काररूपेण धनं दत्त्वा।
- परिजनवर्गः - भृत्यसमुदायः।
- ययाचे - टु याचृ याच्ञायाम् इति धातोः लिटि प्रथमपुरुषैकवचनम्।
- चकार – डुकृञ् करणे इति धातोः लिटि प्रथमपुरुषैकवचने रूपम्।

## ६.१.४) प्रथमकथा- सुदर्शनधीः - मूलपाठः - विभागः - २

**अथ सत्यविमलोऽपि द्वारमागतः कुटिलाज्ञया द्वारपालेन निषिद्धः। ततो बहिस्थः फूत्करोति "वञ्चितोऽहं धूर्तराजेन"। तस्य चैवं क्रन्दतो गोत्रजा जनाः कौतुकाच्च मिलिताः। तत्क्षणात् हट्टानि मुक्त्वा वणिक्सार्थो मिलित्वा आरक्षकमन्त्रिमुख्यानां पुरतः फूच्चक्रे। "राजन् वञ्चितोऽस्मि धूर्तराजेन"। ततो राजा तदवलोकनाय प्रहिताः पुरुषाः। तेनापि ते द्रव्यादिदानेन सानुकूलाः कृताः। तं धनमायकं गृहे दृष्ट्वा जनो वदति- "स्वामिन् विमलो गृहे विद्यते। अयञ्च धूर्तराट् द्वारस्थः"। ततो नृपेण द्वावप्येकत्र कृतौ। ततो द्वयोर्मध्यान्न कोऽपि धूर्ततरयोर्व्यक्तिं जानाति। जातः कोलाहलोऽखिललोकव्यवहार-नाशकरो राज्ञश्चापवादः। यतो राज्ञां दुष्टनिग्रहः शिष्टपालनञ्च स्वर्गाय।**

**व्याख्या**

अथ अनन्तरम् सत्यविमलः अपि अर्थात् वस्तुतः यः विमलः अस्ति सोऽपि द्वारम् गृहद्वारम् आगतः कुटिलाज्ञया कुटिलस्य आज्ञया आदेशेन द्वारपालेन द्वाररक्षकेण निषिद्धः प्रतिषिद्धः। ततः अनन्तरम् बहिस्थः फूत्करोति चित्करोति वञ्चितः अहम् धूर्तराजेन कुटिलेन। तस्य च एवं क्रन्दतः क्रन्दनं कुर्वाणस्य गोत्रजाः जनाः कौतुकात् उत्कण्ठया मिलिताः। तत्क्षणात् तस्मिन् काले हट्टानि मुक्त्वा त्यक्त्वा वणिक्सार्थः वणिक्समूहः मिलित्वा आरक्षिकमन्त्रिमुख्यानाम् आरक्षिकाणाम् नगरपालानाम् मन्त्रिमुख्यानाम् मन्त्रिप्रवराणाम् च पुरतः पुरस्तात् फूच्चक्रे चित्कारम् कृतवान् - राजन् वञ्चितः अहम् धूर्तराजेन कुटिलेन।



ततः अनन्तरम् राज्ञा तदवलोकनाय प्रहिताः प्रेषिताः पुरुषाः। तेनापि धूर्तराजेन कुटिलेन ते राजपुरुषाः द्रव्यादिदानेन सानुकूलाः कृताः स्वायत्तीकृताः। तं धनदायकम् गृहे दृष्ट्वा जनः राजपुरुषः वदति - स्वामिन् विमलः तु गृहे विद्यते अस्ति। अयं च धूर्तराट् धूर्तराजः द्वारस्थः द्वारे स्थितः। अर्थात् द्वारे स्थितः वास्तविकः विमलः धूर्तराजः किञ्च गृहे स्थितः नूतनः विमलः एव साधुः इति राजपुरुषः राजानम् वदति इति भावः। (वस्तुतः तथा नास्ति, अत्र वैपरीत्यमेव अस्ति)।

ततः नृपेण राज्ञा द्वावप्येकत्र द्वौ अपि एकत्र कृतौ। ततः द्वयोः मध्ये न कोऽपि धूर्तेतरयोर्व्यक्तिं जानाति अर्थात् कः धूर्तः विमलः को वा वास्तविकः विमलः इति न जानाति। जातः कोलाहलः अखिललोकव्यवहारनाशकरः समग्रलोकव्यवहारनाशकरः राज्ञः नृपस्य च अवपादः लोकनिन्दा। यतः यस्मात् राज्ञाम् नृपाणाम् दुष्टनिग्रहः दुष्टस्य निग्रहः दमनम् शिष्टपालनम् शिष्टस्य पालनम् च स्वर्गाय। अर्थात् शिष्टपरिपालनेन दुष्टदमनेन च राज्ञः स्वर्गलाभो भवति इति भावः।

**सरलार्थः**

परं यदा सत्यः विमलः आगतः तदा सर्वे तं वञ्चकरूपेण स्वीकृतवान्। स सत्यः विमलः गोत्रजान् आदाय राज्ञः सकाशं गतवान् सुविचाराय। तदा राजा राजपुरुषं प्रेषितवान् वृत्तान्तं ज्ञातुं परन्तु सः अपि धूर्तेन धनेन मोहितः। राजानम् च मिथ्या उक्तवान् सत्यः विमलः धूर्तः इति। तदा राजा उभौ अपि आहूतवान्। परन्तु उभयोः समाना आकृतिः अस्ति इति हेतोः किम् सत्यम् इति राजा ज्ञातुम् न शक्तवान्। एवं क्रमेण लोकव्यवहारनाशकः कोलाहलः संवृत्तः। राज्ञः च सर्वत्रैव निन्दा श्रूयते स्म। यतो हि राज्ञः कारणम् दुष्टदमनम् शिष्टपरिपालनम् च। तथा क्रियते चेत् राज्ञः स्वर्गलाभो भवति।

**व्याकरणविमर्शः**

- फूत्करोति - चीत्कारं करोति।
- गोत्रजाः - समाने गोत्रे जायन्ते इति गोत्रजाः कुलोत्पन्नाः।
- वणिक्सार्थः - वणिजां सार्थः समुदायः वणिक्सार्थः।
- आरक्षिकमन्त्रिमुख्यानाम् - आरक्षिकाः नगरपालाः मन्त्रिमुख्याः मन्त्रिवराश्च तेषाम्।
- धूर्तेतरयोः - धूर्तश्च इतरश्च धूर्तेतरौ इति इतरेतरयोगद्वन्द्वसमासः, तयोः धूर्तेतरयोः।
- अखिललोकव्यवहारनाशकरः - नाशं करोति इति नाशकरः। लोकस्य व्यवहारः इति लोकव्यवहारः इति षष्ठीतत्पुरुषः, अखिलः (सर्वः) च असौ लोकव्यवहारः चेति अखिललोकव्यवहारः तस्य नाशकरः इति षष्ठीतत्पुरुषे अखिललोकव्यवहारनाशकरः इति।
- दुष्टदमनम् - दुष्टस्य दमनम् दुष्टदमनम् इति षष्ठीतत्पुरुषसमासः।
- शिष्टपालनम् - शिष्टस्य पालनम् शिष्टपालनम् इति षष्ठीतत्पुरषसमासः।

## ६.१.५) प्रथमकथा- सुदर्शनधीः - मूलपाठः - विभागः - ३

**उक्तञ्च-**

**प्रजापीडनसन्तापात्समुद्भूतो हुताशनः।**



**राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्त्तते॥ इति।**

**ततो राजा एकान्ते तयोर्निर्णयमचिन्तयत्। तत्कथय कथं निश्चयः स्यादिति प्रश्नः।**

**व्याख्या**

परं राजा स्वयम् अस्य समाधाने प्रवृत्तः। कथितम् अपि -

**प्रजापीडनसन्तापात्समुद्भूतो हुताशनः।**
**राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्त्तते॥ इति।**

**अन्वयः**

प्रजापीडनसन्तापात् समुद्भूतः हुताशनः राज्ञः कुलम् श्रियम् प्राणान् अदग्ध्वा विनिवर्तते।

**अन्वयार्थः**

प्रजापीडनसन्तापात् प्रजानाम् पीडनम् तद्रूपसन्तापः उष्णता तस्मात् समुद्भूतः उत्पन्नः हुताशनः अग्निः राज्ञः नृपस्य कुलम् वंशम् श्रियम् सम्पदम् प्राणान् अदग्ध्वा न विनिवर्तते दग्ध्वैव विनिवृत्तो भवति शान्तो भवति।

**सरलार्थः**

श्लोकस्य अयम् भावः - राज्ञः प्रजानां यदि पीडनं भवति तर्हि तेन प्रजाः क्रुद्धाः भवन्ति। तेन क्रोधाग्निना नृपस्य कुलं धनम् तथा स्वप्राणाः अपि नश्यन्ति इति।

ततः राजा एकान्ते तयोः विमलयोः निर्णयम् अचिन्तयत् चिन्तितवान्। तत् कथय वद कथं निश्चयः स्यात् इति प्रश्नः।

**व्याकरणविमर्शः**

- प्रजापीडनसन्तापात् - प्रजानाम् पीडनम् तद्रूपसन्तापः उष्णता तस्मात्।

## ६.१.६) प्रथमकथा- सुदर्शनधीः - मूलपाठः - विभागः - ४

**शुकः- स राजा लब्धोपायस्तद्विमलभार्याद्वयं पृथक्पृथक्संस्थाप्य पृष्टवान्- किं युवयोः पाणिग्रहणे भर्त्रा विभूषणं प्रदत्तं धनञ्च। पश्चात्किं जल्पितं प्रथमसङ्गे च का वार्त्ता भर्त्रा सहाभूत्। का माता कश्च पिता। किं कुलम्, का जातिः। इत्येवं पृष्टाभ्यां यथालब्धं यथावृत्तं यथाप्रोक्तं यथासुप्तं सर्वं ताभ्यां कथितम्। पश्चात्तु तौ पुरुषौ पृष्टौ परस्परं विसंवदन्तौ। ततो भार्याद्वयस्य रुक्मिणीसुन्दरीनामधेयस्य यः संवादं वदति स सत्यः। इतरस्तु धूर्तो राज्ञा निर्वासितः। सत्यस्तु राज्ञा सभार्यः संस्कृतः स्वगृहं गतः। इति महाराजबुद्धिः॥**

**व्याख्या**

शुकः वदति - स राजा लब्धोपायः प्राप्तोपायः तद्वविमलभार्याद्वयम् तस्य विमलस्य भार्याद्वयम् पृथक् पृथक् संस्थाप्य पृष्टवान् - किं युवयोः पाणिग्रहणे भर्त्रा विभूषणम् प्रदत्तम् धनं च। पश्चात् ततः परम् किम् जल्पितम् कथितम् प्रथमप्रसङ्गे प्रथमे सङ्गमकाले च का वार्ता कथा भर्त्रा पत्या सह अभूत्। का माता कश्च पिता। किम् कुलम् वंशः। का जातिः। इत्येवं पृष्टाभ्याम् ताभ्याम् यथालब्धम् यथा प्राप्तम्



तथा, यथावृत्तम् यथा घटितम् तथा, यथाप्रोक्तम् यथा कथितम् तथा, यथासुप्तम् यथा सुप्तम् शयितम् तथा तत् सर्वम् ताभ्याम् कथितम् उक्तम्। पश्चात् तौ पुरुषौ परस्परम् विसंवदन्तौ विवादं कुर्वन्तौ पृष्टौ राज्ञा इति शेषः। ततः अनन्तरम् भार्याद्वयस्य रुक्मिणीसुन्दरीनामधेयस्य अर्थात् द्वयोः भार्ययोः मध्ये यः यस्याः कस्याश्चित् संवादं वदति यथायथम् इति शेषः, सः सत्यः साधुः। इतरस्तु धूर्तः विमलः राज्ञा निर्वासितः बहिष्कृतः। सत्यस्तु विमलः राज्ञा सभार्यः भार्यासहितः संस्कृतः स्वगृहम् गतः।

**सरलार्थः**

सः किं कृतवान् इति पृष्टे शुकः उत्तरति - तदा राजा तस्य पत्नीद्वयं पृथक् पृथक् स्थापयित्वा पृष्टवान् यत् तयोः विवाहसमये पतिः किम् भूषणं प्रदत्तवान्, विवाहात् परं प्रथमदिवसे कथं वार्तालापः अभवत्। मातुः पितुश्च नाम किम्, कुलस्य जातेर्वा किं नाम इत्यादिकम्। ततः परं राजा तं पुरुषद्वयं पृष्टवान्। भार्ययोः यानि उत्तराणि आसन् तानि यः उक्तवान् स एव सत्यः विमलः इति निश्चयो जातः। उत्तरम् दातुम् यः अशक्तः सः धूर्तः विमलः। अनन्तरम् सत्यः विमलः भार्याभ्यां सह राज्ञा सत्कृतः स्वगृहं यातः। धूर्तं च विमलम् राजा निर्वासितवान्।

**व्याकरणविमर्शः**

- लब्धोपायः - लब्धः प्राप्तः उपायः येन सः।
- महाराजबुद्धिः - महान् चासौ राजा चेति महाराजः इति कर्मधारयसमासः, महाराजस्य बुद्धिः इति महाराजबुद्धिः इति षष्ठीतत्पुरुषसमासः।



## पाठगतप्रश्नाः-१

१. अनङ्गस्य गतिः कीदृशी।
२. शुकः कां प्रति कथाम् उक्तवान्।
३. नगर्याः नाम किम्।
४. विशालनगर्याः नृपस्य किं नाम।
५. वणिजः नाम किम्।
६. वणिजः भार्ययोः नाम किम्।
७. धूर्तस्य नाम किम्।
८. धूर्तः कां देवतां पूजयित्वा वरं प्राप्तवान्।
९. कीदृशः अग्निः राज्ञः कुलं दहति।
१०. राज्ञः दुष्टनिग्रहः शिष्टपालनं च किं निमित्तकम्।
११. सुदर्शननामकराज्ञ राजधानी............।
१२. विमलस्य पत्नीद्वयं...........  ............... च।



१३. .......... नामकः धूर्तः अम्बिकां देवीम् आराध्य विमलरूपं ययाचे।

१४. धूर्तः भार्याद्वयं केन प्रकारेण सन्तोषितवान्।

१) भयेन

२) प्रेम्णा

३) बहुमानदानादिना

४) क्रूरस्वरेण

१५. ............ समुद्भूतः हुताशनः राज्ञः कुलं दग्ध्वा विनिवर्तते।

१६. राज्ञः शिष्टपालनं किमर्थम्।

१) प्रजानां प्रभुत्वप्राप्त्यर्थम्

२) शत्रुषु वीरत्वदर्शनार्थम्

३) स्वर्गप्राप्त्यर्थम्

४) भोगवस्तुलाभार्थम्

## ६.२) द्वितीयकथा- विषाङ्गनावृत्तम्

### भूमिका

जगति नैके गुरुजनानाम् उपदेशं न शृण्वन्ति। ते स्वकीयम् मतम् अवलम्ब्य परमतम् अनादृत्य च स्वजीवनम् निर्वहन्ति। तेन तेषां महती दुर्गतिः भवति। शुकसप्ततौ एकस्याम् कथायाम् ब्राह्मणः गुरूणाम् आज्ञाम् उल्लङ्घ्य विषकन्यया साकं विवाहं कृतवान्। तेन तस्य महत् दुःखम् जातम्। सेयम् कथा अत्र प्रस्तूयते।

## ६.२.१) द्वितीयकथा- विषाङ्गनावृत्तम् - मूलपाठः - विभागः - १

**शुकः- मां कृतावज्ञं कृत्वा मा गच्छ। यतो बालकादपि हितं वाक्यं ग्राह्यम्।**

**कृतावज्ञः पुरा देवि वृद्धवाक्यपराङ्मुखः।**
**पतितो ब्राह्मणोऽनर्थे विषकन्याविवाहने॥ १॥**

**प्रभावती पृच्छति- कथमेतत्।**

**शुकः- अस्ति सोमप्रभं नाम द्विजस्थानम्। तत्र विद्वान्धार्मिकः सोमशर्मा नाम विप्रः। तत्पुत्री रूपौदार्यगुणोपेता विषकन्येति विज्ञाताभूत्। तेन तां भयेन कोऽपि न विवाहयति। ततः सोमशर्मा वरार्थं भुवं पर्यटन् सम्प्राप्तो द्विजस्थानं जनस्थानं नाम। तत्र गोविन्दनामा ब्राह्मणो जडो निर्धनश्च। तस्मै कन्या प्रदत्ता। तेन सुहृदां निवारयतामपि कृतावज्ञेनोढ। सर्वरूपलावण्यगुणोपेता मोहिनी विषकन्या। सा विदग्धा गोविन्दस्तु मूर्खो लघुवयाश्च। ततश्च सा आत्मनो रूपलावण्ययौवनं शुशोच।**

**अविदग्धः पतिः स्त्रीणां प्रौढानां नायकोऽगुणी।**



**गुणिनां त्यागिनां स्तोको विभवश्चेति दुःखकृत्॥२॥**
**प्रावृट्समयप्रवासो यौवनदिवसे तथा च दारिद्र्यम्।**
**प्रथमस्नेहवियोगस्त्रीण्यपि गुरुकाणि दुःखानि॥३॥**
**अप्रस्तावे पठितं कण्ठविहीनञ्च गायनं गीतम्।**
**मा मा भणन्त्यां सुरतं त्रीण्यपि गुरुकाणि दुःखानि॥४॥**

### व्याख्या

शुकः कथयति - माम् कृतावज्ञं कृततिरस्कारम् कृत्वा मा गच्छ। यतः कारणं हि बालकात् लघोः अपि बालात् कदाचित् हितम् उपकारकम् वाक्यम् वचः ग्राह्यम् स्वीकार्यम्।

**कृतावज्ञः पुरा देवि वृद्धवाक्यपराङ्मुखः।**
**पतितो ब्राह्मणोऽनर्थे विषकन्याविवाहने॥ १॥**

### अन्वयः

देवि पुरा ब्राह्मणः विषकन्याविवाहने वृद्धवाक्यपराङ्मुखः कृतावज्ञः अनर्थे पतितः(१)॥

### अन्वयार्थः

हे देवि पुरा प्राचीनकाले ब्राह्मणः विषकन्याविवाहप्रसङ्गे वृद्धानां वाक्ये पराङ्मुखः तेषां कथनं न श्रुत्वा, न कृत्वा अवज्ञा येन सः कृतावज्ञः वृद्धानाम् अवज्ञां कृत्वा (विषकन्यां परिणीय) अनर्थे घोरसङ्कटे पतितः(१)॥

### तात्पर्यार्थः

देवि श्रूयताम् पुराकाले विषकन्यायाः विवाहप्रसङ्गे ज्येष्ठानाम् वाक्यम् अश्रुत्वा तेषाम् अवज्ञाम् कृत्वा च ब्राह्मणः महति सङ्कटे पतितः(१)॥

### व्याख्या

प्रभावती पृच्छति कथम् एतत् संवृत्तम् इति

शुकः कथयति - अस्ति सोमप्रभम् नाम द्विजस्थानम् ब्राह्मणस्थानम्। तत्र सोमप्रभाख्ये स्थाने विद्वान् ज्ञानी धार्मिकः सोमशर्मा नाम विप्रः ब्राह्मणः। तत्पुत्री तस्य पुत्री रूपौदार्यगुणोपेता रूपवती उदारा च विषकन्या इति विज्ञाता अभूत् अभवत्। तेन तस्मात् ताम् विषकन्याम् भयेन कोऽपि न विवाहयति। ततः सोमशर्मा वरार्थम् भुवम् पृथिवीम् पर्यटन् भ्रमन् सम्प्राप्तः समागतः द्विजस्थानम् जनस्थानम् नाम। अर्थात् जनस्थानाख्यः ग्रामः प्राप्तः। तत्र गोविन्दनामा ब्राह्मणः जडः निर्धनः धनशून्यः। तस्मै कन्या प्रदत्ता समर्पिता। तेन गोविन्देन सुहृदाम् मित्राणाम् निवारयताम् वारणम् कुर्वताम् कृतावज्ञेन कृततिरस्कारेण ऊढा विवाहिता सर्वरूपलावण्यगुणोपेता सर्वरूपलावण्यगुणयुक्ता मोहिनी विषकन्या। सा विदग्धा कामकलाप्रवीणा, गोविन्दस्तु मूर्खः लघुवयाः अल्पवयस्कः च। ततः च सा आत्मनः स्वस्य रूपलावण्ययौवनम् रूपम् च लावण्यम् च यौवनम् च शुशोच शोकम् कृतवती -

**अविदग्धः पतिः स्त्रीणां प्रौढानां नायकोऽगुणी।**

टिप्पणी



**गुणिनां त्यागिनां स्तोको विभवश्चेति दुःखकृत्॥२॥**

**अन्वयः**

स्त्रीणाम् पतिः अविदग्धः प्रौढानाम् नायकः अगुणी। त्यागिनाम् गुणिनाम् स्तोकः विभवः च इति दुःखकृत् (२)॥

**अन्वयार्थः**

स्त्रीणां कामकलानिपुणानां विदग्धानाम् पतिः अविदग्धः मूर्खः कामकलानभिज्ञः प्रौढानाम् कामकलाभ्यासे पूर्णतां गतानाम् स्त्रीणां नायकः अगुणी मूर्खः। त्यागिनां दानशीलानां गुणिनां स्तोकः अल्पः विभवः, इति दुःखं करोतीति दुःखकृत् (२)॥

**तात्पर्यार्थः**

कामकलादिषु निपुणानाम् स्त्रीणाम् मूर्खः पतिः, कामकलाभ्यासे प्रौढानाम् स्त्रीणाम् मूर्खः नायकः, दानशीलानाम् गुणिजनानाम् अल्पम् धनम् इति त्रयम् दुःखम् ददाति।

(२)॥

**प्रावृट्समयप्रवासो यौवनदिवसे तथा च दारिद्र्यम्।**
**प्रथमस्नेहवियोगस्त्रीण्यपि गुरुकाणि दुःखानि॥३॥**

**अन्वयः**

प्रावृट्समयप्रवासः यौवनदिवसे दारिद्र्यम्, तथा च प्रथमस्नेनहवियोगः इति त्रीण्यपि गुरुकाणि दुःखानि।(३)॥

**अन्वयार्थः**

प्रावृट्समयप्रवासः वर्षासु प्रवासः परदेशगमनं प्रियावियोगः यौवनदिवसे यौवनकाले दारिद्र्यम् धनाभावः येन भोगविलाससामग्री नोपलभ्यते, प्रथमस्नेहे एव प्रियवियोगः इति त्रीण्यपि महद् दुःखं कुर्वन्ति (३)॥

**तात्पर्यार्थः**

वर्षाकाले विदेशगमनम् , यौवने धनाभावः, प्रथमस्नेहे एव प्रियायाः वियोगः इति त्रयम् अत्यन्तम् दुःखम् करोति। (३)॥

**अप्रस्तावे पठितं कण्ठविहीनञ्च गायनं गीतम्।**
**मा मा भणन्त्यां सुरतं त्रीण्यपि गुरुकाणि दुःखानि॥४॥**

**अन्वयः**

अप्रस्तावे पठितम् कण्ठविहीनं गीतं गायनम् मा मा इति भणन्त्याम्  सुरतम् इति त्रीण्यपि गुरुकाणि दुःखानि। (४)॥



### अन्वयार्थः

अप्रस्तावे अनवसरे काव्यपठनम्, कण्ठविहीनं स्वरमाधुर्यरहितं गीतं गायनम्, मा मा इति निषेधं कुर्वन्त्यां नायिकायां सुरतम् इति त्रीण्यपि गुरुकाणि महान्ति दुःखानि (४)॥

### तात्पर्यार्थः

अनवसरे काव्यपठनम्, स्वरमाधुर्यरहितम् गीतगायनम्, मा मा इति निषेधं कुर्वन्त्याः नायिकाः सम्भोगः इति त्रयमपि महद् दुःखम् करोति।(४)॥

### सरलार्थः

अत्र आदौ शुकः वदति यत् कस्यापि अवज्ञा न करणीया। बालकः यदि हितवाक्यं वदति, तर्हि तस्यापि वाक्यं कदाचित् स्वीकार्यम् भवति। तत्र कथामुखेन तमेव आशयम् वक्तुम् आरब्धवान्। शुकः उक्तवान् यत् पुरा सोमप्रभम् इत्याख्यद्विजस्थानम् आसीत्। तत्र कश्चन विप्रः आसीत्। तस्य नाम आसीत् सोमशर्मा इति। तस्य कन्या रूपलावण्यवती आसीत्। सा विषकन्या इत्यभिधया विख्याता जाता। तस्माद् कोऽपि तां परिणेतुं न इच्छति स्म। सः सोमशर्मा बहुत्र अन्वेषणं कृत्वा जनस्थाननामकं द्विजस्थानं प्राप्तवान्। तत्र कश्चन मूर्खः निर्धनश्च ब्राह्मणः आसीत्। तस्य नाम आसीत् गोविन्दः इति। तस्य सर्वे बान्धवाः विवाहाय अनुमतिं न दत्तवन्तः, परन्तु तस्याः रूपेण मोहितः सन् स गोविन्दः तां परिणीतवान्। सा मोहिनीनाम्नी विषकन्या रूपसम्पन्ना कामकलायां निपुणा आसीत्, गोविन्दस्तु मूर्खः वयसापि कनिष्ठः आसीत्। तस्माद् तस्याः दुःखम् अभवत्। इदं प्रसिद्धं यत् - कस्यापि मूर्खस्य पत्नी यदि कामकलायां निपुणा भवति तदा तस्याः दुःखम् भवति। पुनः यदि कापि नायिका रूपगुणसम्पन्ना गुणवती च स्यात् तदा नायकः यदि गुणहीनः स्यात् तर्हि तस्य महद् दुःखं भवेत्। किञ्च यदि कस्यापि दानशीलस्य समीपे धनम् अल्पम् भवति चेत् तस्य दानशीलत्वं तस्मै दुःखं ददाति इति। यदा काव्यपठनस्य समयः न भवति तदा काव्यपठनम्, पुनः स्वरमाधुर्यादिकं विना एव गीतगायनम्, अपि च सम्भोगं कर्तुम् या नारी नेच्छति तया साकं सम्भोगः इति भाविदुःखदायकम् भवति।

### व्याकरणविमर्शः

- कृतावज्ञम् - कृता अवज्ञा तिरस्कारः यस्य तम्। मां कृतावज्ञं कृत्वा मम वचनं तिरस्कृत्य।
- द्विजस्थानम् - द्विजस्य ब्राह्मणस्य स्थानम् इति षष्ठीतत्पुरुषसमासः।
- रूपौदार्यगुणोपेता - रूपेण औदार्यादिगुणैश्च उपेता युक्ता।
- विज्ञाता - विख्याता
- विदग्धा - कामकलानिपुणा।
- निर्धनः - नास्ति धनम् यस्य सः निर्धनः इति बहुव्रीहिसमासः।
- कृतावज्ञेन – कृता अवज्ञा येन सः कृतावज्ञः कृततिरस्कारः इति बहुव्रीहिसमासः।
- सर्वरूपलावण्यगुणोपेता - सर्वरूपञ्च लावण्यगुणश्च सर्वरूपलावण्यगुणौ ताभ्याम् उपेता युक्ता इति सर्वरूपलावण्यगुणोपेता।

## ६.२.२) द्वितीयकथा- विषाङ्गनावृत्तम् - मूलपाठः - विभागः - २

**सान्यदा गोविन्दं पतिमित्यब्रवीत्- "मम पितुर्गेहात्समागताया बहूनि दिनानि सञ्जातानि। ततोऽहं त्वयैव सह गमिष्ये नान्यथा।" ततः शकटं मार्गयित्वा सभार्यकः स चलितः। यावत्प्रयाति तावत्पथि एको युवा वाग्मी सुरूपः शूरश्च विष्णुनामा ब्राह्मणो मिलितः। तस्य ब्राह्मणस्य तस्याश्चान्योन्यमनुरागः सञ्जातः। उक्तञ्च-**

**प्रीतिः स्याद्दर्शनाद्यैः प्रथममथ मनःसङ्गसङ्कल्पभावो।**
**निद्राछेदस्तनूत्वं वपुषि कलुषता चेन्द्रियाणां निवृत्तिः॥**
**ह्रीनाशोन्मादमूर्च्छामरणमिति जगद्यात्यवस्था दशैताः।**
**लग्नैर्यत्पुष्पबाणैः स जयति मदनः सन्निरस्तान्यधन्वी॥५॥**

### व्याख्या

सा अन्यदा अन्यस्मिन् दिवसे गोविन्दम् पतिम् भर्तारम् अब्रवीत् उक्तवती - मम पितुः गेहात् गृहात् समागतयाः आगतायाः बहूनि अनेकानि दिनानि सञ्जातानि। ततः अहम् त्वया एव सह गमिष्ये नान्यथा। गच्छामि चेत् त्वया (गोविन्देन) सहैव अन्यथा न गमिष्यामि इति भावः।

ततः शकटं बैलगाडी इति वाहनविशेषम् मार्गयित्वा अन्वेष्य सभार्यकः भार्यया सह स चलितः गतः। यावत् प्रयाति गच्छति तावत् पथि मार्गे कश्चन युवा युवकः वाग्मी सुवक्ता रूपवान् बलवान् च विष्णुः इत्याख्यः ब्राह्मणः मिलितः प्राप्तः। तस्य ब्राह्मणस्य तस्याः च अन्योन्यम् परस्परम् अनुरागः प्रेमभावः सञ्जातः। उक्तम् च – **प्रीतिः स्याद्दर्शनाद्यैः......सन्निरस्तान्यधन्वी** इति॥ (५)

### अन्वयः

सम्यक् निरस्तान्यधन्वी सन् सः मदनः कामदेवः जयति यत्पुष्पबाणैः प्रथमं दर्शनाद् यैः प्रीतिः स्यात् अथ अनन्तरम् मनःसङ्कल्पभावः, निद्राच्छेदः, वपुषि तनुत्वं, इन्द्रियाणां च कलुषता, निवृत्तिः, ह्रीनाशोन्मादमूर्च्छामरणम् इति एताः दश अवस्थाः जगत् याति इति (५)॥

### अन्वयार्थः

सम्यक् निरस्ताः पराजिताः अन्ये धन्विनः धनुर्धारिणः येन सः मदनः कामदेवः जयति सर्वोत्कर्षेण वर्तते, यस्य लग्नैः पुष्पबाणैः पुष्पशरैः प्रथमं दर्शनाद् यैः प्रियदर्शनादिभिः प्रीतिः प्रियविषयकानुरागः स्यात् अथ अनन्तरम् क्रमेण मनसि सङ्गस्य सङ्गतेः सङ्कल्पभावः, ततः निद्राच्छेदः निद्राभङ्गः, वपुषि शरीरे तनुत्वं दौर्बल्यम्, इन्द्रियाणां च कलुषता अर्थात् स्वस्वव्यापारेषु आलस्यम्, निवृत्तिः प्रियादतिरिक्तविषयेषु मनसो विरक्तिः, ह्रीनाशः लज्जायाः अभावः, उन्मादः, मूर्च्छा, मरणम् इति एताः दश अवस्थाः जगत् याति - सर्वे मर्त्याः पूर्वोक्ताः दश अवस्थाः प्राप्नुवन्ति (५)॥

### सरलार्थः

सा कदाचित् सर्वगुणोपेता सर्वोत्सववहिःकृता निर्धनं तं महामूर्खं गोविन्दम् पतिम् अब्रवीत् यत् बहुदिनेभ्यः प्राक् पितृगृहाद् आगता। तस्माद् सा तेन सहैव स्वपितुः सकाशं गन्तुम् इच्छति। तदा पत्न्याः वाक्यं श्रुत्वा सः गोविन्दः एकं शकटं नीत्वा तस्याः पितृगृहं प्रति गन्तुम् आरब्धवान्। तत्र पथि एकेन



ब्राह्मणेन सह तयोः मेलनम् अभवत्। सः विद्वान् रूपसम्पन्नः वीरश्चासीत्। तस्य नाम आसीत् विष्णुः इति। गमनसमये तेन विष्णुना सह तस्याः विषकन्यायाः अनुरागः अभवत्। अत्र श्लोके कामस्य दश दशाः वर्णिताः। यदा कोऽपि कस्याः कापि कस्य वा दर्शनेन कामबाणाघातं प्राप्नोति तदा तस्य तस्याः वा एताः दश दशाः भवन्ति। अत्र उच्यते यत् कामदेवः धनुर्धारिणां मध्ये श्रेष्ठः, यतो हि तस्य समक्षं कोऽपि स्वकामं स्ववशे स्थापयितुं न शक्नोति। अपि च तस्य पुष्पबाणेन आदौ प्रियदर्शनादिः अनुरागः उत्पद्यते, परं प्रियया सह मेलनस्य अभिलाष, निद्राभङ्गः, शारीरिकदौर्बल्यम्, इन्द्रियाणां कलुषता अर्थात् स्वस्वव्यापारेषु आलस्यम्, प्रियातिरिक्तविषयेषु मनसो विरक्तिः, लज्जायाः अभावः, उन्मत्तता, मूर्छा, मरणम् इत्येताः कामस्य दश दशाः।

**व्याकरणविमर्शः**

- अन्यदा - अन्यस्मिन् कस्मिंश्चित् दिने
- शकटम् - वाहनविशेषः (बैलगाडी, छकडा इति लोके)।
- वाग्मी - प्रशस्ता वाक् अस्य इति (वाच् ग्मिनि) वक्ता, वाक्पटुः।

## ६.२.३) द्वितीयकथा- विषाङ्गनावृत्तम् - मूलपाठः - विभागः - ३

**स पथिको दम्पत्योः पूगपत्रोच्चयं ददाति। इत्येवं ग्राम्यब्राह्मणो विष्णोर्विश्वस्तः आत्मनो निरोधसङ्गभयादुत्तीर्य तं गन्त्रीवाहमारोहयति। विष्णुना च पत्यौ वृक्षान्तरगते सा मोहिनी भुक्ता आत्मवशीकृता। तया चात्मीयं नाम गोत्रं कुलक्रमं चाज्ञापितः। पत्युश्च समागतस्य "त्वं चोरोऽसीति" गन्त्रारोहमं कुर्वतो निषेधः कृतः। विष्णुरपि तां गृहीत्वा गोविन्दं धर्षितवान्। ततस्तयोः केशाकेशि संवृत्तम्। गोविन्दस्तु विष्णुना विषकन्याप्रभावेण निर्जितः। ततस्तां गृहीत्वा विष्णुः स्वगृहं प्रतिचलितः। गोविन्दः पृष्ठस्थो मार्गासन्ने ग्रामे गत्वा फूत्कृतवान्-"अनेन चौरेण मम भार्या गृहीता। त्रायतां ताम्। मम शरणं भो जनाः"।**

**अथ ग्रामाधिपेन विष्णुर्मोहिनीयुतो धृतः। पृष्टेनोत्तरं दत्तं विष्णुना यथेयं मया परिणीता। मदीयां च भार्यामेष पथिको मार्गे दृष्ट्वा ग्रहिलो बभूव। गोविन्देनापि पृष्टेन इदमेवोत्तरितम्। ततो मन्त्री तयोरेकमेवोत्तरं श्रुत्वा जात्यादिकं पृष्ठवान्। त्रयमपि तु संवदति ततः कथं निश्चयः। इति शुकप्रश्नः।**

**व्याख्या**

स पथिकः दम्पत्योः पूगपत्रोच्चयम् पूगफलं ताम्बूलपत्रम् च ददाति। इत्येवम् ग्राम्यब्राह्मणः मूर्खब्राह्मणः विष्णोः उपरि विश्वस्तः सन् आत्मनः स्वस्य निरोधसङ्गभयात् निरोधः अवरोधः भार्या इत्यर्थः तस्मिन् सङ्गः अनुरागातिशयः तस्मात् भयम् तस्मात् इति निरोधभङ्गभयात् उत्तीर्य अवतरणं कृत्वा तम् विष्णुम् गन्त्रीवाहम् आरोहयति। विष्णुना च पत्यौ वृक्षान्तरगते सा मोहिनी भुक्ता आत्मवशीकृता स्वायत्तीकृता। विष्णुना तस्याः सम्भोगः कृतः इति भावः। तया मोहिन्या च आत्मीयं स्वकीयम् नाम गोत्रम् कुलक्रमम् च आज्ञापितः। पत्युः च समागतस्य त्वम् चोरोऽसि इति गन्त्र्यारोहणम्



वाहनारोहणम् कुर्वतः कुर्वाणस्य गोविन्दस्य निषेधः कृतः विहितः मोहिन्या इति शेषः। विष्णुः अपि ताम् गृहीत्वा आदाय गोविन्दम् धर्षितवान् आक्रम्य गोविन्दस्य अवमानम् कृतवान्। ततः अनन्तरम् तयोः मध्ये केशाकेशि संवृत्तम् केशेषु केशेषु गृहीत्वा युद्धम् प्रवृत्तम् इति भावः। गोविन्दस्तु विष्णुना विषकन्याप्रभावेण विषकन्यायाः प्रभावः तेन निर्जितः पराजितः। ततः ताम् गृहीत्वा विष्णुः स्वगृहम् प्रतिचलितः।

गोविन्दः पृष्ठस्थः पश्चात् गच्छन् मार्गासन्ने मार्गसमीपवर्तिनि ग्रामे गत्वा फूत्कृतवान् चित्कारम् कृतवान् यत् अनेन विष्णुना चौरेण मम भार्या पत्नी गृहीता स्वीकृता। त्रायताम् रक्षतु ताम् मोहिनीम्। मम शरणम् भो जनाः। हे जनाः भवन्तः एव मे शरणम् इति भावः।

अथ अनन्तरम् ग्रामाधिपेन ग्रामप्रमुखेन विष्णुः मोहिनीयुतः मोहिनीयुक्तः धृतः गृहीतः। तेन पृष्टेन जिज्ञासितेन उत्तरम् दत्तम् विष्णुना यथा इयम् मोहिनी मया परिणीता विवाहिता। मदीयाम् च भार्याम् पत्नीम् एषः पथिकः मार्गे दृष्ट्वा ग्रहिलः ग्रहीतुम् इच्छुः बभूव भवति स्म। गोविन्देनापि पृष्टेन इदम् एव उत्तरितम्। ततः मन्त्री तयोः एकम् एव उत्तरम् श्रुत्वा जात्यादिकम् पृष्टवान्। त्रयम् अपि तु संवदति सम्यक् वदति ततः तेन कथम् निश्चयः स्यात्। इति शुकप्रश्नः।

### सरलार्थः

सोऽपि विष्णुः ताभ्यां ताम्बुलादिकं ददाति स्म। सः ग्राम्यब्राह्मणः गोविन्दः तस्य वचनेन विश्वस्तः अभवत्। सः तं विष्णुं शकटस्य चालकरूपेण स्थापितवान्। ततः परं यदा गोविन्दः अन्यं वृक्षं प्रति गतवान् तदा तेन विष्णुना सा विषकन्या वशीकृता। सा अपि स्वस्याः नाम कुलादिपरिचयञ्च तस्मै उक्तवान्। ततः परं यदा गोविन्दः तत्र आगतवान् तदा सः चौरः इति गोविन्दं प्रति विष्णुः उक्तवान्, तस्य अवमानम् च कृतवान्। परं तयोः मध्ये विवादः संवृत्तः। किन्तु विषकन्याप्रभावेण विष्णुः जितवान्। ततः परं विष्णुः तां स्वीकृत्य स्वगृहं प्रति गन्तुम् आरब्धवान्।

गोविन्दः समीपस्थं ग्रामं गत्वा उक्तवान् यत् चौरेण तस्य पत्नी गृहीता। तस्याः रक्षणं कुरु इति। तदा ग्रामाधिपः मोहिनीसमेतं विष्णुं गृहीतवान्। ततः परं विष्णुः उक्तवान् यत् - मम भार्याम् एषः आगत्य बलात् मम सकाशात् गृहीतवान्। गोविन्दः अपि उक्तवान् यत् तस्य सहधर्मिनीं स्वीकृत्य सः गन्तुम् उद्यतः इति। तदा अस्याः समस्यायाः समाधानाय मन्त्री आहूतः। मन्त्री यदा जात्यादिकं पृष्टवान् तदा ते सत्यमेव उक्तवन्तः। तदा समाधानं केन प्रकारेण भवेत् इति शुकस्य प्रश्नः आसीत्।

#### व्याकरणविमर्शः

- दम्पत्योः - जाया च पतिश्च इति दम्पती तयोः।
- पूगपत्रोच्चयम् - पूगम् पूगफलम् पत्रम् ताम्बूलपत्रम् तयोः उच्चयः अतिशयः तम्।
- निरोघसङ्गभयात् - निरोधः अवरोधः भार्या इत्यर्थे तस्मिन् सङ्गः अनुरागातिशयः आसक्तिः वा तस्मात् भयम् तस्मात्। अयम् भावः- अयं पदातिः विष्णुर्नाम सद्ब्राह्मणः गन्त्रीम् आरूढं मां दृष्ट्वा 'भार्यायाम् अस्य अनुरागातिशयः' इति चिन्तयेत् इति भयात्।
- गोविन्दम् - धर्षितवान् आक्रम्य गोविन्दस्य अवमानं कृतवाान्।
- केशाकेशि - केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम् इति।



- ग्रहिलः - जिघृक्षुः।

## ६.२.४) द्वितीयकथा- विषाङ्गनावृत्तम् - मूलपाठः - विभागः - ४

**ततस्तया पृष्टः शुकः आह- मन्त्रिणोक्तम्- "कियन्ति दिनानि सङ्गमस्य युष्माकं प्रयाणे"। तैरुक्तम्- "कल्ये भोजनानन्तरं संवृत्तः समागमः"। ततो मन्त्रिणा ब्राह्मणौ पृथक्पृथक्पृष्टौ- "किमनया कल्ये भोजनवेलायां भुक्तम् "। यच्च तया भुक्तं तद्गोविन्दो जानाति इतरस्तु न। ततः स विडम्बितः सचिवेन। गोविन्दः शिक्षितः। धिगिमां ब्राह्मणीं परत्रेह च दुःखदां मुञ्च शीघ्रम्। उक्तञ्च-**

**वैद्यं पानरतं नटं कुपठितं मूर्खं परिव्राजकम्।**
**योधं कापुरुषं विटं विवयसं स्वाध्यायहीनं द्विजम्॥**
**राज्यं बालनरेन्द्रमन्त्रिरहितं मित्रं छलान्वेषि च।**
**भार्या यौवनगर्वितां पररतां मुञ्चन्ति ये पण्डिताः॥६॥**
**तथापि कामिनीलुब्धो धिक्कृतः साधुभिस्तदा।**
**तामेवादाय चलितस्तत्कृते निहतः पथि॥७॥**
**तद्देवि यः करोत्येवमवज्ञां वृद्धशिक्षितः।**
**स पराभवमाप्नोति गोविन्दो ब्राह्मणो यथा॥८॥**

**इति कथां श्रुत्वा प्रभावती सुप्ता।।**

**व्याख्या**

ततः तया पृष्टः शुकः आह उक्तवान् मन्त्रिणोक्तम् मन्त्रिणा उक्तम् - कियन्ति दिनानि सङ्गमस्य युष्माकं प्रयाणे। भवताम् यात्रा कदा आरब्धा इति भावः। तैः सर्वैः उक्तम् - कल्ये प्रभातसमये भोजनानन्तरं भोजनात् अनन्तरम् परम् संवृत्तः समागमः। ततः मन्त्रिणा ब्राह्मणौ पृथक् पृथक् पृष्टौ - किम् अनया मोहिन्या कल्ये प्रभातसमये भोजनवेलायां भोजनकाले भुक्तम् खादितम्। यच्च तया भुक्तं तद्गोविन्दो जानाति इतरस्तु न। ततः स विडम्बितः तिरस्कृतः सचिवेन। गोविन्दः शिक्षितः उपदिष्टः। धिक् इमां ब्राह्मणीं परत्र परस्मिन् लोके इह अस्मिन् लोके च दुःखदां मुञ्च त्यज शीघ्रम्। उक्तञ्च -

**वैद्यं पानरतं नटं कुपठितं मूर्खं परिव्राजकम्।**
**योधं कापुरुषं विटं विवयसं स्वाध्यायहीनं द्विजम्॥**
**राज्यं बालनरेन्द्रमन्त्रिरहितं मित्रं छलान्वेषि च।**
**भार्या यौवनगर्वितां पररतां मुञ्चन्ति ये पण्डिताः॥६॥**

**अन्वयः**

ये पण्डिताः ते पानगतं वैद्यं कुपठितम् नटं मूर्खं परिव्राजकं कापुरुषं योधं विवयसं वृद्धं विटं स्वाध्यायहीनम् द्विजं बालनरेन्द्रमन्त्रिरहितं राज्यं छलान्वेषि मित्रं यौवनगर्विताम् पररतां भार्यां पत्नीं च मुञ्चन्ति। (६)॥



### अन्वयार्थः

ये पण्डिताः बुद्धिमन्तः ते पानगतं मद्यपं वैद्यं कुत्सितं पठितं कथोपकथनं यस्य तं नटं नाटकस्याभिनयपात्रं, मूर्खं परिव्राजकं संन्यासिनं कापुरुषं भीरुं योधं योद्धारम्, विगतं वयः यस्य तं विवयसं वृद्धं विटं वेश्यारतं पुरुषं, स्वाध्यायः वेदाध्ययनं तेन हीनं द्विजं विप्रं, बालः नरेन्द्रः भूपः यस्य तत् मन्त्रिभिः रहितं विहीनं राज्यं, छलम् अन्वेष्टुं शीलम् अस्य इति छलान्वेषि कपटव्यवहारि मित्रं, यौवनेन गर्विताम् यौवनोन्मादशालिनीं पररतां परपुरुषेषु आसक्तां भार्यां पत्नीं च मुञ्चन्ति परित्यजन्ति (६)॥

### तात्पर्यार्थः

श्लोकेऽस्मिन् पण्डिताः कान् परित्यजन्ति इत्युच्यते। ते च पण्डिताः - मद्यपायिनम् चिकित्सकम्, कुपठितम् नटम्, मूर्खम् सन्यासिनम्, भीरुम् योद्धारम्, वेश्यालयं गच्छन्तम् वृद्धम्, स्वाध्यायरहितम् ब्राह्मणम्, बालकनृपवत् (यस्मिन् राज्ये नृपः बालकः) मन्त्रिशून्यम् च राज्यम्, कपटव्यवहारिणम् बन्धुम्, यौवनगर्विताम् परपुरुषेषु गच्छन्तीम् च परित्यजन्ति इति भावः।

**तथापि कामिनीलुब्धो धिक्कृतः साधुभिस्तदा।**
**तामेवादाय चलितस्तत्कृते निहतः पथि॥७॥**

### अन्वयः

तथापि तदा कामिनीलुब्धः साधुभिः धिक्कृतः तामेव आदाय चलितः पथि तत्कृते निहतः। (७)॥

### अन्वयार्थः

तथापि सचिवेन शिक्षितोऽपि तदा सः कामिन्यां लुब्धः, साधुभिः सद्भिः धिक्कृतः गोविन्दः तामेव मोहिनीम् आदाय गृहीत्वा चलितः प्रस्थितः पथि मार्गे तस्याः कृते निहतः अभवत्। (७)॥

### तात्पर्यार्थः

कामिन्याम् प्रलुब्धः गोविन्दः सचिवादिभिः उपदिष्टः। किञ्च साधुभिः तिरस्कृतः। तथापि कामवशात् ताम् एव स्वीकृत्य गतः। अन्ते च मार्गे तस्य नाशः जातः। (७)॥

**तद्देवि यः करोत्येवमवज्ञां वृद्धशिक्षितः।**
**स पराभवमाप्नोति गोविन्दो ब्राह्मणो यथा॥८॥**

### अन्वयः

तत् हे देवि वृद्धशिक्षितः यः एवम् अवज्ञां करोति सः गोविन्दः ब्राह्मणः यथा पराभवं आप्नोति। (८)॥



### अन्वयार्थः

तत् तस्मात् हे देवि वृद्धशिक्षितः वृद्धैः गुरुजनैः शिक्षितः उपदिष्टः यः एवम् इत्थम् अवज्ञाम् अवमानम् करोति उपदेशम् अनुसृत्य न कार्यं करोति सः गोविन्दः ब्राह्मणः इव पराभवं नाशं गच्छति। (८)॥

### तात्पर्यार्थः

किम् कर्तव्यम् किम् अकर्तव्यम् इति गुरुजनैः बोधितेऽपि यः न शृणोति तस्य गोविन्दब्राह्मणवत् नाशो भवति। (८)॥

### सरलार्थः

इति पृष्टे सः शुकः अवदत् यत् - तदा मन्त्री उक्तवान् - भवन्तः कति दिनानि व्याप्य साकल्येन गच्छन्तः आसन् इति। तदा ते उक्तवन्तः यत् - प्रातः भोजनान्ते समागमः अभवत्। ततः परं मन्त्री गोविन्दं विष्णुं च पृथक्तया पृष्टवान् - सा मोहिनी प्रातः किं भुक्तवती। गोविन्दः जानाति स्म सा किं खादितवान्। सः सत्यम् उक्तवान्। विष्णुः मिथ्या उक्तवान्। तदा मन्त्री तं विष्णुं दण्डितवान् तस्याः विषकन्यायाः च तिरस्कारं कृतवान्। अत्र श्लोके पण्डिताः कान् विषयान् कान् जनान् च परित्यजन्ति इत्यस्मिन् विषये उक्तम्।

यः वैद्यः मद्यपानं करोति तं पण्डिताः त्यजन्ति। यः नटः सम्यक्तया कथोपकथनं न करोति, कुत्सितं भाषते तं पण्डिताः त्यजन्ति। यः सन्न्यासी मूर्खः, यः योद्धा कापुरुषः, यः पुरुषः वृद्धः किन्तु वेश्यागृहं गच्छति अर्थात् यस्य वृद्धत्वे सत्यपि कामशान्तिः न जाता, यो द्विजः वेदादिस्वाध्यायं न करोति, यस्मिन् राज्ये बालकः राजा किञ्च मन्त्री नास्ति तादृशं राज्यम्, यः सखा स्वार्थं सर्वदा पश्यति किञ्च कपटस्वभावसम्पन्नः, या भार्या यौवनोन्मत्ता स्वस्वामिनम् अवज्ञाय परपुरुषं प्रति गच्छति च इत्येतान् पण्डिताः त्यजन्ति। अनेन श्लोकेन इयं शिक्षा प्राप्यते यत् एतैः साकं कदापि बन्धुत्वं न कर्तव्यम् इति इमां कथां श्रुत्वा प्रभावती सुप्ता शयनं कृतवती।

#### व्याकरणविमर्शः

- कल्ये - प्रभातसमये।
- विडम्बितः - अवमानितः।
- शिक्षितः - उपदिष्टः।



## पाठगतप्रश्नाः - २

१७. विषकन्यायाः द्विजस्थानस्य नाम किम्।

१८. विषकन्यायाः पितुः नाम किम्।

१९. सोमशर्मणः कन्यायाः नाम किम्।



२०. विषकन्यायाः पत्युः निवासः क्व।

२१. मोहिन्याः पत्युः नाम किम्।

२२. दानशीलस्य किं दुःखदायकम्।

२३. मूर्खस्य पत्युः कीदृशी पत्नी दुःखदायिका।

२४. शूरस्य ब्राह्मणस्य नाम किम्।

२५. विष्णुः ताभ्यां किं दत्तवान्।

२६. कदा तेषां समागमः अभवत्।

२७. ............ अपि हितं वाक्यं ग्राह्यम्।

२८. पतितः .......... अनर्थे विषकन्याविवाहने।

२९. सोमशर्मायाः वासस्थानस्य नाम – (ब्रह्मस्थलम् / जनस्थानम् / जनपुरम् / सोमप्रभम्)

३०. गोविन्दस्य किं नासीत् - (मूर्खता / निर्बुद्धिता / विद्वत्ता / उपस्थिता बुद्धिः)

३१. विषकन्या किम् आधारीकृत्य शुशोच (विद्याबलम् / पितुः धनसम्पत्तिम् / दाम्भिकत्वम् / आत्मनः रूपलावण्ययौवनम्)

३२. ........... पतिः स्त्रीणाम् ( सुरूपः / अविदग्धः / विनम्रः / चतुरः)

३३. गुणिनां त्यागिनां ......... विभवश्चेति दुःखकृत्।

## ६.३) तृतीयकथा - बुद्धिः सर्वत्र ज्येयसी

### प्रस्तावना

बुद्धिर्यस्य बलं तस्य, निर्बुद्धेस्तु कुतो बलम्। अर्थात् यस्य बुद्धिः वर्तते सः अत्यन्तसङ्कटात् अपि आत्मानं रक्षयितुं शक्नोति। तस्मात् यः बुद्धिमान् स एव बलवान्। यस्य बुद्धिः नास्ति सः एव वास्तवेन दुर्बलः। अत्र प्रसङ्गे शुकसप्ततिः इत्याख्ये ग्रन्थे प्रभावतेः पतिः वाणिज्यार्थं दूरदेशं गतः। तदा तां कथामुखेन तस्याः कालयापनाय शुकः कथां श्रावयति स्म। बुद्धिमती स्त्री केन प्रकारेण आत्मनं रक्षितवती इति कथयितुं शुकः इमां कथां अश्रावयत्।

### ६.३.१) तृतीयकथा- बुद्धिः सर्वत्र ज्येयसी - मूलपाठः - विभागः - १

**हसन्नाह शुको याहि यदि कर्तुं त्वमुत्तरम्।**
**वेत्सि यथा श्रियादेव्या नूपुरेऽपहृते कृतम्॥१॥**

**अन्वयः**

शुकः हसन् आह नूपुरे अपहृते यथा श्रियादेव्या कृतम् (तथैव) त्वम् उत्तरम् कर्तुम् यदि वेत्सि (तर्हि) याहि। (१)॥



**अन्वयार्थः**

शुकः हसन् वदति यथा नूपुरे अपहृते परपुरुषसङ्गतिकाले सुप्तायाः तस्याः श्वशुरेण नूपुरे अपहृते सति श्रियादेव्या कृतम् (तथैव) त्वम् उत्तरं प्रतिकारम् कर्तुं विधातुम् यदि वेत्सि जानासि (तर्हि) याहि। (१)॥

**सरलार्थः**

वणिक् यदा देशान्तरं वाणिज्यार्थम् अगमत् तदा तस्य पत्नी प्रभावती एकाकिनी आसीत्। तदा आसीत् वसन्तकालः। तस्मात् रमणसुखं प्राप्तुं तस्याः इच्छा सञ्जाता। तत् शमयितुं शुकः अवदत् यत् श्रियादेवी यथा परपुरुषसङ्गं कृत्वापि स्वबुद्धिबलेन आत्मानं रक्षितवती तथा यदि त्वम् (प्रभावती) अपि कर्तुं शक्नोषि तर्हि परपुरुषम् गन्तुम् अर्हसि इति। ततः परं सः शुकः कथाम् आरब्धवान्।

## ६.३.२) तृतीयकथा- बुद्धिः सर्वत्र ज्येयसी - मूलपाठः - विभागः - २

**अस्ति शालिपुरं नाम नगरम्। तत्र शालिगो वणिक्। तत्पत्नी जयिका। तयोः सुतो गुणाकरो नामाभूत्। तद्भार्या श्रियादेवी। सा चापरेण सुबुद्धिनाम्ना वणिजा सह रमते। ततो लोकापवादेऽपि संजातेऽनुरक्तस्तदीयः पतिर्न किमपि कर्णे करोति। उक्तञ्च**

**रक्ताः पृच्छन्ति गुणान् दोषान् पृच्छन्ति ये विरक्ताः।**
**मध्यस्थाः पुनः पुरुषा दोषानपि गुणानपि पृच्छन्ति॥२॥**

**किञ्च**

**महिलारक्ताः पुरुषाश्छेका अपि न सम्भरन्ति आत्मानम्।**
**इतरे पुनस्तरुणीनां पुरुषाः सलिलमेव हस्तगतम्॥३॥**

**व्याख्या**

शालिपुरं नाम नगरं प्रदेशः अस्ति वर्तते। तत्र शालिगः इत्यभिधः वणिक् वैश्यः तिष्ठति। तस्य पत्नी भार्या जयिका। तयोः सुतः पुत्रः गुणाकरः इति नामकः। तस्य पत्नी श्रियादेवी। सा अपरेण अन्येन सुबुद्धिनाम्ना वणिजा वैश्येन सह रमते तिष्ठति। ततः लोकापवादे लोकनिन्दासत्वे अपि, अनुरक्तः श्रियादेव्यां आसक्तः, तदीयः तस्याः पतिः भर्ता, न किमपि कर्णे करोति - न शृणोति - लोकापवादे न विश्वसिति इत्यर्थः।

**रक्ताः पृच्छन्ति गुणान् दोषान् पृच्छन्ति ये विरक्ताः।**
**मध्यस्थाः पुनः पुरुषा दोषानपि गुणानपि पृच्छन्ति॥२॥**

**अन्वयः**

रक्ताः गुणान् पृच्छन्ति विरक्ताः दोषान् पृच्छन्ति। मध्यस्थाः पुरुषाः पुनः गुणान् अपि दोषान् अपि पृच्छन्ति। (२)॥



**अन्वयार्थः**

रक्ताः इति- रक्ताः प्रीतिमन्तः गुणान् पृच्छन्ति वाञ्छन्ति इत्यर्थः - तेषां गुणैरेव प्रयोजनम्। विरक्ताः प्रीतिरहिताः दोषान् पृच्छन्ति, तेषां दोषैरेव प्रयोजनम्। मध्यस्थाः पुरुषाः गुणान् दोषान् चापि पृच्छन्ति, तेषां गुणैः दोषैरपि च प्रयोजनम्। (२)॥

**तात्पर्यार्थः**

ये तावत् प्रीतिमन्तः जनाः सन्ति ते गुणान् इच्छन्ति। प्रीतिरहिताः जनाः दोषान् एव वाञ्छन्ति। मध्यस्थैः पुरुषैः तु उभयमपि इष्यते। (२)॥

**महिलारक्ताः पुरुषाश्छेका अपि न सम्भरन्ति आत्मानम्।**
**इतरे पुनस्तरुणीनां पुरुषाः सलिलमेव हस्तगतम्॥३॥**

**अन्वयः**

महिलारक्ताः छेकाः पुरुषाः अपि न आत्मानं संभरन्ति। पुनः इतरे पुरुषाः तरुणीनां हस्तगतं सलिलमेव। (३)॥

**अन्वयार्थः**

महिलासु स्त्रीषु रक्ताः अनुरागशालिनः छेकाः नागरिकाः निपुणाः इत्यर्थः अपि न आत्मानं संभरन्ति अधिकुर्वन्ति, आत्मनः उपरि तेषाम् अधिकारो न भवति अपि तु स्त्रीणामेवेति भावः। इतरे पुनः पुरुषाः तरुणीनां स्त्रीणां हस्तगतं जलमेव, यथा हस्तगतं जलं शनैः शनैः स्रवन् अञ्जलेः दूरं याति तथैव ते पुरुषाः स्त्रीणाम् हस्तेषु न तिष्ठन्ति अपि तु स्वाधीनाः भवन्तीति भावः। (३)॥

**तात्पर्यार्थः**

पुरुषेषु केचित् महिलासु रक्ताः भवन्ति तेषाम् आत्मनः उपरि अधिकारो नास्ति। पुनः अपरे केचित् पुरुषाः सन्ति ये तावत् स्त्रीणाम् हस्तेषु न तिष्ठन्ति अपितु स्वाधीनाः भवन्तीति भावः। (३)॥

**सरलार्थः**

पुरा शालिपुरं नाम एकं नगरम् आसीत्। तत्र एकः वणिक् निवसति स्म। तस्य नाम आसीत् शालिगः इति। तस्य पत्न्याः नाम आसीत् जयिका इति। तस्य पुत्रस्य नाम आसीत् गुणाकरः इति, पुत्रवध्वाः च श्रियादेवी इति। सा श्रियादेवी सुबुद्धिः इति नामके अन्ये पुरुषे आसक्ता आसीत्। सर्वे अमूं वृत्तान्तं कथयन्ति स्म। परन्तु गुणाकरः स्वस्य पत्नीम् अत्यन्तं प्रीणाति स्म। तस्मात् लोकानां वार्तां कामपि न शृणोति स्म। एवं कथयन्ति विद्वांसः उच्यते यत् रक्ताः प्रीतिमन्तः, गुणान् पृच्छन्ति गुणान् एव गृह्णन्ति, विरक्ताः प्रीतिरहिताः, दोषान् पृच्छन्ति दोषाणाम् आविष्कारं कुर्वन्ति, मध्यस्थाः प्रीतिद्वेषरहिताः, पुरुषाः जनाः, दोषानपि गुणानपि सर्वविधं यथायथं पृच्छन्ति गृह्णन्ति।

## ६.३.३) तृतीयकथा- बुद्धिः सर्वत्र ज्येयसी- मूलपाठः- विभागः- ३

**अन्यदा सा श्वशुरेण नरान्तरसहिता सुप्ता दृष्टा। ततश्चरणान्नूपुरं श्वशुरेण चोत्तारितं तया च ज्ञातम्। ततः सा तं जारं प्रस्थाप्य भर्तारं तत्रानीय तेन सह सुप्ता। निद्रान्तरे च पतिरुत्थापितः**



**कथितञ्च - त्वदीयेन पित्रा नूपुरमस्मत् पादाद् अवतार्य गृहीतम्। एवंविधं च पातकं क्वापि न दृष्टं यद्वधूपादात् श्वशुरो नूपुरं गृह्णाति। तेनोक्तं - प्रातः पितुः सकाशात् स्वयमर्पयिष्यामि। तेन च गुणाकरेण पितरं निर्भर्त्स्य तत्सकाशान्नूपुरं याचितम्। पित्रा चोक्तं यदियं परपुरुषेण सह सुप्ता दृष्टा अतो मया नूपुरं गृहीतम्।**

**व्याख्या**

अन्यदा अन्यस्मिन् दिवसे, सा श्रियादेवी, श्वशुरेण स्वस्याः पत्युः पित्रा, सह सुप्ता दृष्टा शयनयुक्ता अवलोकिता। ततः चरणात् नूपुरं श्वशुरेण आर्येण, चोत्तारितं स्वीकृतम् इति तया श्रियादेव्या ज्ञातम् अवलोकितम्। ततः सा जारं परपुरुषं प्रस्थाप्य सम्प्रेष्य, भर्तारं पतिं तत्र आनीय, तेन सह सुप्ता तस्य पार्श्वे सुप्तवती। निद्रान्ते निद्रायाः अवसाने, तया पत्न्या, पतिः भर्ता उत्थापितः जागरितः, कथितञ्च उक्तश्च, त्वदीयेन तव, पित्रा जनकेन अस्मत्पादात् मम पादात् नूपुरं गृहीतं स्वीकृतम्। एवंविधम् इत्थं पातकं पापकर्म क्वापि कुत्रापि, न दृष्टं नावलोकितम्, यत् वधूपादात् पुत्रवध्वाः चरणात् श्वशूरः भर्तुः पिता, नूपुरं गृह्णाति स्वीकरोति। तेनोक्तं प्रातः पितुः सकाशात् स्वयम् अर्पयिष्यामि कथयिष्यामि। तेन गुणाकरेण पितरं निर्भर्त्स्य भर्त्सनां कृत्वा तत्सकाशात् नूपुरं याचितं प्रार्थितम्। पित्रा उक्तम् यत् इयं श्रियादेवी, परपुरुषेण सह सुप्ता दृष्टा, अतः तस्मात् मया नूपुरं गृहीतं स्वीकृतम्।

**सरलार्थः**

एकस्मिन् दिवसे सा श्रियादेवी तेन सुबुद्धिना परपुरुषेण सह शयनं करोति। तदा तस्याः श्वशुरः तां तथाभूतं दृष्टवान्। सः श्वशूरः तस्याः पादात् नूपुरं स्वीकृतवान् स्वपुत्रं प्रति कथयितुम्। श्रियादेवी एतत् सर्वं ज्ञातवती। सा सुबुद्धिं अन्यत्र प्रेषयित्वा तत्र स्वस्याः पतिम् आनीय शयनं कृतवती। निद्रायाः अन्ते सा तं पतिम् अकथयत् यत् तस्याः श्वशुरः पादात् नूपुरं स्वीकृतवान् एतादृशं पापकार्यं सा कदापि न दृष्टवती इति। तदा पतिः उक्तवान् यत् सः प्रातः पितरं वदिष्यति इति। ततः परस्मिन् प्रातः सः पितरं भर्त्सयित्वा तस्य सकाशात् नूपुरं याचितवान्। तदा तस्य पिता उक्तवान् यत् सः रात्रौ तां श्रियादेवीं अन्येन पुरुषेण सह शयनं कुर्वन्तीं दृष्टवान्। तस्मात् तस्याः पादात् नूपुरं स्वीकृतवान् इति।

**व्याकरणविमर्शः**

- उत्तारितम् - गृहीतम्।
- प्रस्थाप्य - सम्प्रेष्य।

## ६.३.४) तृतीयकथा- बुद्धिः सर्वत्र ज्येयसी- मूलपाठः- विभागः- ४

**तयोक्तम् - त्वत्पुत्रेण सह सुप्ताहमासम्। इत्यर्थे दिव्यं करोमि। अत्रैव ग्रामे उत्तरस्यां दिशि यक्षोऽस्ति। तस्य जङ्घान्तरान्निर्गमिष्यामि। यः कश्चित्सत्यो भवति स जङ्घयोरन्तरान्निष्क्राम्यतीति प्रसिद्धम्। एवं श्वशुरेण चाङ्गीकृते सा कुलटा सति दिने जारस्य गृहे गत्वा तमुवाच - भो कान्त! प्रातरहं दिव्यार्थं यक्षस्य जङ्घान्तरान्निर्गमिष्यामि। त्वया तत्र समागत्य वातूलत्वमाश्रित्य मम कण्ठग्रहो विधेयः। तेन च तथोक्ते सा स्वगृहमाजगाम।**



### व्याख्या

तया श्रियादेव्या, उक्तं यत् त्वत्पुत्रेण गुणाकरेण सह अहं सुप्ता शयनरता, आसम्। इत्यर्थे अस्मिन् प्रसङ्गे प्रमाणं दातुं, दिव्यं देवतायाः कार्यं, करोमि प्रमाणरूपेण स्थापयामि। अत्रैव समीपे एव ग्रामे, उत्तरस्यां दिशि उदिच्यां दिग्भागे, यक्षः तथा नामकः देवः, अस्ति तिष्ठति। तस्य जङ्घात् जङ्घप्रदेशात् निर्गमिष्यामि बहिः आगमिष्यामि। यः कश्चित् सत्यः भवति सत्याचरणशाली भवति, सः जङ्घयोः अन्तरात् मध्यस्थानात्, निक्राम्यति इति प्रसिद्धम्। एवं श्वशुरेण अङ्गीकृते स्वीकृते सा कुलटा व्यभिचारिणी, दिने दिवसे, जारस्य परपुरुषस्य सुबुद्धेः, गृहं गत्वा तम् उवाच यत् भो कान्त, प्रिय, प्रातः अहं दिव्यार्थं देवतायाः प्रामाण्यं स्वीकर्तुं, यक्षस्य जङ्घान्तरान्निर्गमिष्यामि बहिः आगमिष्यामि। त्वया तत्र समागत्य उपस्थितः भूत्वा, वातुलत्वम् आश्रित्य उन्मादस्य दशां स्वीकृत्य मम कण्ठग्रहः कण्ठालिङ्गनम्, विधेयः करणीयः इति। तेन च तथोक्ते तथा कथिते सा स्वगृहम् आजगाम आगतवती।

### सरलार्थः

स्वस्याः भर्तुः पितुः वाक्यं श्रुत्वा तस्य विरोधं कृत्वा सा कथितवती यत् सा गुणाकरेण सह एव शयनं कृतवती इति। तदा प्रमाणं दातुं सा उक्तवती यत् तस्मिन् ग्रामे एकं यक्षमन्दिरं वर्तते। तत्र यः सत्यं वदति सः तस्य यक्षस्य जङ्घयोः अन्तरात् बहिः आगन्तुं शक्नोति। तथा अहं करिष्यामि इति सा कथितवती। तदा श्वशुरः अपि अङ्गीकृतवान्। ततः परं सा परपुरुषस्य गृहं गत्वा उक्तवती यत् सः प्रातः उन्मादस्य भानं कृत्वा यदा सा मन्दिरं प्रति गमिष्यति तदा तस्याः कण्ठस्य आलिङ्गनं करिष्यति इति। एवं तस्मै सुबुद्धिने उक्त्वा सा स्वकीयगृहम् आगतवती।

### व्याकरणविमर्शः

- दिव्यम् - दैवी परीक्षा, यतः पुरा अपराधा सदोषः निर्दोषो वेति निर्णीयते स्म।
- वातूलत्वमाश्रित्य - वातूलः उन्मत्तः तस्य भावं गृहीत्वा।

## ६.३.५) तृतीयकथा- बुद्धिः सर्वत्र ज्येयसी- मूलपाठः- विभागः- ५

**अथ प्रातः समस्तमहाजनं मेलयित्वा पुष्पाक्षतादिकमादय यक्षायतने गत्वा समीपसरसि स्नानं कृत्वा यक्षपूजार्थं समागच्छन्त्यास्तस्याः पूर्वसङ्केतितो जारो ग्रहिलीभूतस्तत्कण्ठे निजबाहुद्वयं योजयामास। तत आः किमेतदित्यभिधाय सा पुनः स्नानार्थं ययौ। सोऽपि ग्रहिलो लोकैः कण्ठे गृहीत्वा तस्मात्प्रदेशाद्दूरीकृतः। सापि स्नानं कृत्वा यक्षसमीपमागत्य पुष्पगन्धाद्यैरभ्यर्च्य सर्वलोकानां शृण्वतामुवाच - भो भगवन्यक्ष! निजभर्तारमेनं च ग्रहिलं विना यदि अन्यपुरुषः स्पृशति कदाचन मां तदा तव जङ्घाभ्यां सकाशान्मम निष्क्रमणं मा भवतु इत्यभिधाय सर्वलोकसमक्षमेव जङ्घयोर्मध्ये प्रविश्य निष्क्रान्ता। यक्षोऽपि तद्बुद्धिं मनसि श्लाघमान एव स्थितः। सापि सतीति समस्तलोकैः पूजिता स्वभवनं जगाम। एवं चेत्श्रियादेवीवत्कर्तुं जानासि तदा व्रज। इति श्रुत्वा प्रभावती सुप्ता।**



### व्याख्या

अथ प्रातः परस्मिन् दिवसे, समस्तमहाजनं मेलयित्वा सर्वान् जनान् एकत्रीकृत्य, पुष्पाक्षतादिकं आदाय स्वीकृत्य, यक्षायतने गत्वा यक्षमन्दिरं प्रविश्य, समीपसरसि समीपस्थायां पुष्परिण्यां, स्नानं कृत्वा यक्षपूजार्थं समागच्छन्त्याः प्रविशन्त्याः,तस्याः पूर्वसङ्केतितः पूर्वोक्तः जारः परपुरुषः, ग्रहिलीभूत उन्मत्तः भूत्वा, तत्कण्ठे निजबाहुद्वयं हस्तयुगलं, योजयामास योजितवान्। ततः आः किमेतद् इति अभिधाय इत्थम् उक्त्वा, सा पुनः स्नानार्थं ययौ अगच्छत्। सः अपि ग्रहीलः आत्मानम् उन्मत्तं प्रदर्शयन्, लोकैः जनैः कण्ठे गृहीत्वा तस्मात्प्रदेशात् तत्स्थानात् दूरीकृतः दूरम् अपसारितः। सापि स्नानं कृत्वा यक्षसमीपम् आगत्य तस्य निकटम् एत्य, पुष्पगन्धाद्यैः अभ्यर्च्य तस्य आराधनां कृत्वा, सर्वलोकानं शृण्वताम् उवाच सर्वे यथा श्रोतुं शक्नुयुः तथा उक्तवान् यत् भो भगवान् यक्ष, निजभर्तारं गुणाकरम्, एनं ग्रहिलं सुबुद्धिं च विना यद्यन्यपुरुषः अन्यः पुरुषः, मां, स्पृशति स्पर्शं करोति, कदाचन कदापि, तदा तव जङ्घाभ्यां सकाशात् मम निक्रमणं बहिः आगमनम्, मा भवतु नैव स्यात् इति अभिधाय उक्त्वा, सर्वलोकसमक्षम् सर्वेषां जनानां पुरतः, जंघयोः मध्ये प्रविश्य निष्क्रान्ता बहिः आगताः। यक्षः अपि तद्बुद्धिं तस्याः मतिं, मनसि श्लाघमानः प्रशंस्यमानः, एव स्थितः आसीत्। सा अपि सती इति समस्तलोकैः सर्वजनैः पूजिता संस्तुता, स्वभवनं जगाम निजगृहं गतवती। एवं चेत् तथाभूतं यदि कर्तुं, जानासि शक्नोषि तर्हि, व्रज गच्छ। इति श्रुत्वा प्रभावती सुप्ता शयनं कृतवती।

### सरलार्थः

परस्मिन् दिवसे प्रातः सर्वान् एकत्रीकृत्य पुष्पादिकं स्वीकृत्य सा यक्षमन्दिरं गतवती। तत्र समीपे स्थितायां पुष्करिण्यां स्नात्वा यक्षस्य पूजनार्थं यदा सा मन्दिरं प्रति गच्छति तदा सः परपुरुषः सुबुद्धिः उन्मादः भूत्वा तस्याः कण्ठं स्वीकृतवान्। तदा किमिदम् इत्युक्त्वा सा पुनः स्नानार्थं गतवती। स्नानं समाप्य मन्दिरं प्रविश्य यक्षदेवतायाः पुष्पधूपादिवस्तुभिः पूर्जाचनां कृतवती। ततः परं सर्वे यथा श्रोतुं शक्नुवन्ति तथा उच्चस्वरेण देवतां प्रति उक्तवती यत् तस्याः पतिः किञ्च कियत्पूर्वं यः उन्मादः - एतौ द्वौ एव तां स्पृष्टवन्तौ। तौ विहाय अन्यः कश्चन यदि तां स्पृष्टवान् तर्हि यक्षस्य जङ्घयोः अन्तरात् तस्य निर्गमनं न भविष्यति इति। ततः परं सर्वेषां पुरतः सा जङ्घयोः मध्ये प्रविश्य बहिः आगता। यक्षः तस्याः बुद्धिं ज्ञात्वा तस्याः मनसि स्तुतिम् अकरोत्। सा श्रियादेवी अपि सती इति उक्त्वा सर्वे तस्याः प्रशंसाम् अकुर्वन्। एवं यदि सा प्रभावती अपि बुद्धिकौशलेन आत्मानं रक्षयितुं समर्था तर्हि सा गन्तुं योग्या। इति कथां श्रुत्वा सा प्रभावती निद्रायां लीनः अभवत्।

### व्याकरणविमर्शः

- ग्रहिलीभूतः- भूताविष्टः, आत्मानम् उन्मत्तम् प्रदर्शयन्निव तस्या जारः इत्यर्थः।
- सर्वलोकानां- शृण्वताम्- सर्वान् जनान् श्रावयित्वा इत्यर्थः।
- श्लाघमानः- प्रशंसां कुर्वन्।

टिप्पणी

##  पाठगतप्रश्नाः-३

३४. नगरस्य नाम किम्।

३५. तत्रस्थस्य वणिजः नाम किम्।

३६. शालिगस्य पत्न्याः नाम किम्।

३७. शालिगस्य सुतः कः।

३८. गुणाकरस्य भार्या का।

३९. सा केन परपुरुषेण सह रमते।

४०. के केवलं गुणान् एव गृह्णन्ति।

४१. गुणान् दोषान् अपि के गृह्णन्ति।

४२. श्वशुरः श्रियादेव्याः सकाशात् किं स्वीकृतवान्।

४३. सत्यतायाः कृते कः प्रमाणीभूतः।

##  पाठसारः

अस्मिन् पाठे शुकसप्ततिः इत्याख्यकथाग्रन्थात् कथात्रयं स्वीकृता। **प्रथम**कथायाः नाम आसीत् सुदर्शनधीः इति। तस्मिन् पाठे राज्ञः सुदर्शनस्य विचारक्षमताविषये ज्ञायते। विमलनामकः एकः वणिक् आसीत्। तस्य पत्नीद्वयम् आसीत्। तत्रैव ग्रामे एकः धूर्तः आसीत्। सः तस्य पत्नीद्वयं प्राप्तुं देव्याः अम्बिकायाः उपासनां कृत्वा विमलसमानरूपं प्राप्तवान्। ततः परं यदा विमलः गृहात् बहिः गतवान् तदा तस्य गृहं गतवान्। सः सर्वेभ्यः धनादिकं ददाति स्म। तस्मात् सर्वे प्रसन्नाः जाताः। परं यदा सत्यः विमलः आगतवान्, तदा सर्वे तं भिन्नः इति कथितवन्तः। तदा सः राज्ञः समीपं गतवान्। राजा तस्य पत्नीद्वयं रुक्मिणीं सुन्दरीं च पृष्टवान् यत् तयोः पतिः विवाहसमये किम् आभरणं दत्तवान्, वार्तालापसमये किं किम् उक्तवान् च इति। सत्यः विमलः सर्वं सम्यग् उक्तवान्। तदा राजा तं सपत्नीकं आदरेण गृहं प्रेषितवान्। अन्यं धूर्तं च दण्डितवान्।

**द्वितीय**कथायां कथायां गुरुजनानाम् उपदेशाः सर्वदा श्रवणीयाः इति विषये शुकः उक्तवान्। गोविन्दनामकः ब्राह्मणः आसीत्। सः गुरुजनानां तथा मित्रजनानां च निषेधम् उल्लङ्घ्य मोहिनीनामिकया विषकन्यया सह विवाहं कृतवान्। परम् एकस्मिन् दिवसे यथा तस्याः पितृगृहं प्रति गच्छति तदा मार्गे विष्णुनामकः एकः ब्राह्मणः ताभ्यां सह गन्तुम् आरब्धवान्। सा मोहिना तस्मिन् विष्णौ अनुरक्ता जाता। सः विष्णुः तं गोविन्दं यानात् अवतीर्य तां नीत्वा स्वगृहं प्रति गन्तुम् आरब्धवान्। गोविन्दः ग्रामाधिपतिम् उक्तवान्। सः विष्णुं मोहिनीं च धृतवान्। तदा मन्त्री आगत्य समाधानार्थं गोविन्दं पृष्टवान् यत् मोहिनी प्रातः किं भुक्तवान्। इति। विष्णुः भोजनानन्तरम् आगतवान्, तस्मात् सः सम्यक्तया न जानाति स्म। मन्त्री तस्य कृते दण्डम् उद्घोषितवान्। किञ्च गोविन्दम् उक्तवान् मोहिन्याः परित्यागार्थम्। यतो हि सा स्त्री



स्वस्याः पतिं परित्यज्य अन्येन केनापि सह साग्रहं गच्छति सा पतिव्रता न। तस्मात् तस्याः परित्यागः करणीयः इति उपदेशः।

**तृतीय**कथायां शुकः उक्तवान् यत् शालिपुरम् - नामके नगरे गुणाकरः नामकः वणिक् आसीत्। तस्य पत्नी श्रियादेवी। सा सुबुद्धिनामके अन्ये पुरुषे रक्ता आसीत्। एकस्मिन् दिवसे सुबुद्धिना सह शयनसमये तस्याः श्वशुरः तां दृष्टवान्। सा परं तस्याः पतिं छलेन उक्तवती यत् श्वशुरः मिथ्यां दृष्टवान्। परस्मिन् दिवसे यदा सर्वे न विश्वसन्ति स्म, तदा सा उक्तवती यत् ग्रामे यत् यक्षमन्दिरम् अस्ति, तत्र यक्षस्य जङ्घयोः मध्यात् आगमिष्यामि इति। यः आगन्तुं शक्नोति सः सत्यवादी इति प्रसिद्धिः तदा आसीत्। ततः परं सा सुबुद्धिम् उक्तवती श्वः मन्दिरगमनात् प्राग् उन्मादः भूत्वा तस्याः कण्ठस्वीकारार्थम्। प्रातः यदा सा स्नानं कृत्वा गच्छति तदा सः तथैव तस्याः कण्ठम् आलिङ्गितवती। परं सा पुनः स्नानं कृत्वा यक्षम् उक्तवान् यत् यदि स्वस्याः पतिं किञ्च उन्मादं विहाय न कश्चित् तं पृष्टवान् तदा सा बहिः आगन्तुं शक्नोति इति। सा बहिः आगतवती, यक्षः अपि तस्याः वचनं श्रुत्वा प्रशंसाम् अकरोत्।



## किमधिगतम्

१. राज्ञः सुदर्शनस्य विचारक्षमता।

२. न धर्मवृद्धेषु वयः समीक्ष्यते।

३. बालकादपि हितं वाक्यं ग्राह्यम्।

४. बुद्धिबलेन आत्मनः रक्षणम्।



## योग्यताविस्तारः

### ग्रन्थविस्तारः

कथया बोधः मोदश्च सममेव सिध्यति। तस्मात् अस्मिन् पाठे याः कथाः प्रदत्ताः एतादृशानां कथानां भूयशः अध्ययनं कर्तव्यम्। अत्रस्थानां कथानां विस्तृतव्याख्यादिकं पठित्वा यदि अध्येतारः अधिकज्ञानं लब्धुम् इच्छन्ति तर्हि ते -

१. पण्डितरमाकान्तत्रिपाठिना व्याख्यातं शुकसप्ततिः इति पुस्तकं पठन्तु।

२. आचार्यगुरुप्रसादशास्त्रिणा विरचितं पञ्चतन्त्रस्य अभिनवराजलक्ष्मीनामिका संस्कृतटीकां पठन्तु।

### भावविस्तारः

१. अत्र याः कथाः वर्तन्ते तेषां नाटकं कर्तुं शक्नुवन्ति भवन्तः।



२. छात्राणां सारल्येन उपदेशावसरे एताः कथाः वर्णयितुं शक्नुवन्ति।

३. अत्र सुदर्शनराज्ञः किञ्च मन्त्रिणः चरित्रम् अवलोकनीयम्।

४. उपस्थितबुद्धिबलेन कथं रक्षणं भवति इति ज्ञातुं शक्नुवन्ति।

**भाषाविस्तारः**

१. अत्र ये समासाः वर्तन्ते तेषां तालिकां कुरुत।

२. अत्रत्यानां कठिनपदानाम् अर्थसहितां तालिकां रचयत।

३. ये नवीनशब्दाः ज्ञाताः तेषां लेखनसमये व्यवहारं कुरुत।



## पाठान्तप्रश्नाः

१. धूर्तः केन प्रकारेण सर्वान् स्ववशे नीतवान्।

२. राजा कम् उपायम् अवलम्ब्य समाधानं कृतवान्।

३. सुदर्शनधीः इति कथायाः सारं वर्णयत।

४. किं दुःखदायकं त्रयम्, व्याख्यात। अविदग्धः इत्यादि श्लोकार्थः।

५. किं जीवने दुःखं ददाति। अप्रस्तावे इत्यादि श्लोकार्थः।

६. कामस्य काः दश दशाः, वर्णयत। प्रीतिः स्याद्दर्शनाद्यैः इत्यादिश्लोकार्थः।

७. पण्डिताः कान् परित्यजन्ति। वैद्यं पानरतम् इत्यादि श्लोकार्थः।

८. कथं दम्पद्भ्यां साकं विष्णोः मेलनं जातम्, कुतश्च तैः सह विवादः संवृत्तः।

९. मन्त्री कथं तेषां समाधानम् कृतवान्।

१०. विषाङ्गनावृत्तम् इत्यस्य कथासारं वर्णयत।

११. के किं विषयं गृह्णन्ति इति श्लोकम् उक्त्वा वर्णयत।

१२. श्रियादेवी कथम् आत्मानं रक्षितवती।

१३. यक्षदेवता कुतः मनसा तस्याः बुद्धेः प्रशंसां कृतवान्।

१४. बुद्धिः सर्वत्र ज्येयसी इति सूक्तिम् उदाहरणपुरःसरं प्रतिपादयत।



## पाठगतप्रश्नोत्तराणि

**उत्तराणि-१**

१. अनिरुद्धवेगा।

२. प्रभावतीं प्रति।



३. विशाला नगरी।

४. राज्ञः नाम सुदर्शनः इति।

५. वणिजः नाम विमलः इति।

६. रुक्मिणी सुन्दरी च।

७. कुटिलः इति नाम आसीत् धूर्तस्य।

८. देवीम् अम्बिकाम् पूजयित्वा वरं प्राप्तवान्।

९. प्रजापीडनसन्तापात्समुद्भूतः अग्निः राज्ञः कुलं दहति।

१०. स्वर्गप्राप्तिनिमित्तकम्।

११. विशाला।

१२. रुक्मिणी, सुन्दरी।

१३. कुटिलः।

१४. बहुमानदानादिना।

१५. प्रजापीडनसन्तापात्।

१६. स्वर्गप्राप्त्यर्थम्।

**उत्तराणि-२**

१७. सोमप्रभः इति।

१८. विषकन्यायाः पितुः नाम सोमशर्मा इति।

१९. मोहिनी इति।

२०. जनस्थान इत्याख्ये स्थाने।

२१. गोविन्दः

२२. स्वल्पं धनम्।

२३. कामकलानिपुणा पत्नी।

२४. विष्णुः इति।

२५. ताम्बुलं दत्तवान्।

२६. प्रातः भोजनान्ते।

२७. बालकात्।

२८. ब्राह्मणः।

२९. सोमप्रभम्।

३०. विद्वत्ता।

३१. आत्मनः रूपलावण्ययौवनम्।

३२. अविदग्धः।



३३. स्तोकः।

**उत्तराणि-३**

३४. शालिपुरम् इति नाम।

३५. शालिगः इति।

३६. जयिका।

३७. गुणाकरः।

३८. श्रियादेवी।

३९. सुबुद्धिना।

४०. रक्ताः।

४१. मध्यस्थाः।

४२. श्रियादेव्याः नूपुरम्।

४३. यक्षः।

॥ इति षष्ठः पाठः ॥



# ७

# पञ्चतन्त्रम्

## प्रस्तावना

काव्यं कान्तावद् भवति। तस्यार्थः प्रेमिका यथा स्वप्रेमिणं कथाच्छलेन सन्मार्गं प्रवर्तयति तथा काव्यम् अपि कृत्याकृत्यविवेकं जनयति। कथाग्रन्थस्यापि अत्रैव तात्पर्यम्। कथाग्रन्थः अपि पशुपक्ष्यादीनाम् कथाव्याजेन अस्माकं किम् कर्तव्यम् किम् अकर्तव्यम् इति उपदिशति। जीवने अभ्युन्नत्यै नीतीनाम् आदरः विधेयः एव। कथाग्रन्थः नीतिमूलकग्रन्थः इत्यपि उच्यते। अर्थात् कथाग्रन्थेषु प्रत्येकं कथायाम् काचित् नीतिः अवश्यम् भवति। कथासु कासाञ्चित् वक्तारः मनुष्याः भवन्ति कासाञ्चित् च मनुष्येतरप्राणिनः। अस्मिन् पाठे पञ्चतन्त्रनामकात् कथाग्रन्थात् एतादृशम् कथाद्वयम् नीतिवाक्येन सह उपस्थापयिष्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- कथाग्रन्थस्य तात्पर्यम् अवगच्छेत्।
- कथारचनाविषयकम् सामान्यपरिचयम् प्राप्नुयात्।
- ग्रन्थस्य लेखनशैलीम् बुध्यात्।
- कथायाम् उक्ताः नीतीः स्वजीवने परिपालयितुं प्रभवेत्।
- समासविषयकम् ज्ञानं प्राप्नुयात्।
- वाक्यविन्यासविषयकम् ज्ञानं लभेत।

## ७.१) प्रथमकथा - मूर्खाणां न समादरः

### ७.१.१) पूर्वपीठिका

जानतः अपि जनस्य कार्यकाले उपयोगो नास्ति चेत् किम् महता अध्ययनेन। महान्तं कालं यावत् अधीतवतोः ज्ञानम् पुस्तकस्थम् भवति चेत् हास्यास्पदम् भवति। यतः तस्य प्रायोगिकम् वास्तविकम् वा ज्ञानम् नास्ति। वास्तविकज्ञानाभावात् शास्त्रम् कदाचित् अन्यथा बुध्यति। बुद्ध्वा च



कदाचित् समाजे स विपदः स्रष्टा भवति। तेन सामाजिकी संहतिः कदाचित् विनष्टा स्यात्। तच्च अस्माभिः दृश्यते यत् केचित् शास्त्रम् अन्यथा व्याख्यान्ति तेन समाजे विविधाः विघ्नाः समुपस्थिताः भवन्ति। तस्मात् अध्ययनेन लब्धस्य ज्ञानस्य कथम् उपयोगः विधेयः इत्यस्मिन् विषये विवेकः कर्तव्यः। अर्थात् यथायथं प्रायोगिकम् ज्ञानम् आवश्यकम्। अन्यथा स मूर्खेषु गण्यो भवति। लोके ये तावत् आचाराः व्यवहाराः सन्ति तैः विवर्जिताः जनाः शास्त्रेषु कुशलाः अपि हास्यतां यान्ति यथा ते मूर्खपण्डिताः हास्यतां गताः। मुर्खाः गुरुसकाशात् विद्यां प्राप्य अपि तां यथायथं प्रयोक्तुम् समर्थाः न अभवन्। यद्यपि तेषाम् ग्रान्थिकम् ज्ञानम् आसीत् परन्तु प्रायोगिकम् ज्ञानम् नासीत्। अतः कार्यकाले सा विद्या इष्टार्थबोधिका नाभवत् अपि तु भिन्नार्थं प्रतिपादितवती इति ज्ञापयितुम् मूर्खानाम् न समादरः इत्याख्या इयं कथा आरब्धा पण्डितेन विष्णुशर्मणा। सा एव कथा अत्र प्रस्तूयते।

## ७.१.२) मूलग्रन्थपरिचयः

दक्षिणभारतस्य महिलारोप्याख्यस्य नगरस्य राजा आसीत् अमरशक्तिः। तस्य च राज्ञः बहुशक्तिः, उग्रशक्तिः, अनंतशक्तिः च इति त्रयः पुत्राः आसन्। ते च मूर्खाः आसन्। तान् त्रीन् मूर्खान् पुत्रान् शिक्षितान् कर्तुम् राजा पणिडतम् विष्णुशर्माणम् अनुरुद्धवान्। तदा पारितोषिकं विनैव तान् शिक्षयितुं पण्डितः विष्णुशर्मा अङ्गीकृतवान् उक्तवान् च यदि षण्मासाभ्यन्तरे ते शिक्षिताः न स्युः तर्हि अहम् मृत्युदण्डेन दण्ड्यः। अनन्तरं स पश्वादीन् आधारीकृत्य कथाच्छलेन राजकुमारान् उपदिशति स्म। कालेन तेषाम् औचित्यविवेकः सञ्जातः। एवं तेषाम् शिक्षापरिसमाप्तेः अनन्तरम् स तान् उद्दिश्य कथिताः कथाः संगृह्य पञ्चतन्त्राख्यम् ग्रन्थम् प्रणीतवान्। ग्रन्थस्य नाम्ना एव बोध्यते यत् ग्रन्थेऽस्मिन् पञ्च तन्त्राणि सन्ति। अत्र तन्त्रम् अध्यायः। तानि च तन्त्राणि तावत्–

- **मित्रभेदः** (मित्रों में मनमुटाव एवं अलगाव)
- **मित्रलाभः** (मित्र प्राप्ति एवं उसके लाभ)
- **काकोलूकियम्** (कौवे एवं उल्लुओं की कथा)
- **लब्धप्रणाशः** (मृत्यु या विनाश के आने पर; यदि जान पर आ बने तो क्या)
- **अपरीक्षितकारकम्** (जिसको परखा नहीं गया हो उसे करने से पहले सावधान रहें; हड़बड़ी में क़दम न उठायें)

प्रस्तूयमाना इयं कथा अपरीक्षितकारकम् इत्याख्यात् पञ्चमात् तन्त्रात् स्वीकृता।

## ७.१.३) प्रथमकथा- मूर्खानां न समादरः- मूलपाठः- विभागः- १

**कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म। बालभावे तेषां मतिरजायत- भो, देशान्तरं गत्वा विद्याया उपार्जनं क्रियते। अथान्यस्मिन्दिवसे ते ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जे गताः। तत्र च विद्यामठं गत्वा पठन्ति। एवं द्वादशाब्दान् यावदेकचित्ततया पठित्वा, विद्याकुशलास्ते सर्वे सञ्जाताः। ततस्तैश्चतुर्भिर्मिलित्वोक्तम्- वयं सर्वविद्यापारङ्गताः। तदुपाध्यायमुत्कलापयित्वा स्वदेशे गच्छामः। एवं मन्त्रयित्वा तथैवानुष्ठीयतामित्युक्त्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वा अनुज्ञां**



**लब्ध्वा पुस्तकानि नीत्वा प्रचलिता यावत्किञ्चिन्मार्गं यान्ति, तावद् द्वौ पन्थानौ समायातौ। (दृष्ट्वा) उपविष्टाः सर्वे। तत्रैकः प्रोवाच- केन मार्गेण गच्छामः। एतस्मिन्समये तस्मिन् पत्तने कश्चिद्वणिक्पुत्रो मृतः। तस्य दाहाय महाजनो गतोऽभूत्। ततश्चतुर्णां मध्यादेकेन पुस्तकमवलोकितम्-**

**महाजनो येन गतः स पन्था इति।**

### व्याख्या

कस्मिंशिचदधिष्ठाने कस्मिंश्चित् कस्मिन्नपि अधिष्ठाने स्थाने चत्वारः ब्राह्मणाः परस्परं मित्रत्वमपन्नाः मित्रत्वम् मैत्रीम् आपन्नाः प्राप्ताः वसन्ति स्म। बालभावे बाल्यावस्थायाम् एव, तेषां मतिः बुद्धिः अजायत उत्पन्ना- भोः देशान्तरम् अन्यं देशं गत्वा विद्यायाः उपार्जनम् अर्जनम् क्रियते इति। अथ ततः अन्यस्मिन् अपरस्मिन् दिवसे दिने ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं विद्यार्जनार्थम् कान्यकुब्जे कनौज् इति नगरम् गताः गतवन्तः। तत्र च विद्यामठम् पाठशालाम् गत्वा पठन्ति अधीयते। एवं द्वादशाब्दान् द्वादशवर्षाणि यावत् एकचित्ततया तन्मयतया, पठित्वा विद्याकुशलाः विद्वांसः ते सर्वे संजाताः अभवन्। ततः तैः ब्राह्मणैः चतुर्भिः मिलित्वा उक्तम् कथितम् - वयम् सर्वविद्यापारङ्गताः सर्वविद्यापटवः तत् तस्मात् उपाध्यायम् आचार्यम् उत्कलापयित्वा पृष्ट्वा स्वदेशे निजदेशम् गच्छामः यामः। एवं मन्त्रयित्वा आलोचयित्वा (तथैव अनुष्ठीयताम् पाल्यताम् इत्युक्त्वा) ब्राह्मणाः उपाध्यायम् आचार्यम् उत्कलापयित्वा पृष्ट्वा धनादिदानेन सन्तोष्य वा अनुज्ञाम् आज्ञाम् लब्ध्वा गृहीत्वा पुस्तकानि ग्रन्थान् नीत्वा स्वीकृत्य प्रचलिताः यावत् किञ्चित् मार्गं पन्थानं यान्ति गच्छन्ति तावत् द्वौ पन्थानौ समायातौ दृष्ट्वा अर्थात् द्वेधा विभक्तं मार्गं पश्यन्तः ते सर्वे उपविष्टाः उपवेशनं कृतवन्तः। तत्र एकः प्रोवाच उक्तवान् - केन मार्गेण गच्छाम इति। एतस्मिन् समये तस्मिन् पत्तने नगरे कश्चित् वणिक्पुत्रः मृतः अभवत्। तस्य वणिक्पुत्रस्य दाहाय दाहार्थं महाजनः गतः अभूत् गतवान्। ततः अनन्तरं चतुर्णां मध्यात् एकेन अर्थात् चतुर्षु एकेन पुस्तकम् अवलोकितम् ग्रन्थः दृष्टः।

महाजनः येन मार्गेण गतः यथा व्यवहारं करोति, कृतवान् वा, प्रचलितः च, स पन्थाः स मार्गः श्रेष्ठः इति।

### सरलार्थः

कस्मिन्नपि नगरे चत्वारः ब्राह्मणाः आसन्। ते परस्परं मित्राणि आसन्। यदा ते बालकाः आसन् तदा ते चिन्तितवन्तः - देशान्तरं गत्वा विद्यालाभः करणीयः इति। तस्मात् ते सर्वे विद्यालाभार्थं कान्यकुब्जदेशं गतवन्तः। तत्रत्यां पाठशालां च प्राप्तवन्तः। द्वादशवर्षाणि व्याप्य तत्र ते पठनं समाप्य पण्डिताः जाताः। ततः परं ते आचार्यस्य आज्ञां स्वीकृत्य स्वदेशम् आगच्छन्तः आसन्। गमनकाले मार्गद्वयं तैः दृष्टम्। केन मार्गेण गन्तव्यम् इति प्रश्नः उपस्थितः। अतः सन्दिग्धाः ते सर्वे तत्र उपविष्टवन्तः। तदा तस्मिन् नगरे एकः वणिक्पुत्रः मरणं प्राप्तवान्। सर्वे तस्य शवं नीत्वा मार्गेण गच्छन्तः आसन्। तदा एकः पुस्तकं दृष्ट्वा उक्तवान् - वयं सर्वदैव अस्माकं ज्येष्ठाः यत् कुर्वन्ति तदेव अनुसरामः।

गुरुजनः यत् वदति तथा स्वजीवने परिपालयामः। तेन अस्माकं सुखं भवति। तस्मात् केन मार्गेण गन्तव्यम् इति प्रश्नस्य महान्तः जनाः येन मार्गेण गच्छन्ति, तेन मार्गेण वयमपि गच्छेम इत्युत्तरम्।

**व्याकरणविमर्शः**

- देशान्तरम् - अन्यः देशः देशान्तरम् इति मयूरव्यंसकादयश्च इति तत्पुरुषसमासः।
- विद्योपार्जनार्थम्- विद्यायाः उपार्जनम् विद्योपार्जनम् इति षष्ठीतत्पुरुषः। विद्योपर्जनाय इदम् इति विद्योपार्जनार्थम् इति चतुर्थीतत्पुरुषसमासः।
- उत्कलापयित्वा - पृष्ट्वा धनादिदानेन सन्तोष्य वा। प्राकृतप्रसिद्धोऽयं प्रयोगः।
- वणिक्पुत्रः - वणिजः पुत्रः इति षष्ठीतत्पुरुषसमासः।
- महाजनः - वणिग्जनसमूहः, श्रेष्ठो जनश्च।

## ७.१.४) प्रथमकथा- मूर्खानां न समादरः- मूलपाठः- विभागः - २

**तन्महाजनमार्गेण गच्छामः। अथ ते पण्डिताः यावन्महाजनमेलापकेन सह यान्ति, तावद्रासभः कश्चित्तत्र श्मशाने दृष्टः। अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम्-**

**उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे।**
**राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥**

**व्याख्या**

तन्महाजनमार्गेण तत् तस्मात् महाजनमार्गेण (वयं) गच्छामः। अथ तदनन्तरं ते पण्डिताः यावत् महाजनमेलापकेन वणिग्जनसमूहेन सह यान्ति तावत् रासभः गर्दभः कश्चित् तत्र श्मशाने शवदाहस्थाने दृष्टः अवलोकितः। अथ ततः द्वितीयेन (पण्डितेन) पुस्तकम् ग्रन्थम् उद्घाट्य अवलोकितम् दृष्टम् -

उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे।

राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥

**अन्वयः -**

यः उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे राजद्वारे श्मशाने च, तिष्ठति सः बान्धवः इति।

**अन्वयार्थः -**

यः उत्सवे आनन्दसमये, व्यसने विपत्तिकाले, प्राप्ते आगते, दुर्भिक्षे अन्नाभावसमये, शत्रुसङ्कटे शत्रवः यदा आक्रमणं कुर्वन्ति तस्मिन् काले, राजद्वारे व्यवहारादौ, श्मशाने शवदाहस्थाने च, तिष्ठति सहायतां करोति, स बन्धुः एव बान्धवः भवति।

**तात्पर्यार्थः** - कः प्रकृतः बन्धुः इति प्रश्ने एतत् एव उत्तरं यत् यः सर्वदा पार्श्वे तिष्ठति अर्थात् यथैव सुखसमये तथैव दुःखकालेऽपि यः पार्श्वे भवति। यः आनन्दसमये आनन्दं वर्धयति, दुःखसमये सान्त्वनां ददाति, शत्रुसङ्कटे सहायकः भवति, श्मशाने एकाकिनम् (माम्) त्यक्त्वा न गच्छति, सः एव प्रकृतः बन्धुः इति।



**सरलार्थः**

तस्मात् ते शवयात्रया सह प्रस्थिताः। कियद्दूरं गत्वा ते श्मशाने उपस्थिताः। तस्मिन् घोरे भयाकुले निर्जने श्मशाने एकं रासभं ते दृष्टवन्तः। तदा द्वितीयः ग्रन्थम् उद्घाट्य उक्तवान् - उत्सवसमये च व्यसनसमये च दुर्भिक्षकाले च शत्रोः आक्रमणकाले च, राज्ञः सभायाम् च श्मशाने च यः सदैव पार्श्वे तिष्ठति स एव प्रकृत बन्धुः इति।

## ७.१.५) प्रथमकथा- मूर्खानां न समादरः- मूलपाठः- विभागः - ३

**तदहो, अयमस्मदीयो बान्धवः। ततः कश्चित्तस्य ग्रीवायां लगति, कोऽपि पादौ प्रक्षालयति। अथ यावत्ते पण्डिताः दिशामवलोकनं कुर्वन्ति, तावत्कश्चिदुष्ट्रो दृष्टः। तैश्चोक्तम्- एतत्किम्। तावत्तृतीयेन पुस्तकमुद्घाट्योक्तम्-**

**धर्मस्य त्वरिता गतिः।**

**तन्नूनमेष धर्मस्तावत्। चतुर्थेनोक्तम्-**

**इष्टं धर्मेण योजयेत्।**

**(तद्बान्धवोऽयम् अस्माकं धर्मेण युज्यताम्)**

**अथ तैश्च रासभ उष्ट्रग्रीवायां बद्धः। (तत्तु) केनचित्तत्स्वामिनो रजकस्याग्रे कथितम्। (श्रुत्वा च) यावद्रजकस्तेषां मूर्खपण्डितानां प्रहारकरणाय समायातस्तावत्ते प्रणष्टाः।**

**व्याख्या**

तत् तस्मात् अहो अस्मदीयः आस्माकीनः अयम् रासभः बान्धवः बन्धुः। ततः अनन्तरं कश्चित् तस्य रासभस्य ग्रीवायां लगति परिष्वजते, कोऽपि वा पादौ पादद्वयं प्रक्षालयति परिष्करोति। अथ तदनन्तरं यावत् ते पण्डिताः दिशाम् इतस्ततः अवलोकनं कुर्वन्ति तावत् तन्मध्ये कश्चित् उष्ट्रः दृष्टः परिलक्षितः। तैः च उक्तम् - एतत् किम्। तावत् तदा तृतीयेन पुस्तकम् उद्घाट्य उक्तम् कथितम् - धर्मस्य त्वरिता चपला गतिः। तत् तस्मात् नूनम् अवश्यम् एषः धावमानः उष्ट्रः धर्मः तावत्। चतुर्थेन (पण्डितेन) उक्तम् कथितम् - इष्टं स्वप्रियं धर्मेण सह योजयेत्। रासभः बन्धुतया इष्टकोटिप्रविष्ट इति उष्ट्रग्रीवायां रासभबन्धनम् इति भावः। तत् तस्मात् बान्धवः बन्धुः अयम् रासभः अस्माकं, धर्मेण उष्ट्रेण सह नियुज्यताम्।

अथ ततः परं तैः चतुर्भिः च पण्डितैः रासभः गर्दभः उष्ट्रग्रीवायां बद्धः। तत् तु केनचित् स्वामिनः गर्दभस्वामिनः रजकस्य वस्त्रक्षालकस्य अग्रे पुरस्तात् कथितम् उक्तम्। श्रुत्वा च यावत् रजकः वस्त्रक्षालकः तेषां मूर्खपण्डितानां प्रहारकरणाय ताडनाय समायातः तावत् तदभ्यन्तरे ते प्रणष्टाः पलायिताः।

**सरलार्थः**

एवं विचिन्त्य ते तस्य रासभस्य सेवां कुर्वन्ति स्म। तदा तत्र एकः उष्ट्रः आगतः। किमिदम् इति ते पृष्टवन्तः। तदा तृतीयः ब्राह्मणः ग्रन्थम् अवलोक्य उक्तवान् यत् धर्मस्य गतिः अतिशीघ्रा भवति। तदा



सः उक्तवान् यत् यः अस्माकम् इष्टः, किञ्च यः अस्माकं धर्मः, तयोः मेलनं कर्तव्यम्। तस्मात् उष्ट्रग्रीवया साकं गर्धवं संयोजितवन्तः। इमं वृत्तान्तं कश्चन गर्धवस्य पालकं प्रति उक्तवान्। तच्छ्रुत्वा सः पालकः धावति स्म। तदा धावन्तं तं दृष्ट्वा ते सर्वे ततः पलायितवन्तः।

**व्याकरणविमर्शः**

- त्वरिता चपला, अचिन्तनीया, सूक्ष्मा च।

## ७.१.६) प्रथमकथा- मूर्खानां न समादरः- मूलपाठः- विभागः- ४

**ततो यावदग्रे किञ्चित्स्तोकं मार्गं यान्ति, तावत्काचिन्नदी समासादिता। तस्या जलमध्ये पलाशपत्रमायान्तं दृष्ट्वा पण्डितेनैकेनोक्तम्-**

**आगमिष्यति यत्पत्रं तदस्मांस्तारयिष्यति।**

**एतत्कथयित्वा तत्पत्रस्योपरि पतितो यावन्नद्या नीयते, तावत्तं नीयमानमवलोक्यान्येन पण्डितेन केशान्तं गृहीत्वोक्तम्-**

**सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः।**
**अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः।।**

**-इत्युक्त्वा तस्य शिरश्छेदो विहितः।**

**व्याख्या**

ततः अनन्तरं यावत् अग्रे किञ्चित् स्तोकम् अल्पं मार्गं यान्ति गच्छन्ति, तावत् काचित् नदी समासादिता प्राप्ता। तस्याः नद्याः जलमध्ये पलाशपत्रम् आयान्तं आगच्छन्तं दृष्ट्वा पण्डितेन एकेन उक्तम् -

आगमिष्यति आयास्यति यत् पत्रम् तत् अस्मान् तारयिष्यति उद्धरिष्यति इति। एतत् कथयित्वा उक्त्वा तत्पत्रस्य तस्य पत्रस्य उपरि पतितः यावत् नद्या नीयते नद्याम् निमज्जति, प्रवहति वा, तावत् तं नीयमानम् पण्डितम् अवलोक्य दृष्ट्वा अन्येन पण्डितेन केशान्तं केशाग्रभागं गृहीत्वा आदाय उक्तम् -

**सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः।**
**अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः।।**

**अन्वयः -**

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः अर्धेन कार्यं कुरुते हि सर्वनाशः दुःसहः इति।

**अन्वयार्थः -**

सर्वनाशे सर्वस्य हानौ, समुत्पन्ने समागते, अर्धं भागम्, त्यजति न स्वीकरोति, पण्डितः विद्वान्। अर्धेन भागेन, कार्यं स्वप्रयोजनम्, कुरुते सम्पादयति। तत् कुतः इति चेदुच्यते - यतो हि सर्वनाशः सर्वस्य हानिः, दुःसहः सोढुं न शक्यते इति।

**तात्पर्यार्थः** - यदा विद्वान् विपदि पतति, तदा सः स्वस्य यावत् वर्तते तस्मात् अर्धं ददाति। कुतः न सम्पूर्णं ददाति। तदा उच्यते यत् यदि सम्पूर्णं दीयते तदा तस्य दुःखं स्वयमपि सोढुं न शक्नोति।



इत्युक्त्वा एवम् उक्त्वा तस्य शिरश्छेदः मस्तकछेदः विहितः कृतः।

**सरलार्थः**

अनन्तरम् तेषां मार्गे नदी आगता। तत्र नद्याम् एकं पलाशपत्रं भासमानम् आसीत्। तद् दृष्ट्वा चतुर्षु पण्डितेषु एकः उक्तवान् यत् इदं यत् पत्रम् आगच्छति तत् अस्मान् नद्याः अपरं तीरं प्रापयिष्यति इति। एवं विचिन्त्य सः तस्य उपरि पादौ स्थापितवान्। तदा एव सः नद्यां पतितः। तं तथाभूतं दृष्ट्वा अन्यः एकः तं धृत्वा उक्तवान् - विपदि समागतायाम् पण्डितः अर्धेन कार्यं सम्पादयति, अवशिष्टम् अर्धम् च परित्यजति। कारणं हि यदि सर्वस्यापि नाशो भवति तर्हि तद् दुःखं स्वयम् अपि सोढुम् न शक्नोति।

**व्याकरणविमर्शः**

- पलाशपत्रम् - पलाशस्य पत्रम् इति षष्ठीतत्पुरुषसमासः। पत्रं वाहनम् नौकादिकम्, पर्णं च। पत्रन्तु वाहने पर्णे इति विश्वः।

## ७.१.७) प्रथमकथा- मूर्खानां न समादरः- मूलपाठः- विभागः - ५

**अथ तैश्च पश्चाद्गत्वा कश्चिद्ग्राम आसादितः। तेऽपि ग्रामीणैर्निमन्त्रिताः पृथक्पृथक्गृहेषु नीताः। तत एकस्य सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता। ततो विचिन्त्य पण्डितेनोक्तं यत्-**

**दीर्घसूत्रो विनश्यति।**

**-एवमुक्त्वा भोजनं परित्यज्य गतः। तथा द्वितीयस्य मण्डकाः दत्ताः। तेनाप्युक्तम्-**

**अतिविस्तारविस्तीर्णं तद्भवेन्न चिरायुषम्।**

**स च भोजनं त्यक्त्वा गतः। अथ तृतीयस्य वटिकाभोजनं दत्तम्। तत्रापि (तेन) पण्डितेनोक्तम्-**

**छिद्रेष्वनर्था बहुलीभवन्ति।**

**एवं ते त्रयोऽपि पण्डिताः क्षुत्क्षामकण्ठा लोकैर्हस्यमानास्ततः स्थानात् स्वदेशं गताः।।**

**व्याख्या**

(इत्येवम् चतुर्षु एकः मृतः।) अथ अनन्तरम् तैः अवशिष्टैः त्रिभिः च पश्चात् गत्वा कश्चित् ग्रामः जनपदः आसादितः प्राप्तः। ते अपि ग्रामीणैः ग्रामस्थैः निमन्त्रिताः भोजनाय आहूताः पृथक् पृथक् गृहेषु गेहेषु नीताः स्वीकृताः। ततः एकस्य पण्डितस्य भोजने सूत्रिका सेमई इत्याख्याता, जलेबी इत्याख्याता वा घृतखण्डसंयुक्ता घृतखण्डलिप्ता दत्ता अर्पिता। ततः तद्दृष्ट्वा विचिन्त्य विशेषेण चिन्तयित्वा पण्डितेन उक्तम् यत् - दीर्घसूत्रः आलस्योपहतः विनश्यति विशेषेण नश्यति इति। एवम् उक्त्वा भोजनं भोज्यं परित्यज्य त्यक्त्वा गतः गतवान्।

तथा द्वितीयस्य भोजने मण्डकाः दत्ताः अर्पिताः। तद्दृष्ट्वा तेन अपि उक्तम् - अतिविस्तारविस्तीर्णम् अतिवर्द्धितं वस्तु तत् भवेत् न चिरायुषम् चिरस्थायि, अथवा यथा

नानाविधव्यापारप्रसक्तः नरः चिन्ताशताकुलः न चिरं जीवति, एवम् अतिविस्तीर्णा मण्डका न भोजने प्रशस्ता इत्यपि अर्थः।

अथ तदनन्तरं तृतीयस्मै वटिकाभोजनं वडाभोजनम् दत्तम्। तत्रापि तेन पण्डितेन उक्तम् - छिद्रेषु व्यसनेषु सच्छिद्रेषु भोजनेषु च अनर्थाः बहुलीभवन्ति वर्धन्ते इति। एवं ते त्रयः अपि पण्डिताः क्षुत्क्षामकण्ठाः क्षुधाशुष्ककण्ठाः लोकैः हस्यमानाः उपहस्यमानाः ततः स्थानात् स्वदेशं निजदेशं गताः।

### सरलार्थः

ततः परं ते निकटे स्थितं ग्रामं गतवन्तः। तत्र ग्रामीणाः तेषाम् अभिनन्दनं कृतवन्तः। ते पृथक् पृथक् गृहे निमन्त्रिताः। एकस्य भोजनसमये घृतमिश्रिता सूत्रिका (जलेबी) प्रदत्ता। सः चिन्तितवान् यत् तस्य आचार्यः उक्तवान् यत् दीर्घसूत्री विनाशं प्राप्नोति इति। तस्मात् अत्र सूत्रिकायां दीर्घा सूत्रिका वर्तते इत्यतः सः भोजनं न कृतवान्। अपरस्मै ब्राह्मणाय मण्डका (रोटिका) प्रदत्ता। सः चिन्तितवान् यत् गुरुणा उक्तम् - यस्य अधिकः विस्तारः भवति तस्य आयुः अधिकं न भवति। तदर्थः तस्य मरणं शीघ्रं भवति इति। तस्मात् तत् विचिन्त्य सः भोजनं त्यक्तवान्। तृतीयः यः आसीत् तस्मै वटिकाभोजनं पुरिभोजनं (कचौड़ी) प्रदत्तम्। सः चिन्तितवान् यत् तस्य गुरुः यदा पाठितवान् तदा उक्तवान् यत् यत्र छिद्राः वर्तन्ते तत्र विघ्नाः आधिक्येन भवन्ति। तस्मात् भयेन सः अपि भोजनं न कृतवान्। तान् दृष्ट्वा सर्वे ग्रामीणाः हसितवन्तः। एवं ते मूर्खाः पण्डिताः भोजनम् अकृत्वा एव स्वदेशं प्रति गतवन्तः।

### व्याकरणविमर्शः

- घृतखण्डसंयुक्ता - घृतस्य खण्डः घृतखण्डः इति षष्ठीतत्पुरुषः, घृतखण्डेन संयुक्ता घृतखण्डसंयुक्ता इति तृतीयातत्पुरुषः, घृतखण्डलिप्ता इत्यर्थः।
- दीर्घसूत्रः - आलस्योपहतः। दीर्घसूत्रश्चिरक्रियः इति कोशात्।
- वटिकाभोजनम् - वटिका वडा तस्याः भोजनम् वटिकाभोजनम् इति षष्ठीतत्पुरुषसमासः।
- अनर्थाः - न अर्थाः अनर्थाः इति नञ्तत्पुरुषसमासः।
- क्षुत्क्षामकण्ठाः - क्षुता क्षुधया क्षामः शुष्कः इति तृतीयातत्पुरुषसमासः, क्षुत्क्षामः कण्ठः येषां ते क्षुत्क्षामकण्ठाः (पण्डिताः) इति बहुव्रीहिसमासः, बुभुक्षिताः इति तदर्थः।



## पाठगतप्रश्नाः-१

१. चत्वारः विद्यालाभाय कुत्र गतवन्तः।

२. कान्यकुब्जे ते कुत्र आसन्।

३. कति वर्षाणि व्याप्य ते अध्ययनं कृतवन्तः।

४. कः पन्थाः।

५. श्मशाने ते किं दृष्टवन्तः।

६. इष्टं केन योजयेत्।



७. कस्याम् अवस्थायां पण्डितः अर्धं त्यजति।

८. अतिविस्तीर्णस्य किं भवेत्।

९. छिद्रेषु किं बाहुल्येन भवन्ति।

१०. किं विनश्यति।

## ७.२) द्वितीया कथा - यतो धर्मस्ततो जयः

### ७.२.१) पूर्वपीठिका

धर्मेण हि जीवन्ति मनुष्याः, धर्मेण हीनाः पशुभिः समानाः। स्वधर्मनीतिन्यायादीन् यः परित्यजति सः पशुतुल्यः एव। सन्मार्गेण गमनम्, स्वधर्मस्य च पालनं सदा कर्तव्यम्। तेन कदापि स्वस्य क्षतिः भवितुम् अर्हति, परन्तु अन्तिमे सुखम् एव लभ्यते। अत्र धर्मबुद्धिः कथं धर्ममार्गे आसीत् इति ज्ञायते। धर्मेण सुखम् अधर्मेण च दुःखम् एव भवति इत्यपि ज्ञायते। सर्वोपरि धर्मस्य कथं जयोऽभवत् इति ज्ञास्यते।

इयं कथा पञ्चतन्त्रात् स्वीकृता। तत्र मित्रभेदनामके प्रथमे तन्त्रे इयं कथा प्राप्यते।

### ७.२.२) द्वितीयकथा- यतो धर्मस्ततो जयः- मूलपाठः- विभागः - १

**कस्मिंश्चिदधिष्ठाने धर्मबुद्धिः पापबुद्धिश्चेति द्वे मित्रे प्रतिवसतः स्म। अथ कदाचित्पापबुद्धिना चिन्तितम्- अहं तावन्मूर्खो दारिद्र्योपेतश्च। तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वास्याश्रयेणार्थोपार्जनं कृत्वैनमपि वञ्चयित्वा सुखी भवामि। अथान्यस्मिन्नहनि पापबुद्धिर्धर्मबुद्धिं प्राह- "भो मित्र, वार्द्धकभावे किं त्वमात्मविचेष्टितं स्मरसि। देशान्तरमदृष्ट्वा कां शिशुजनस्य वार्तां कथयिष्यसि।**

#### व्याख्या

कस्मिंश्चिदधिष्ठाने कस्मिंश्चित् कस्मिन्नपि अधिष्ठाने नगरे धर्मबुद्धिः पापबुद्धिः च इति द्वे मित्रे प्रतिवसतः स्म। अथ अनन्तरम् कदाचित् पापबुद्धिना चिन्तितम् - अहं तावत् मूर्खः दारिद्र्योपेतः दरिद्रः च, तत् तस्मात् एनम् धर्मबुद्धिम् आदाय स्वीकृत्य देशान्तरम् अन्यं देशं गत्वा अस्य धर्मबुद्धेः आश्रयेण अर्थोपार्जनं कृत्वा एनम् धर्मबुद्धिम् अपि वञ्चयित्वा प्रवञ्च्य सुखी भवामि भविष्यामि।

अथ ततः अन्यस्मिन् अपरस्मिन् अहनि दिवसे पापबुद्धिः धर्मबुद्धिम् प्राह उक्तवान् - भो मित्र बन्धो वार्द्धकभावे वृद्धावस्थायाम् किम् त्वम् आत्मविचेष्टितं स्वकृत्यम् स्मरसि स्मरिष्यसि। देशान्तरम् अन्यं देशम् अदृष्ट्वा शिशुजनस्य स्वपुत्रादिबालेभ्यः काम् वार्तां कथयिष्यसि।



**सरलार्थः**

पुरा कस्मिन्नपि ग्रामे धर्मबुद्धिः पापबुद्धिः च इति द्वे मित्रे तिष्ठतः स्म। एकस्मिन् दिवसे पापबुद्धिः चिन्तितवान् यत् सः दरिद्रः मूर्खश्च। यदि सः धर्मबुद्धेः साहाय्येन धनस्य उपार्जनं करिष्यति, परं तं धर्मबुद्धिं वञ्चयित्वा तस्यापि धनं स्वीकरिष्यति तर्हि सः धनिकः भविष्यति, तस्य सुखमपि भविष्यति। एवं विचिन्त्य सः धर्मबुद्धेः समीपं गत्वा उक्तवान् यत् - बहु दिनं यावत् देशान्तरगमनं न अभवत्। तर्हि स्वपुत्रादिभ्यः कां वार्तां ज्ञापयिष्यसि।

**व्याकरणविमर्शः**

- दाहिद्र्योपेतः दारिद्र्येण उपेतः दरिद्रः इति यावत्।
- प्राह प्र-आह, बुवः पञ्चानामादित आह ब्रुवः इत्यनेन विकल्पेन बूते इत्यस्य स्थाने आह इति प्रयोगः पक्षे ब्रूते इत्यपि प्रयोगः।

## ७.२.३) द्वितीयकथा- यतो धर्मस्ततो जयः- मूलपाठः- विभागः - २

**उक्तञ्च-**

**देशान्तरेषु बहुविधभाषावेषादि येन न ज्ञातम्।**
**भ्रमता धरणीपीठे, तस्य फलं जन्मनो व्यर्थम्।।**

**अन्वयः**

येन देशान्तरेषु बहुविधभाषावेषादि न ज्ञातम् धरणीपीठे भ्रमता तस्य जन्मनः फलम् व्यर्थम्।

**अन्वयार्थः**

येन जनेन, देशान्तरेषु अन्येषु देशेषु, बहुविधभाषावेषादि नानाविधं भाषापरिच्छेदादिकम्, न ज्ञातम् अवगतम्, धरणीपीठे पृथिवीपृष्ठे, भ्रमता विचरता, तस्य जनस्य, जन्मनः उत्पत्तेः, फलम् व्यर्थम् निष्फलम्।

**सरलार्थः**

बहुविधभाषाभिः तथा संस्कृतिभिः च सह परिचयः आवश्यकः। यस्य नानाविधभाषापरिच्छेदादिभिः सह सम्पर्कः नास्ति तस्य जन्मना को वा लाभः। अर्थात् यस्य विदेशवृत्तान्तः अज्ञातः तस्य कूपमण्डूकवत् उत्पत्तिः वृथा एव इति भावः।

## ७.२.४) द्वितीयकथा- यतो धर्मस्ततो जयः- मूलपाठः- विभागः - ३

**तथा च-**

**विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक्।**
**यावद्व्रजति न भूमौ देशाद्देशान्तरं हृष्टः।।**

**अन्वयः**



मानवः हृष्टः (सन्) यावत् भूमौ देशात् देशान्तरं न व्रजति तावत् विद्यां वित्तं शिल्पं सम्यक् न आप्नोति।

**अन्वयार्थः**

मानवः मनुष्यः, हृष्टः समुत्सुकः (सन्) यावत् यावत्कालपर्यन्तम्, भूमौ पृथिव्याम्, देशात् देशान्तरं बहून् देशान्, न व्रजति गच्छति, तावत् तावत्कालपर्यन्तम्, विद्यां ज्ञानम्, वित्तं धनम्, शिल्पं कलादिकम्, सम्यक् प्रभूतम् न आप्नोति लभते इत्यर्थः।

**सरलार्थः**

चर्चया वर्धते विद्या। तस्मात् विद्यालाभाय विविधजनैः साकं मेलनं कर्तव्यम्। यः देशान्तरं गत्वा अन्यैः साकं यावत् न मिलति, तावत् तस्य विद्या सम्पूर्णा न भवति। तस्मात् अन्यदेशस्थैः सह मेलनम् अत्यावश्यकम्। तेन ज्ञानम् वर्धते, धनमपि एधते, कलादिकम् च हस्तगतं भवति।

## ७.२.५) द्वितीयकथा- यतो धर्मस्ततो जयः- मूलपाठः- विभागः - ४

**अथ स धर्मबुद्धिः तस्य तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरुजनानुज्ञातः शुभेऽहनि देशान्तरं प्रस्थितः। तत्र च धर्मबुद्धिप्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तमासादितम्। ततश्च द्वावपि तौ प्रभूतोपार्जितद्रव्यौ प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन निवृत्तौ। उक्तञ्च-**

**प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनाम्।**
**क्रोशमात्रोऽपि भूभागः शतयोजनवद्भवेत्।।**

**व्याख्या**

अथ अनन्तरम् तस्य पापबुद्धेः तत् वचनम् कथनम् आकर्ण्य श्रुत्वा प्रहृष्टमनाः समुत्सुकमनाः धर्मबुद्धिः तेन एव सह गुरुजनानुज्ञातः गुरुजनैः ज्येष्ठैः अनुज्ञातः आदिष्टः शुभे मङ्गलमये अहनि दिने देशान्तरम् प्रस्थितः अन्यं देशम् प्रति यात्राम् आरब्धवान्। तत्र च धर्मबुद्धिप्रभावेण भ्रमता विचरता पापबुद्धिना प्रभूततरम् विपुलम् वित्तम् धनम् आसादितम् उपार्जितम्। ततः द्वौ अपि प्रभूतोपार्जितद्रव्यौ धनवन्तौ प्रहृष्टौ आनन्दितौ स्वगृहं निजगृहं प्रति औत्सुक्येन उत्कण्ठया निवृत्तौ प्रत्यागमनम् आरब्धवन्तौ। उक्तम् च -

**प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनाम्।**
**क्रोशमात्रोऽपि भूभागः शतयोजनवद्भवेत्॥**

**अन्वयः**

देशान्तरनिवासिनां प्राप्तविद्यार्थशिल्पानां क्रोशमात्रः अपि, भूभागः शतयोजनवद् भवेत् इति।

**अन्वयार्थः**

विद्या च अर्थः च शिल्पम् च तानि विद्यार्थशिल्पानि प्राप्तानि अधिगतानि विद्यार्थशिल्पानि यैः ते तेषां प्राप्तविद्यार्थशिल्पानाम् देशान्तरनिवासिनाम् अन्यदेशे प्रतिवसताम् क्रोशमात्रोऽपि अल्पपरिमितोऽपि



भूभागः भूमिपरिमाणम् शतयोजनवत् बहुविस्तृतवद् भवेत् प्रतिभाति, यस्मै प्रयोजनाय जना विदेशं गच्छन्ति तत्र यावत् अर्थसिद्धिः न भवति तावत् स्वगृहं प्रति निरुत्कण्ठाः भवन्ति कृतकृत्यास्तु स्वगृहं प्रति सातिशयं समुत्कुण्ठिताः मुहूर्तस्यापि विलम्बस्य अमर्षणीयतया असहनीयतया स्वल्पमात्रमपि मार्गं सुदूरम् इव मन्यन्ते इति भावः।

**सरलार्थः**

पापबुद्धेः एतद् वाक्यं श्रुत्वा धर्मबुद्धिः सम्मतः अभवत्। स गुरुजनानाम् अनुमतिम् आशीर्वादं च प्राप्य देशान्तरं गतवान्। तत्र धर्मबुद्धेः कारणात् सः पापबुद्धिः प्रभूतं धनं लब्धवान्। ततः परम् आनन्देन तौ धनरत्नादि स्वीकृत्य गृहं प्रति गच्छन्तौ आस्ताम्।

**तात्पर्यार्थः**

यदा गृहं प्रति पुत्रः विद्याधनादिकं लब्ध्वा आगच्छति तदा क्रोशपरिमितः मार्गः क्रोशचतुष्टयपरिमितम् इव भाति। एवमेव देशान्तरे यः विद्याधनकलादीन् लब्ध्वा स्वगृहम् आगच्छति तस्य स्वल्पः अपि मार्गः दीर्घकायः इव प्रतीयते।

**व्याकरणविमर्शः**

- गुरुजनानुज्ञातः - गुरुजनैः अनुज्ञातः इति तृतीयातत्पुरुषसमासः।
- धर्मबुद्धिप्रभावेण - धर्मबुद्धेः प्रभावः इति षष्ठीतत्पुरुषसमासः, धर्मबुद्धिप्रभावः तेन धर्मबुद्धिप्रभावेण।
- प्रभूतोपार्जितद्रव्यौ - प्रभूतम् अनेकम् उपार्जितम् द्रव्यम् याभ्याम् तौ प्रभूतोपार्जितद्रव्यौ इति बहुव्रीहिसमासः।
- प्राप्तविद्यार्थशिल्पानाम् - प्राप्तः अर्थः विद्या शिल्पं च यैः ते प्राप्तविद्यार्थशिल्पाः इति बहुव्रीहिसमासः, तेषाम् प्राप्तविद्यार्थशिल्पानाम्।

## ७.२.६) द्वितीयकथा- यतो धर्मस्ततो जयः- मूलपाठः- विभागः - ५

**अथ स्वस्थानसमीपवर्तिना पापबुद्धिना धर्मबुद्धिरभिहितः-"भद्र, न सर्वमेतद्धनं गृहं प्रति नेतुं युज्यते, यतः कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ते। तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य, किञ्चिन्मात्रमादाय गृहं प्रविशावः। भूयोऽपि प्रयोजने सञ्जाते तन्मात्रं समेत्यास्मात् स्थानान्नेष्यावः। उक्तञ्च-**

**न वित्तं दर्शयेत्प्राज्ञः कस्य चित्स्वल्पमप्यहो।**
**मुनेरपि यतस्तस्य दर्शनाच्चलते मनः॥**

**तथा च-**

**यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।**
**आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान्॥**



**व्याख्या**

अथ अनन्तरम् स्वस्थानसमीपवर्तिना निजस्थाननिकटवर्तिना पापबुद्धिना धर्मबुद्धिः अभिहितः कथितः - भद्र श्रीमान्, न सर्वम् एतत् धनं गृहं प्रति नेतुं युज्यते, यतः कारणं हि कुटुम्बिनः आत्मीयाः बान्धवाः बन्धवः च प्रार्थयिष्यन्ते याचिष्यन्ते, तत् तस्मात् अत्र एव वनगहने गभीरे अरण्ये क्वापि कुत्रचित् भूमौ मृत्तिकायाम् निक्षिप्य किञ्चिन्मात्रम् अल्पपरिमाणम् आदाय स्वीकृत्य गृहम् प्रविशामः गच्छामः। भूयोऽपि बहुविधेऽपि प्रयोजने सञ्जाते उपस्थिते तन्मात्रम् अवशिष्टं धनम् समेत्य आगत्य अस्मात् स्थानात् नेष्यावः स्वीकृत्य गमिष्यावः। उक्तम् च -

**न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो।**

**मुनेरपि यतस्तस्य दर्शनाच्चलते मनः।।**

**अन्वयः**

प्राज्ञः स्वल्पम् अपि अहो वित्तं न दर्शयेत्। यतः मुनेः मनः अपि, तस्य दर्शनात् चलते।

**अन्वयार्थः**

प्राज्ञः विद्वान्, स्वल्पम् अत्यल्पम्, अपि अहो आश्चर्यं वित्तं धनम्, न दर्शयेत् प्रकाशयेत्। यतः कारणं हि मुनेः स्थिरचित्तस्य, मनः चित्तम् अपि, तस्य धनस्य, दर्शनात् अवलोकनात्, चलते अस्थिरं भवति इत्यर्थः।

**तात्पर्यार्थः**

शुक्तौ रजतस्य भ्रमे अपि मानवः तत् प्राप्तुं धावति। तर्हि यदि साक्षात् धनमेव स्यात् तदा कस्य वा मनः चञ्चलं न भवति। शान्तचित्तानां मुनीनाम् अपि चित्तं स्वल्पधनदर्शनेन प्रलुब्धं भवति। तस्मात् विद्वान् कदापि स्वस्य धनादिकं न कम् अपि दर्शयति।

**यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।**

**आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान्।।**

**अन्वयः**

यथा आमिषं जले मत्स्यैः भक्ष्यते भुवि श्वापदैः आकाशे पक्षिभिः तथा चैव वित्तवान् सर्वत्र।

**अन्वयार्थः**

यथा मत्स्यैः मीनैः जले सलिले श्वापदैः हिंसकैः भूमौ भुवि पक्षिभिः विहगैः आकाशे गगने आमिषं मांसम् (भोग्यवस्तु) (आमिषं पुन्नपुंसकम् भोग्यवस्तुनि सम्भोग इति मेदिनी) भक्ष्यते तथा सर्वत्र देशे इति शेषः वित्तवान् धनवान् भक्ष्यते जनैः इति शेषः सर्व एव वित्तवतः वित्तम् आकाङ्क्षते।

**तात्पर्यार्थः**

अत्र श्लोके धनस्य प्राप्तौ कः विघ्नः भवति इति वर्ण्यते। अत्र उच्यते यत् सर्वे मांसं वाञ्छन्ति। यदि तत् जले अस्ति तर्हि मत्स्याः स्वीकुर्वन्ति खादन्ति। यदि तत् पृथिव्यां वर्तते तर्हि प्राणिनः गृह्णन्ति।



यदि आकाशे पतत् वर्तते तर्हि पक्षिणः तत् आत्मसात्कुर्वन्ति। एवमेव यः वित्तवान् भवति सर्वे तस्य धनम् इच्छन्ति।

**सरलार्थः**

गृहसमीपं यदा ते आगताः तदा पापबुद्धिः उक्तवान् यत् गृहे आत्मीयाः वर्तन्ते। तेषां समीपे प्रभूतं धनं न नेतव्यम्। गृहसमीपे कुत्रापि बिलं (गर्तम्) कृत्वा तत्र धनादिकं स्थापयित्वा यावत् प्रयोजनं वर्तते तावत् स्वीकृत्य गच्छति चेत् सम्यक् भवति। यदा प्रयोजनं भविष्यति, तदा पुनः स्वीकरिष्यति। यतो हि धनम् इत्थं वस्तु यत् स्थिरचित्तानां मुनीनामपि मनसि विकारम् उद्भावयति। किञ्च धनवतां सर्वत्र शत्रवः विद्यन्ते।

## ७.२.७) द्वितीयकथा- यतो धर्मस्ततो जयः- मूलपाठः- विभागः - ६

**तदाकर्ण्य धर्मबुद्धिराह-"भद्र, एवं क्रियताम्"। तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन संस्थितवन्तौ। अथान्यस्मिन्नहनि पापबुद्धिर्निशिथेऽटव्यां गत्वा तत्सर्वं वित्तं समादाय गर्तं पूरयित्वा स्वभवनं जगाम। अथान्येद्युर्धर्मबुद्धिं समभ्येत्य प्रोवाच- "सखे, बहुकुटुम्बा वयम्, वित्ताभावात्सीदामः। तद्गत्वा तत्र स्थाने किञ्चिन्मात्रं धनमानयावः"। सोऽब्रवीत्-"एवं क्रियताम्"। अथ द्वावपि गत्वा तत्स्थानं यावत्खनतस्तावद्रिक्तं भाण्डं दृष्टवन्तौ। अत्रान्तरे पापबुद्धिः शिरस्ताडयन्प्रोवाच- "भो धर्मबुद्धे, त्वया हृतमेतद्धनम्, नान्येन, यतो भूयोऽपि गर्तापूरणं कृतम्। तत्प्रयच्छ मे तस्यार्धम्। अथवाहं राजकुले निवेदयिष्यामि"। स आह- "भो दुरात्मन्, मैवं वद- धर्मबुद्धिः खल्वहम्। नैतच्चौरकर्म करोमि। उक्तञ्च-**

**मातृवत्परदाराणि परद्रव्याणि लोष्ठवत्।**
**आत्मवत्सर्वभूतानि वीक्षन्ते धर्मबुद्धयः॥**

**व्याख्या**

तत् आकर्ण्य श्रुत्वा धर्मबुद्धिः आह ब्रूते (उक्तवान्) - भद्र एवं यथा तुभ्यं रोचते तथा क्रियताम्। तथा अनुष्ठिते सम्पादिते द्वौ अपि तौ स्वगृहं निजगृहम् गत्वा सुखेन संस्थितवन्तौ। अथ ततः अन्यस्मिन् अहनि दिवसे पापबुद्धिः निशीथे रात्रौ अटव्यां वनम् गत्वा तत्सर्वं वित्तं धनम् समादाय स्वीकृत्य गर्तं पूरयित्वा यथा पूर्वम् आसीत् तथा कृत्वा स्वभवनं निजगृहम् जगाम गतवान्। अथ अन्येद्युः अपरस्मिन् दिवसे धर्मबुद्धिः समभेत्य समागत्य प्रोवाच उक्तवान् - सखे मित्र बहुकुटुम्बाः अनेककुटुम्बयुक्ता वयम् वित्ताभावात् धनाभावात् सीदामः क्लेशम् अनुभवामः। तद्गत्वा तस्मात् गत्वा तत्र स्थाने किञ्चिन्मात्रम् अल्पपरिमितम् धनम् आनयावः स्वीकुर्वः। सः अब्रवीत् उक्तवान् - भद्र एवम् इत्थम् क्रियताम्।

अथ अनन्तरम् द्वौ अपि गत्वा तत्स्थानम् यावत् खनतः तावत् रिक्तम् शून्यम् भाण्डम् दृष्टवन्तौ अवलोकितवन्तौ। अत्रान्तरे एतदभ्यन्तरे पापबुद्धिः शिरः मस्तकम् ताडयन् पीडयन् प्रोवाच उक्तवान् - भो धर्मबुद्धे त्वया हृतम् चोरितम् एतत् धनम् न अन्येन अपरेण। यतः (यदि चौरेण हृतं स्यात् तदा पुनः गर्तपूरणं तेन न कृतं स्यात्। त्वया एव एतत् अपहृतम् अतः गर्तपूरणं त्वया चौर्यगोपनाय कृतम् इत्यर्थः।)



कारणं हि भूयोऽपि बहु गर्तापूरणं गर्तपूरणं कृतम् विहितम्। तत्प्रयच्छ तस्मात् देहि मे मम तस्य हृतस्य धनस्य अर्धम् अर्धपरिमितभागः। अथवा अन्यथा राजकुले राजसमीपे निवेदयिष्यामि वक्ष्यामि।

स आह उक्तवान् – भो दुरात्मन् दुष्टबुद्धे मा एवं वद कथय, धर्मबुद्धिः खलु निश्चयेन अहम् अस्मि। न एतत् चौरकर्म चौर्यम् करोमि। उक्तम् च -

**मातृवत्परदाराणि परद्रव्याणि लोष्ठवत्।**
**आत्मवत्सर्वभूतानि वीक्षन्ते धर्मबुद्धयः॥**

**अन्वयः**

धर्मबुद्धयः परदाराणि मातृवद्, परद्रव्याणि लोष्ठवत्, सर्वभूतानि आत्मवत् वीक्षन्ते।

**अन्वयार्थः**

धर्मबुद्धयः धर्मे सद्वस्तुनि, बुद्धिः मतिः येषां जनानां ते, परदाराणि परस्य अन्यस्य, दाराणि स्त्रियः, मातृवद् माता इव, परद्रव्याणि अन्यस्य द्रव्याणि वस्तूनि, लोष्ठवत् प्रस्तरः इव, सर्वभूतानि सर्वान् लोकान्, आत्मवत् सर्वत्र आत्मानं पश्यन्ति इत्यर्थः।

**तात्पर्यार्थः**

अत्र श्लोके ये धर्ममार्गं गच्छन्ति तेषां नीतयः वर्णिताः। ते परभार्याम् मातृवद् पश्यन्ति, तासां सर्वदा श्रद्धां कुर्वन्ति अर्थात् ताः प्राप्तुं कदापि इच्छामपि न कुर्वन्ति। ते परेषां धनं लोष्ठवत् नाम प्रस्तरवत् पश्यन्ति। अर्थात् तेषाम् अपरेषां धने लोभः न वर्तते। किञ्च सर्वान् ते आत्मवत् पश्यन्ति। तदर्थः ते कदापि परेषाम् अपकारं न कुर्वन्ति।

**सरलार्थः**

एवं विज्ञापितः सन् धर्मबुद्धिः तत् स्वीकृत्य समीपे भूमौ धनादिकं स्थापयित्वा गृहं गतवान्। पापबुद्धिः एकस्मिन् दिवसे गत्वा सर्वं धनं नीत्वा गर्तस्य पूरणं कृत्वा गृहम् आगतवान्। परस्मिन् दिवसे स धर्मबुद्धेः समीपं गत्वा उक्तवान् यत् धनस्य आवश्यकता वर्तते। तस्मात् तत्र गन्तव्यमिति। धर्मबुद्धिः तेन साकं तत्र गतवान्। तत्र गत्वा तौ दृष्टवन्तौ यत् तत् स्थानं रिक्तम् अस्ति। तदा तद् दृष्ट्वा पापबुद्धिः धर्मबुद्धेः उपरि दोषारोपं कृत्वा उक्तवान् यत् सः धर्मबुद्धिः एव धनं चोरितवान् इति। सः राजानं वदिष्यति इति उक्तवान्। तदा धर्मबुद्धिः उक्तवान् यत् एवं चौरकार्यं सः कदापि न करोति। तस्य परद्रव्येषु लोभः नास्ति इति।

## ७.२.८) द्वितीयकथा- यतो धर्मस्ततो जयः- मूलपाठः- विभागः - ७

**एवं द्वावपि तौ विवादमानौ धर्माधिकरणं गतौ, प्रोचतुश्च परस्परं दूषयन्तौ। अथ धर्माधिकरणाधिष्ठितपुरुषैः दिव्यार्थे यावत् नियोजितौ, तावत्पापबुद्धिराह- "अहो, न सम्यग्दृष्टोऽयं न्यायः। उक्तञ्च -**

**विवादेऽन्विष्यते पत्रं तदभावेऽपि साक्षिणः।**



**साक्ष्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः॥**

**तदत्र विषये मम वृक्षदेवताः साक्षीभूतास्तिष्ठन्ति, ता अप्यावयोरेकतरं चौरं साधु वा कथयिष्यन्ति"। अथ तौ सर्वैरभिहितम्- भोः, युक्तमुक्तं भवता। उक्तञ्च -**

**अन्त्यजोऽपि यदा साक्षी विवादे सम्प्रजायते।**

**न तत्र विद्यते दिव्यं किं पुनर्यत्र देवताः॥**

**तदस्माकमप्यत्र विषये महत्कौतूहलं वर्त्तते। प्रत्यूषसमये युवाभ्यामप्यस्माभिः सह तत्र वनोद्देशे गन्तव्यम् इति। एतस्मिन्नन्तरे पापबुद्धिः स्वगृहं गत्वा स्वजनकमुवाच- तात, प्रभूतोऽयं मयार्थो धर्मबुद्धिश्चोदितः। स च तव वचनेन परिणितिं गच्छति, अन्यथास्माकं प्राणैः सह यास्यति। स आह- वत्स, द्रुतं वद, येन प्रोच्यं तद् द्रव्यं स्थिरतां नयामि। पापबुद्धिराह - तात, अस्ति तत्प्रदेशे महाशमी। तस्यां महत्कोटरमस्ति। तत्र त्वं साम्प्रतमेव प्रविश। ततः प्रभाते यदाहं सत्यश्रावणं करोमि, तदा त्वया वाच्यं यद्- धर्मबुद्धिः चौरः इति।**

**व्याख्या**

एवं द्वौ उभौ अपि विवदमानौ विवादं कुर्वाणौ धर्माधिकारिणं विवादनिर्णेतारं (जज्), राजकुलम् वा गतौ गतवन्तौ प्रोचतुः उक्तवन्तौ च परस्परम् दूषयन्तौ सन्तौ। अथ अनन्तरम् धर्माधिकरणाधिष्ठितपुरुषैः राजकुलस्थपुरुषैः दिव्यार्थे अग्निस्पर्श-भुजङ्गग्रहण-तुलारोहण-विषपानाद्यन्यतमरूपदिव्यशपथकरणाय यावत् नियोजितौ आदिष्टौ तावत् पापबुद्धिः आह उक्तवान् - अहो आश्चर्यम् न सम्यक् दृष्टः अयं न्यायः न यथावत् निर्णीतः इत्यर्थः (ठीक फैसला नहीं हुआ)। उक्तम् च -

**विवादेऽन्विष्यते पत्रं तदभावेऽपि साक्षिणः।**

**साक्ष्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः॥**

**अन्वयः**

विवादे पत्रम् अन्विष्यते, तदभावेऽपि साक्षिणः (अन्विष्यन्ते), ततः साक्ष्यभावात् दिव्यम् मनीषिणः प्रवदन्ति।

**अन्वयार्थः**

विवादे कलहे (मुकद्दमा) उत्पन्ने पत्रम् लेखः अन्विष्यते प्रमाणतया अन्विष्यते गृह्यते च। तदभावेऽपि पत्राभावेऽपि साक्षिणः अन्विष्यन्ते। साक्ष्यभावात् दिव्यम् प्रमाणम् मनीषिणः महान्तः प्रवदन्ति प्रकथयन्ति।

तत् अत्र विषये मम वृक्षदेवताः वृक्षदेवाः साक्षीभूताः तिष्ठन्ति सन्ति, ताः अपि आवयोः एकतरं चौरं साधु वा कथयिष्यन्ति वक्ष्यन्ति। अथ ततः तैः सर्वैः अभिहितम् कथितम् - भो युक्तम् सम्यक् उक्तम् कथितम् भवता। उक्तम् च –

**अन्त्यजोऽपि यदा साक्षी विवादे सम्प्रजायते।**

**न तत्र विद्यते दिव्यं किं पुनर्यत्र देवताः॥**



**अन्वयः**

विवादे अन्त्यजोऽपि यदा साक्षी सम्प्रजायते तत्र दिव्यम् न विद्यते। यत्र देवताः (तत्र) पुनः किम्।

**अन्वयार्थः**

विवादे अन्त्यजोऽपि यदा साक्षी सम्प्रजायते लभ्यते तत्र दिव्यं (प्रमाणं) न विद्यते तस्य न आवश्यकता इत्यर्थः यत्र पुनः देवताः तत्र किं वक्तव्यम् इति भावः।

तत् तस्मात् अस्माकम् अपि अत्र अस्मिन् विषये महत् अनेकम् कौतूहलम् औत्सुक्यम् वर्तते अस्ति। प्रत्यूषसमये प्रभातकाले युवाभ्याम् पापबुद्धिधर्मबुद्धिभ्याम् अस्माभिः सर्वैः सह तत्र वनोद्देशे वनस्थले गन्तव्यम् यातव्यम् इति।

एतस्मिन् अन्तरे एतदभ्यन्तरे पापबुद्धिः स्वगृहम् निजगेहम् गत्वा स्वजनकम् स्वपितरम् उवाच उक्तवान् - तात पितः प्रभूतः अयम् भूयः इदम् मया अर्थः धनम् धर्मबुद्धेः धर्मबुद्धिः इत्यस्य चोरितः चोरितम्। स च अर्थः तव वचनेन कथनेन परिणितिं स्थिरताम् गच्छति। अन्यथा अर्थात् तन्न भवति चेत्, अस्माकम् समेषाम् प्राणैः सह मृत्युना सह सः अर्थः यास्यति गमिष्यति।

सः पिता आह उक्तवान् - वत्स पुत्र द्रुतं शीघ्रं वद कथय येन प्रोच्य उक्त्वा तद् द्रव्यं स्थिरतां नयामि। पापबुद्धिः आह उक्तवान् - तात पितः अस्ति तत्प्रदेशे महाशमी महान् शमीवृक्षः। तस्यां शमीवृक्षे महत्कोटरम् महान् गर्तः अस्ति। तत्र तस्मिन् कोटरे त्वं साम्प्रतम् एव अधुना एव प्रविश गच्छ। ततः अनन्तरम् प्रभाते प्रातः यदा अहम् सत्यश्रवणम् करोमि अर्थात् कः चौरः इति सत्यम् ज्ञातुम् इच्छामि तदा त्वया वाच्यं वक्तव्यम् यद् - धर्मबुद्धिः चौरः इति।

**सरलार्थः**

तदा तौ धर्माधिकारिणः समीपं गतवन्तौ। तत्र पापबुद्धिः तम् उक्तवान् यत् यत्र विवादः भवति तत्र यदि प्रमाणादिकं न लभ्यते तर्हि देवतायाः सकाशं गन्तव्यम्। सर्वे वनदेवतायाः समीपं गमिष्यन्ति चेत् तस्य सकाशात् प्रमाणं लभ्यते। तेन सुविचारः भविष्यति इति। तदा सर्वे तस्य वाक्यम् अङ्गीकृतवान्। परस्मिन् दिवसे गमनाय समयः निश्चितः अभवत्। तस्मिन् दिने रात्रौ पापबुद्धिः स्वपितरम् उक्तवान् यत् - सः सर्वं धनं चोरितवान्। परन्तु श्वः सः तस्मिन् शमीवृक्षे स्थास्यति। यदा सर्वे प्रश्नं करिष्यन्ति तदा एतद् वक्तव्यं यत् धर्मबुद्धिः एव धनानि अपहृतवान् इति। पुत्रस्य रक्षणाय पिता प्रातः तस्य वृक्षस्य कोटरे स्थितवान्।

## ७.२.९) द्वितीयकथा- यतो धर्मस्ततो जयः- मूलपाठः- विभागः - ८

**तथानुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिर्धर्मबुद्धिपुरःसरो धर्माधिकरणकैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच-**

**आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।**
**अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥**



**भगवति वनदेवते, आवयोर्मध्ये यश्चौरस्तं कथय। अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच- भोः, शृणुत, शृणुत, धर्मबुद्धिना हृतमेतद्धनम्। तदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्मबुद्धेर्वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्यावलोकयन्ति, तावद्धर्मबुद्धिना तच्छमीकोटरं वह्निभोज्यद्रव्यैः परिवेष्ट्य वह्निना सन्दीपितम्। अथ ज्वलति तस्मिञ्शमीकोटरेऽर्धदग्धशरीरः स्फुटितेक्षणः करुणं परिदेवयन्पापबुद्धिपिता निश्चक्राम। ततश्च तैः सर्वैः पृष्टः - भोः किमिदम्। इत्युक्ते च पापबुद्धिविचेष्टितं सर्वम् इदमिति निवेदयित्वोपरतः।**

**व्याख्या**

तथा अनुष्ठिते सम्पादिते प्रत्यूषे प्रभाते स्नात्वा स्नानं कृत्वा पापबुद्धिः धर्मबुद्धिपुरःसरः धर्मबुद्धिम् अग्रे नीत्वा धर्माधिकरणकैः विचारकैः सह ताम् शमीम् शमीवृक्षम् अभ्येत्य आगत्य तारस्वरेण उच्चस्वरेण प्रोवाच उक्तवान्-

**आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।**

**अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥**

**अन्वयः**

नरस्य वृत्तम् आदित्यः चन्द्रः अनिलः अनलः च द्यौः भूमिः हृदयं यमः च अहः च रात्रिः च उभे सन्ध्ये च धर्मः च जानाति।

**अन्वयार्थः**

नरस्य जनस्य, वृत्तं चरितम्, आदित्यः सूर्यः, चन्द्रः इन्दुः, अनिलः वायुः, अनलः अग्निः, द्यौः स्वर्गः भूमिः पृथिवी, हृदयं मनः, यमः अन्तिकः, अहः दिनम्, रात्रिः निशा, उभे द्वौ एव, सन्ध्ये प्रातसन्ध्या अपराह्नसन्ध्या च धर्मः च धर्मराजः जानाति वेत्ति इत्यर्थः।

**तात्पर्यार्थः**

अत्र श्लोके के धर्मं जानन्ति इति ज्ञायते। आदित्यः सूर्यः, चन्द्रः, अनिलः वायुः, अनलः अग्निः, द्यौः आकाशः, भूमिः पृथिवी, आपः वरुणः, हृदयं, यमराजः, दिनम्, रात्रिः, सन्ध्याकालः इति एते धर्मं जानन्ति।

भगवति देवि वनदेवते, आवयोः मध्ये यः चौरः तं कथय वद।

अथ अनन्तरम् पापबुद्धिपिता पापबुद्धिजनकः शमीकोटरस्थः शमीवृक्षगर्तस्थितः प्रोवाच कथितवान् भोः शृणुत। धर्मबुद्धिना हृतम् चोरितम् एतत् धनम्। तत् आकर्ण्य श्रुत्वा सर्वे ते राजपुरुषाः विस्मयोत्फुल्ललोचनाः आश्चर्यविस्फारितनयनाः यावत् धर्मबुद्धेः वित्तहरणोचितम् धनापहरणयोग्यम् निग्रहम् दण्डम् शास्त्रदृष्ट्या अवलोकयन्ति तावत् धर्मबुद्धिना तत् शमीकोटरम् वह्निभोज्यद्रव्यैः आशुविदाहितृणलाक्षादिद्रव्यैः परिवेष्ट्य वह्निना अग्निना सन्दीपितम्। अथ ज्वलति तस्मिन् शमीकोटरे अर्धदग्धशरीरः स्फुटितेक्षणः विनष्टनेत्रः करुणम् परिदेवयन् करुणस्वरेण विलपन् पापबुद्धिपिता पापबुद्धिजनकः निश्चक्राम बहिः आगतः। ततः च तैः सर्वैः पृष्टः जिज्ञासितः भोः किम् इदम् इत्युक्ते इति कथिते स पापबुद्धिवेचिष्टतम् पापबुद्धिसाधितम् सर्वम् इदम् इति निवेदयित्वा कथयित्वा उपरतः मृतः।



**सरलार्थः**

परं सर्वे तस्य शमीवृक्षस्य समीपं गतवन्तः। तदा सर्वे पृष्टवन्तः कः चौरः इति। तदा वृक्षमध्यात् पापबुद्धेः पिता उत्तरं दत्तवान् यत् धर्मबुद्धिः धनं हृतवान् इति। तत् वाक्यं श्रुत्वा यदा सर्वे धर्मबुद्धेः दण्डविषये चर्चारताः आसन् तदा धर्मबुद्धिः तस्मिन् वृक्षे अग्निसंयोगं कृतवान्। तदा तापप्रभावात् तस्मात् पापबुद्धेः पिता बहिः आगतः। सः बहिः आगत्य सर्वं वृत्तान्तं कथितवान्। तदा सर्वे धर्मबुद्धेः प्रशंसां कृतवन्तः पापबुद्धेः कृते दण्डं घोषितवन्तश्च।

**व्याकरणविमर्शः**

- विस्मयोत्फुल्लोचनाः - विस्मयेन उत्फुल्लम् विस्मयोत्फुल्लम् इति तृतीयातत्पुरुषसमासः, विस्मयोत्फुल्लं लोचनं येषां ते विस्मयोत्फुल्ललोचनाः।
- तच्छमीकोटरम् - शम्याः कोटरम् शमीकोटरम् इति षष्ठीतत्पुरुषसमासः, तच्च इदम् शमीकोटरम् चेति तच्छमीकोटरम् इति कर्मधारयसमासः।
- अर्धदग्धशरीरः - अर्धं दग्धं शरीरं यस्य सः अर्धदग्धशरीरः इति बहुव्रीहिसमासः।
- स्फुटितेक्षणः - स्फुटितम् विनष्टम् ईक्षणम् नेत्रम् यस्य सः स्फुटितेक्षणः इति बहुव्रीहिसमासः।

## ७.२.१०) द्वितीयकथा- यतो धर्मस्ततो जयः- मूलपाठः- विभागः - ९

**अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्मबुद्धिं प्रशस्येदमूचुः- अहो, साध्विदमुच्यते-**

**उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत्।**
**पश्यतो बकमुखस्य नकुलेन हता बकाः।।**

**व्याख्या**

अथ अनन्तरम् ते राजपुरुषाः पापबुद्धिम् शमीशाखायाम् प्रतिलम्ब्य तदालम्बनपूर्वकम् घातयित्वा धर्मबुद्धिम् प्रशस्य पारितोषिकादिदानेन सत्कृत्य ऊचुः उक्तवन्तः अहो, साधु इदम् उच्यते-

**उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत्।**
**पश्यतो बकमुखस्य नकुलेन हता बकाः॥**

**अन्वयः**

प्राज्ञः (यथा) उपायं चिन्तयेत् (तथा) अपायं च चिन्तयेत्। नकुलेन बकमुखस्य पश्यतः बकाः हताः।

**अन्वयार्थः**

प्राज्ञः बुद्धिमान् जनः (यथा) उपायं साधनम्, चिन्तयेत् विचारयेत्, तथा अपायं विनाशम् च चिन्तयेत् कदाचित् तस्मिन् उपाये अनुसृते अचिन्तितपूर्वः कोऽपि उपायः आगमिष्यति न वा इत्यपि

आलोचनाय इदं तात्पर्यम्। तत्र युक्तिम् आह – पश्यतः अवलोकितस्य बकमुखस्य तम् अनादृत्य इत्यर्थः नकुलेन बकाः हताः विनाशिताः।

**तात्पर्यार्थः**

शठे शाठ्यं समाचरेत् इति अन्यतमा नीतिः। कस्यापि उपकारः यथा करणीयः, तथा सः यदि अपकारं करोति, तदा तस्य दण्डव्यवस्था यथा स्यात् तदपि चिन्तनीयम्। तस्माद् विद्वान् यथा उपायविषये चिन्तयति, तथा अपायस्य विषये अपि चिन्तयति।



## पाठगतप्रश्नाः-२

११. द्वे मित्रे कौ आस्ताम्।

१२. कस्य जन्म व्यर्थम्।

१३. वनदेवता कुत्र निवसति स्म।

१४. धर्मबुद्धयः परभार्यां कथं पश्यन्ति।

१५. धर्मबुद्धीनां निकटे किं लोष्ठवत्।

१६. धर्मबुद्धयः कथं सर्वभूतानि पश्यन्ति।

१७. विचाराय तौ कस्य समीपं गतवन्तौ।

१८. प्राज्ञः किं चिन्तयेत्।



## पाठसारः

अस्मिन् पाठे पञ्चतन्त्रात् कथे स्वीकृते। तत्र चतुर्णां मूर्खानां वर्णना प्रदत्ता। ते विद्यार्जनं कृत्वा शास्त्रस्य अर्थं न अवगतवन्तः। ते कान्यकुब्जम् अगच्छन् विद्यार्जनाय। तत्र द्वादशवर्षाणि व्याप्य अध्ययनं समाप्य आगमनसमये महाजनस्य मार्गेण गत्वा श्मशानं गतवन्तः। परं नद्यां यदा तेषाम् एकः प्रायः निमज्जितः आसीत् तदा सर्वं न हातव्यम् इति विचिन्त्य तस्य मस्तकं छित्वा रक्षितवन्तः। परं यदा ग्रामं गतवन्तः तदा सूत्रिकादौ दीर्घसूत्रादिव्याख्यानं स्मृत्वा न भुक्तवन्तः। एतस्याः कथायाः पठनेन एतद् एव ज्ञायते यत् मूर्खस्य पण्डितस्य विद्यार्जनं व्यर्थम्। यतो हि सः अर्थम् अज्ञात्वा शास्त्रं पठिष्यति। तेन शास्त्रार्थस्य विपरीतार्थः एव भवेदिति।

द्वितीयकथा अपि पञ्चतन्त्रात् स्वीकृता। अत्र धर्मबुद्धिसम्पन्नाः कथं व्यवहरन्ति, कथं जीवनं यापयन्ति इति विषये ज्ञायते। पापबुद्धिः अधिकार्थलाभार्थं धर्मबुद्धिं स्वीकृत्य वाणिज्यार्थं गतवान्। परं प्रत्यागत्य धनादिकं गृहसमीपे एकत्र स्थापितवान्। धर्मबुद्धिः अपि तस्य वाक्यं सकलमनसा अङ्गीकृत्य तत्र धनादिकं स्थापितवान्। परं पापबुद्धिः आगत्य सर्वं धनम् आदाय स्वगृहे स्थापितवान्। परम् एकस्मिन्



दिवसे सः धर्मबुद्धिः स्वीकृत्य आगतवान् धनानयनार्थम्। तदा तत्र धनादिकं नास्ति इति दृष्ट्वा धर्मबुद्धिः स्वीकृतवान् इति अभिनीय धर्माधिकरणम् उक्तवान्। तदा सर्वे स्वीकृतवन्तः यत् वनदेवता यत् वदिष्यति तदेव साधु, तेनैव विचारः भविष्यति। तदा पापबुद्धिः स्वस्य पितरम् उक्तवान् शमीकोटरे स्थित्वा धर्मबुद्धिः चौरः इति कथनाय। यदा तस्य पिता तथा कथितवान् तदा विचारसमये धर्मबुद्धिः तस्मिन् वृक्षे अग्निसंयोगं कृतवान्। तेन बहिः आगतः पापबुद्धिपिता सर्वं वृत्तान्तम् उक्तवान्। तदा सर्वे धर्मबुद्धेः प्रशंसां कृतवन्तः, पापबुद्धिं दण्डितवन्तः च। इत्येव चतुर्थकथायाः सारः।



## किमधिगतम्

१. मूर्खः पण्डितः सर्वत्र हेयस्पदम्।

२. विद्वान् सर्वत्र पूज्यते।

३. धर्मस्य मूलं सुखमेव।

४. धर्ममार्गेण सदा प्रवर्तनीयम्।

५. स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।

६. शठे शाठ्यं समाचरेत्।



## योग्यताविस्तारः

### ग्रन्थविस्तारः

जीवने पाथेयभूतम् अस्माकं कथासाहित्यम्। तत्र प्रतिपदं कथं व्यवहरणीयमिति विषये भूयशः अवलोकनं विहितम्। अत्रस्थानां कथानां विस्तृतव्याख्यादिकं पठित्वा यदि अध्येतारः अधिकज्ञानं लब्धुम् इच्छन्ति तर्हि ते -

१. आचार्यश्रीसीतारामशास्त्रिणा विरचिताम् पञ्चतन्त्रस्य भाषानाम्नीम् हिन्दीटीकां पठन्तु।

### भावविस्तारः

१. अत्र याः कथाः वर्तन्ते तेषां नाटकं कर्तुं शक्नुवन्ति भवन्तः।

२. छात्राणां सारल्येन उपदेशावसरे एताः कथाः वर्णयितुं शक्नुवन्ति।

३. धर्मबुद्धयः यथा आचरति तथा आचरणीयम्।

४. विविधविवेकबोधकानां वाक्यानां जीवने परिपालनं विधेयम्।

५. अत्र सुदर्शनराज्ञः किञ्च मन्त्रिणः चरित्रम् अवलोकनीयम्।



**भाषाविस्तारः**

१. अत्र ये समासाः वर्तन्ते तेषां तालिकां कुर्वन्तु।

२. अत्रत्यानां कठिनपदानाम् अर्थसहितां तालिकां रचयन्तु।

३. ये नवीनशब्दाः ज्ञाताः तेषां लेखनसमये व्यवहारं कुर्वन्तु।



## पाठान्तप्रश्नाः

१. चतुर्णां श्मशानवृत्तान्तं वर्णयत।

२. ग्रामे भोजनसमये ते किं कृतवन्तः।

३. तेषां गुरुगृहात् आगमनवृत्तान्तान् विस्तरेण व्याख्यात।

४. धर्मबुद्धीनां स्वभावं वर्णयत।

५. प्राज्ञः कथं चिन्तयति।

६. धर्मबुद्धिः केन प्रकारेण अपायं कृतवान्।

७. धर्मस्य परिपालनेन किं भवतीति कथाम् आश्रित्य व्याख्यात।



## पाठगतप्रश्नोत्तराणि

**उत्तराणि-१**

१. कान्यकुब्जं गतवान्।

२. विद्यामठे।

३. द्वादशवर्षाणि।

४. महाजनः येन गतः।

५. रासभम्।

६. धर्मेण।

७. सर्वनाशे समुत्पन्ने।

८. आयुः स्वल्पं भवेत्।

९. अनर्थाः।

१०. दीर्घसूत्री।

**उत्तराणि-२**

११. धर्मबुद्धिः पापबुद्धिः च।



१२. देशान्तरेषु बहुविधभाषादि येन न ज्ञातम्।

१३. शमीवृक्षे।

१४. मातृवद्।

१५. परद्रव्याणि।

१६. आत्मवत्।

१७. धर्माधिकरणः समीपम्।

१८. उपायम् अपायं च।

॥ इति सप्तमः पाठः ॥



८

# काव्यशास्त्रप्रवेशः-१

## प्रस्तावना

अयि प्रियच्छात्राः, अस्मिन् पाठे साहित्यस्य प्रवेशार्थं वेदादिवाङ्मयस्य परिचयः युष्माभिः प्राप्तव्यः अस्ति। संस्कृते काव्यसम्पत्तिः सागरवत् अपारा अमूल्या च वर्तते। तत्र अस्माकं सनातनज्ञानराशिः तदात्मकं जीवनं च प्रतिबिम्बितं वर्तते। तादृशस्य काव्यराशेः मूलं स्वरूपं वेदे एव दृश्यते। अपिच वेदेन उपदिष्टं तत्त्वमेव काव्येन प्रकटीक्रियते। वेदस्तु षडङ्गसहितः अस्ति। अतः भवन्तः वेदस्य षडङ्गानाञ्च परिचयम् अत्र प्राप्स्यन्ति। वेदकाव्ययोः मध्यवर्ति पुराणसाहित्यम्। तस्मात् पुराणस्यापि सामान्यपरिचयः आवश्यकः। स च अत्र कार्यते। एवं वेदस्य पुराणस्य च परिचयं प्राप्य काव्यस्य प्रवेशाय योग्याः यूयं भविष्यथ। तेन अग्रिमपाठेषु कवीनां काव्यानाम् अलङ्कारशास्त्रस्य च अध्ययने युष्माकं भूमिका सिद्धा भवति।



## उद्देश्यानि

अस्य पाठस्य अध्ययनेन -

- वेदानां परिचयः युष्माभिः प्राप्तुं शक्यः।
- वेदाङ्गानां परिचयः लब्धुं शक्यते।
- पुराणानां तेषां प्रयोजनस्य ज्ञानं भविष्यति।
- काव्यस्य मूलं, तस्य वैशिष्ट्यं, प्रयोजनञ्च ज्ञास्यन्ति।
- काव्यानां पठने काव्यशास्त्रस्य च अध्ययने पृष्ठभूमिः सेत्स्यति।
- वेद-पुराण-काव्यानां परस्पर समन्वयः ज्ञास्यते।

## ८.१) वेदः

संस्कृतिर्नाम सुपरिष्कृता जीवनपद्धतिः, यया क्रमशः आत्मोद्धारः सिद्ध्यति। भारतीयसनातनसंस्कृतिः चतुर्भिः पुरुषार्थैः परिकल्पिता वर्तते। धर्मः अर्थः कामः मोक्षः इति चत्वारः पुरुषार्थाः। कामो हि लौकिकजीवनसन्तृप्तिः सुखं वा। अर्थो हि तादृशसुखलाभार्थम् अपेक्षितानि वस्त्र-आहार-धन-क्षेत्रादीनि जीवनसाधनानि। धर्मो वै अर्थानामर्जने तद्वारा सुखलाभे शास्त्रोक्तः नियमविशेषः। मोक्षः अनन्तः शाश्वतानन्दः। एतेषां विवेके वेदः परमं प्रमाणम्। वेदः कैश्चित् पुरुषैः विरचितः ग्रन्थो न



भवति। अतः स अपौरुषेयः इत्युच्यते। स तु ऋषिभिः कस्याश्चित् योगभूमिकायां दृष्टः अर्थात् साक्षात्कृतः अस्ति। इष्टस्य लाभे अनिष्टस्य परिहारे अलौकिकम् उपायं यः बोधयति सः वेदः। तस्मात् -

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एनं विन्दति वेदेन तस्मात् वेदस्य वेदता॥** (ऋग्वेदभाष्यभूमिका)

इति वेदलक्षणं प्रतिपादयन्ति तदभिज्ञाः। तस्य अयमर्थः - पुरुषः यदा इष्टस्य लाभे अथवा अनिष्टस्य परिहारे प्रत्यक्षतः वा आलोचनबलेन वा उपायं न प्राप्नोति, तदा तादृशः उपायः यतः प्राप्यते अर्थात् अवगम्यते सः वेदः। अत एव वेदस्य ज्ञानरूपत्वं प्रतिष्ठितं वर्तते।

विद् - ज्ञाने इत्यस्मात् धातोः वेदशब्दः निष्पन्नः। अतः वेदः अलौकिकज्ञानराशिः एव भवति।

## ८.२) वेदविभागपरिचयः

वेदे मन्त्रः ब्राह्मणम् इति प्रधानं विभागद्वयं भवति। मन्त्रस्य संहिता इत्यपि नामान्तरम् भवति। तत्र मुख्यतया यज्ञविषयः एव भवति। ब्राह्मणस्य, ब्राह्मणम् आरण्यकम् उपनिषत् इति त्रयः विभागाः दृश्यन्ते। तत्र ब्राह्मणभागः मन्त्रव्याख्यानरूपी, यज्ञप्रक्रियां मुख्यतया निरूपयति। आरण्यकभागस्तु यज्ञाराध्यानां देवतानाम् आध्यात्मिकत्त्वं निरूपयति। उपनिषद्-भागः ब्रह्मलक्षणम् आत्मतत्त्वम् इत्यादिविषयं प्रतिपादयति। अतः उपनिषदां वेदान्तः इति नामान्तरम् अतीव प्रसिद्धम्। एवं मन्त्रब्राह्मणयोः यज्ञादिकर्मप्रतिपादनं प्रधानं दृश्यते। आरण्यके तु यज्ञकर्मणः आध्यात्मिकतत्त्वस्य च सम्मिलितं पर्यालोचनं प्रधानतया दृश्यते। अनया दृष्ट्या कर्मकाण्डं ज्ञानकाण्डम् इति वेदस्य अपरं विभागद्वयं परिकल्पितं वर्तते।

## ८.३) वेदस्य प्रकाराः

वेदस्य चत्वारः प्रभेदाः वर्तन्ते। ते तु ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदः इति प्रसिद्धाः।

### ८.३.१) ऋग्वेदः

ऋक् इत्यस्यार्थः स्तुतिः। यज्ञदेवतास्तुतिप्रधानो वेदः ऋग्वेदः इत्युच्यते। सः छन्दोबद्धः भवति। अतः प्रायः पद्यरूपी भवति। मण्डलम्-अनुवाकः-वर्गः इति क्रमेण, अष्टकः-अध्यायः-सूक्तम् इति क्रमेण वा अस्य विभागपरिकल्पना सम्प्रदाये अस्ति। आधुनिकानाम् इतिहासज्ञानां सम्मतं मतं यद् ऋग्वेदः जगतः प्राचीनतमं वाङ्मयम्। ऋत्विक्षु ऋग्वेदीयः ऋत्विक् भवति होता।

### ८.३.२) यजुर्वेदः

यजुर्वेदः गद्यरूपी भवति। अत्र यज्ञप्रक्रियायाः विधयः प्रधानतया सन्ति। ऋत्विक्षु यजुर्वेदीयः ऋत्विक् भवति अध्वर्युः। यजुर्वेदे अध्वर्युसम्बद्धाः मन्त्राः प्रधानतया दृश्यन्ते। अस्य वेदस्य शुक्लयजुर्वेदः कृष्णयजुर्वेदः इति प्रकारद्वयं वर्तते। तस्य अध्याय-अनुवाक-काण्डिकारूपाः विभागाः सन्ति। शुक्लयजुर्वेदस्य माध्यन्दिनशाखा, काण्वशाखा चेति शाखाद्वयम् उपलभ्यते। कृष्णयजुर्वेदस्य तु तैत्तिरीयशाखा, मैत्रायणीशाखा, काठकशाखा चेति तिस्त्रः शाखाः उपलभ्यन्ते।



### ८.३.३) सामवेदः

सामवेदः गानप्रधानः भवति। अत्र प्रायः ऋङ्मन्त्राः स्वरवैचित्र्येण गीयन्ते। ऋत्विक्षु सामवेदीयः ऋत्विक् भवति उद्गाता। यज्ञे उद्गातृकर्मणि सामगानं भवति।

### ८.३.४) अथर्ववेदः

अथर्ववेदः अथर्वनामकेन महर्षिणा दृष्टः। तस्मात् अथर्ववेदः इति तस्य नाम। अत्र प्राधान्येन ऋग्वेदीयमन्त्राः एव भवन्ति। एतद्वेदज्ञः ऋत्विक्षु यागे ब्रह्मा भवति। यतो हि अत्र सर्ववेदसारः अस्ति। तथैव आभिचारिकक्रिया, वनस्पतिविद्या, औषधविद्या इत्येवं नैकाः विद्याः सन्ति। अस्मिन् वेदे विंशतिः काण्डानि सन्ति। एकत्रिंशदुत्तरसप्तशतं (७३१) सूक्तानि सन्ति। समस्तवेदान्तसारभूता माण्डूक्योपनिषद् अत्र वर्तते। अथर्ववेदस्य नव शाखाः आसन्। अद्यत्वे तु शौनकशाखा पिप्पलादशाखा चेति द्वे शाखे उपलभ्येते।

## ८.४) वेदाङ्गानां परिचयः

वेदस्य अङ्गभूतानि षट् शास्त्राणि सन्ति। तानि वेदानाम् अध्ययने वेदोक्तकर्मणाम् आचरणे च उपकारकाणि भवन्ति। अतः तेषां वेदाङ्गम् इति नामधेयम्। तानि एवं सङ्गृहीतानि -

**शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा।**

**कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः॥** इति

अस्य अयमर्थः - विद्वांसः वदन्ति यत् शिक्षा, व्याकरणं, छन्दः, निरुक्तं, ज्योतिषं, कल्पः इति वेदस्य षड् अङ्गानि भवन्ति।

### ८.४.१) शिक्षा

शिक्षा वै वेदस्य उच्चारणनियमबोधकं शास्त्रं भवति। अत्र वर्णाः, तेषां स्वराः उदात्तादयः, मात्राः ह्रस्वदीर्घप्लुतरूपाः च प्रतिपाद्यन्ते। वेदभेदेन शाखाभेदेन च शिक्षा भिन्ना भवति। याज्ञवल्क्यशिक्षा, नारदीयशिक्षा, पाणिनीयशिक्षा इत्येवम् अनेके शिक्षाग्रन्थाः उपलभ्यन्ते। शाखासम्बद्धा शिक्षा प्रातिशाख्यमपि कथ्यते।

### ८.४.२) व्याकरणम्

वेदस्य शब्दशुद्धिं रक्षितुं व्याकरणस्य अध्ययनम् अनिवार्यमस्ति। व्याकरणे तु प्रकृतिप्रत्ययादिसंस्कारेण शब्दरूपसिद्धिः प्रधानं कार्यं परिलक्ष्यते। तेन साधुपदप्रयोगविज्ञानं सिद्ध्यति। वेदमन्त्राणाम् अर्थावगमे अपि व्याकरणेन उपकारः क्रियते। यज्ञेषु आहुतित्यागे मन्त्रविनियोगे क्रियमाणे तत्तद्देवतानुसारं लिङ्गविभक्तिव्यत्यासः करणीयो भवति। लिङ्गविभक्तिप्रभृतीनी व्यत्यासः व्याकरणज्ञानं विना न सिद्ध्यति। एवं वेदोपकारि व्याकरणं वेदाङ्गं भवति। लौकिकभाषायामपि साधुपदप्रयोगे व्याकरणमेव शरणम्। सम्प्रदायविदः वदन्ति -

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**



**सारस्वतं चापिशलं शाकलं पाणनीयकम्॥** इति

ऐन्द्रम्, चान्द्रम्, काशकृत्स्नम्, कौमारम्, शाकटायनम्, सारस्वतम्, अपिशलम्, शाकलम्, पाणिनीयकं चेति अष्टौ व्याकरणानि प्रसिद्धानि। इदानीं प्रचलितं वर्तते पाणिनिव्याकरणम्।

### ८.४.३) छन्दः

वेदमन्त्राः छन्दसि निबद्धाः सन्ति। छन्दसि नियता वर्णाः मात्राश्च भवन्ति। अतः छन्दः गीतिप्रधानं भवति। तत्र छन्दोज्ञानं विना मन्त्राणां सम्यक् उच्चारः न शक्यते। तस्मात् एतत् वेदाङ्गं भवति। पिङ्गलच्छन्दःसूत्रम् इति ग्रन्थः प्रसिद्धः यत्र वैदिकानि लौकिकानि छन्दांसि लक्षणपूर्वकं निरूपितानि सन्ति।

### ८.४.४) निरुक्तम्

वेदमन्त्राणां पदानाम् अर्थनिरूपणं निरुक्ते भवति। निर्वचनं हि पदानाम् अर्थस्य बोधनम् इति तात्पर्यम्। अर्थज्ञानं विना वेदमन्त्रे स्वरपरिकल्पना कर्माचरणं च असम्भवं भवति। वेदे स्थिताः कठिनशब्दाः निरुक्तशास्त्रे व्याख्याताः सन्ति। तेन वेदार्थावगमे वेदाध्येतॄणां महान् उपकारः निरुक्तात् भवति। इदानीं तु यास्कमुनिविरचितं निरुक्तं प्रसिद्धं वर्तते।

### ८.४.५) ज्यौतिषम्

ज्यौतिषं कालबोधकं शास्त्रं भवति। वेदे दिहितानि कर्माणि विशिष्टे काले कर्तव्यानि भवन्ति। स च काल विशिष्ट मास-पक्ष-तिथिप्रभृतीन् अंशान् आश्रित्य सिद्ध्यति। मास-पक्ष-तिथ्यादीनां विवेकः ज्यौतिषे भवति। अतः कालविशेषमाश्रित्य विहितानां वैदिककर्मणाम् अनुष्ठाने कालबाधकतया ज्यौतिषं महान्तम् उपकारं करोति। वेदभेदेन वेदाङ्गभूतं ज्यौतिषमपि भिन्नं भवति। लगधकृतं वैदाङ्गज्योतिषं बहु प्रसिद्धं वर्तते।

### ८.४.६) कल्पः

कल्पः यज्ञप्रक्रियानिर्वहणाय आवश्यकानां विषयाणां बोधकं शास्त्रं भवति। कल्पशास्त्रग्रन्थाः सूत्ररूपेण उपलभ्यन्ते।

प्रधानतया कल्पसूत्राणि द्विविधानि भवन्ति। श्रौतसूत्राणि स्मार्तसूत्राणि चेति। वेदोक्तानाम् अर्थात् श्रुत्युक्तानां कर्मविधीनां बोधकानि श्रौतसूत्राणि। स्मृत्युक्तानां कर्मविधीनां बोधकानि स्मार्तसूत्राणि। स्मार्तसूत्राण्यपि श्रुत्युक्तानां कर्मविधानामेव बोधकानि भवन्ति। तत्र पुनः विभागद्वयमस्ति धर्मसूत्राणि गृह्यसूत्राणि चेति। वर्णाश्रमभेदेन धर्मं बोधयन्ति धर्मसूत्राणि। गृह्यसूत्राणि तु षोडशसंस्काराणां विधिबोधकं यत् ये गृहस्थमार्गे प्रायः भवन्ति। शुल्बसूत्रं तु श्रौतसूत्रे अन्तर्भवति। तच्च यज्ञकुण्ड-यज्ञशालादीनां मापनार्थम् अपेक्षितं भवति। बोधायन-आपस्तम्ब-कात्यायनप्रभृतीनां कल्पसूत्रग्रन्थाः प्रसिद्धाः सन्ति।

एवं षडङ्गपरिवारितो वेदः भारतीयजीवनपद्धतेः मूलं परमं प्रमाणं च भवति। सः अन्यनिरपेक्षतया प्रमाणभूतः। स विधि-प्रतिबोधात्मना मानवजीवनस्य कृत्याकृत्योपदेशं करोति। वेदोक्तस्य कर्तव्यं यदि न



क्रियते अथवा वेदेन प्रतिषिद्धं कार्यं यदि क्रियते तर्हि भवति पापरूपी दण्डः। अतः वेदः प्रभुसम्मितः अर्थात् प्रभुसदृशः सन् आज्ञाकर्ता भवति। तदाज्ञायाः अपालने दोषयुक्तपालने वा राजा इव दण्डदाता अस्ति। अतः वेदः प्रभुसम्मितः इति अलङ्कारशास्त्रसम्प्रदाये प्रसिद्धिः अस्ति।

वेदः विश्वस्य प्रथमं वाङ्मयं भवति। ततः परं सञ्जातानि यानि शास्त्र-पुराण-काव्यादीनि वाङ्मयानि सन्ति तेषां मूलं वेदः एव। तेषु वेदतात्पर्यमेव प्रतिध्वनितं वर्तते। वेदतात्पर्यबहिर्भूतं वाङ्मयं भारतीयसंस्कृतौ ग्राह्यं न भवति।



## पाठगतप्रश्नाः-१

१. यज्ञविषयाः प्रधानतया कस्मिन् वेदे सन्ति।

२. स्वरबोधकं शास्त्रं किम्।

३. निरुक्तं किं करोति।

४. गानप्रधानो वेदः कः।

५. स्तुतिप्रधानः वेदः कः।

६. प्रभुसम्मितः कः।

७. वेदः कुतः अपौरुषेयः।

८. भारतीयसंस्कृतेः संक्षिप्तं रूपं किम्।

## ८.५) पुराणानि

वेदमधीत्य जीवनस्य कृत्याकृत्यविवेकं प्राप्तुमसमर्थानां तद्विवेकाय तत्त्वदर्शिनो मुनयः पुराणानि विरचितवन्तः। ते च पुराणकर्तारो भगवन्तः वेदव्यासाः। पुराणेषु वेदोक्तम् तत्त्वं दृष्टान्तरूपैः पुरातनैः देव-मुनि-राजप्रभृतीनां वृत्तान्तैः बोध्यते। अतः "**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्**" इति साम्प्रदायिका वदन्ति। इतिहासेन पुराणेन च वेदतात्पर्यस्य विस्तरेण निरूपणम् उपबृंहणं भवति। अर्थात् विस्तरेण दृष्टान्तादिभिः अर्थं विवृत्य विवृत्य प्रकाशनम्। पुराणेषु वर्णिताः विषयाः वेदोक्तं निगूढमपि तत्त्वं सरलतया निरूपयितुम् अत्यन्तम् उपकुर्वन्ति। पुरातनाः वृत्तान्ताः धर्मादितत्त्वनिरूपणाय निदर्शनरूपेण यदा वर्ण्यन्ते तदा तत्त्वाभिव्यञ्जकाः ते सर्वदा नवा इव भवन्ति। अतः पुरा अपि नवं पुराणम् इति वदन्ति। पुरा नाम प्राचीनम् इत्यर्थः। पुराणग्रन्थानां सामान्यं स्वरूपम् भवति यथा

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**

**वंशानुचरितं चैव पुराणं पञ्चलक्षणम्॥**

सर्गः, प्रतिसर्गः, वंशः, मन्वन्तराणि, वंशानुचरितम् इति पञ्चभिः अंशैः युक्तं पुराणं भवति। सर्गः सृष्टिः। प्रतिसर्गः हि सृष्टिः लयः पुनः सृष्टिश्च इति। वंशः हि सृष्ट्यादौ कदा कदा कः कः वंशः आसीत्



इत्येवं वर्णनम्। वंशानुचरितं हि सूर्यचन्द्रवंशीयानां राजादीनां वर्णनम्। एते पञ्च अंशाः पुराणे तिष्ठन्ति। एतान् अतिरिच्यापि अनेके विषयाः पुराणेषु भवन्ति।

## ८.६) पुराणानां कर्तृ-संख्या-नामानि

पुराणानां रचयिता भगवान् वेदव्यासः। तस्य पुराणमुनिः इति नाम प्रसिद्धमेव भवति। पुराणानां संख्या भवति अष्टादश। तेषां नामानि ग्रहीतुं कश्चन प्राचीनश्लोकः सर्वत्र उद्ध्रियते। स च यथा -

**मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्।**

**अनापलिङ्गकूस्कानि पुराणानि प्रचक्षते॥**

अत्र पुराणानाम् प्रथमाक्षराणि गृहीत्वा तेषां नामानि स्मार्यन्ते।

मद्वयम् - मकारप्रथमाक्षरयुक्तं पुराणद्वयं भवति। तच्च मत्स्यपुराणं मार्कण्डेयपुराणम् इति।

भद्वयम् - भकारप्रथमाक्षरयुक्तं पुराणद्वयं नाम भविष्यपुराणं भागवतपुराणम् चेति।

ब्रत्रयम् - ब्रकारप्रथमाक्षरयुक्तं पुराणत्रयं नाम ब्रह्माण्डपुराणं, ब्रह्मपुराणं, ब्रह्मवैवर्तपुराणम् चेति।

वचतुष्टयम् - वकारप्रथमाक्षरयुक्तं पुराणचतुष्टयं नाम वराहपुराणं, वामनपुराणं, वायुपुराणं, विष्णुपुराणम्।

**अ** – अग्निपुराणम्

**ना** - नारदपुराणम्

**प** – पद्मपुराणम्

**लि** - लिङ्गपुराणम्

**ग** – गरुडपुराणम्

**कू** - कूर्मपुराणम्

**स्क** – स्कन्दपुराणम्

एवम् अष्टादश पुराणनि प्रसिद्धानि सन्ति। एतानि अतिरिच्य गणेश-नारसिंह-सौरादीनि अष्टादश उपपुराणानि सन्ति। सर्वेषां पुराणानां विस्तरः अनन्ताकाश इव गोचरीभवति। पुराणानि वेदोक्तमेव जीवनविवेकं बोधयन्ति। परन्तु वेदे सूक्ष्मतया उक्ताः सृष्टिप्रलयविचाराः युग-मन्वन्तरादिकालपरिमाणानि भगवतः अवताराः इत्येवं विलक्षणाः विषयाः पुराणेषु सुष्ठु निरूपिताः सन्ति। धर्माधर्मनिर्णयप्रसङ्गे पुराणानां श्लोकाः प्रमाणरूपेण स्वीक्रियन्ते।

पुराणेषु प्रतिपादनशैली वेदशैलीतः भिन्ना दृश्यते। मन्दमतानामपि गभीरतत्त्वग्रहणं यथा शक्यं तथा अत्र भवति विषयनिरूपणम्। प्राचीनवृत्तान्तनिरूपणपुरःसरमेव प्रायः सर्वं प्रकाशितं भवति। परन्तु वैदिकपरिभाषा अत्र न भवति। लोकजीवननिदर्शनेन कृतं निरूपणं जनानां सरलतया हृदयग्राह्यं भवति। पुराणेषु वेदकाव्यशैलीमध्यस्था काचित् शैली भवति। तेषु कृत्याकृत्योपदेशः मित्रोपदेश इव नाति कठिनः नापि सहसा परिहार्यः भवति। तस्मात् पुराणं मित्रसम्मितमिति आलङ्कारिका वदन्ति।





## पाठगतप्रश्नाः-२

९. पुरा इत्यस्य कोऽर्थः।

१०. पुराणमुनिः कः।

११. पुराणस्य कति लक्षणानि।

१२. मित्रसम्मितं नाम कोऽर्थः।

१३. व-चतुष्टयेन कानि पुराणानि गृह्यन्ते।

## ८.७) काव्यम्

कवेः कर्म काव्यम् इति आलङ्कारिका वदन्ति। तच्च रमणीयं शब्दार्थयुगलम्, रसात्मकं वाक्यम् इत्यपि अन्यान्यविद्वांसः वदन्ति। अस्मत्परम्परायां जीवनविवेकाय शास्त्रमार्गः इव काव्यमार्गोऽपि अतीव आदृतो वर्तते।

**द्वे वर्त्मनी गिरां देव्याः शास्त्रं च कविकर्म च।**

**प्रज्ञोपज्ञं तयोराद्यं प्रतिभोद्भवमन्तिमम्॥** इति अवदत् भट्टतौतः।

अस्य श्लोकस्य **अन्वयार्थः** - शास्त्रम् - वेदशास्त्रराशिः, कविकर्म च – काव्यं च, गिरां देव्याः - सरस्वत्याः, द्वे वर्त्मनी - द्वौ मार्गौ। तयोः - काव्ययोः मध्ये, आद्यम् - प्रथमम् अर्थात् शास्त्रम्, प्रज्ञोपज्ञम् - बुद्धिशक्त्या निष्पन्नम्, अन्तिमम् - अन्त्यम् अर्थात् काव्यम्, प्रतिभोद्भवम् - कविप्रतिभाशक्त्या निष्पन्नम् अस्ति।

अत्र **अयमाशयः** - ज्ञानाधिदेवता भवति सरस्वती। तस्याः प्रवृत्त्यर्थं द्वौ मार्गौ लोके स्तः। एकः शास्त्रमार्गः। सः प्रज्ञासामर्थ्यात् निष्पन्नः अस्ति। प्रज्ञायाः विचारबलेन ये ज्ञानं प्राप्तुमिच्छन्ति तेषां शास्त्ररूपी मार्गः समुचितः भवितुमर्हति। सरस्वत्याः अपरः मार्गः भवति काव्यमार्गः। स च कवीनां प्रतिभाबलात् निष्पन्नः अस्ति। ये तु सहृदयत्ववशात् काव्यानुरक्ताः सन्ति तेषां काव्यद्वारा जीवनविवेकात्मकं ज्ञानं प्राप्तुं शक्यमस्ति। एवं च शास्त्रं काव्यं च जीवनसार्थक्यसम्पादनायैव आविष्कृतं आदृतं च वर्तते। तत्र यस्य यादृशी अभिरुचिः स्वभावो वा भवति स तत्तन्मार्गम् अनुसरति। कश्चित् प्राचीनश्लोको वदति -

**वेदवेद्ये परे पुंसि जाते दशरथात्मजे।**

**वेदः प्राचेतसादासीत् साक्षात् रामायणात्मना॥** इति

**अन्वयार्थः** - वेदवेद्ये - सर्ववेदैः वेदितुं शक्ये, परे पुंसि - परमपुरुषे अर्थात् श्रीमन्नारायणे, दशरथात्मजे - दशरथस्य पुत्रे, जाते - सञ्जाते सति, वेदः - श्रुतिः, प्राचेतसात् - वाल्मीकिद्वारा, रामायणात्मना - श्रीमद्रामायणरूपेण, साक्षात् आसीत् - प्रकटितं प्रत्यक्षं वा आसीत्।



इदमत्र **तात्पर्यम्** - सकलवेदवेदान्तप्रसिद्धः पुरुषोत्तमः महाविष्णुः। सर्वे वेदाः परमार्थतः तमेव पुरुषं वर्णयन्ति। सः यदा दशरथपुत्ररूपेण अर्थात् श्रीरामरूपेण अवतीर्णः आसीत् तदा समग्रो वेदः वाल्मीकिद्वारा रामायणकाव्यरूपेण प्रकटीभूतः आसीत्। अतः सम्प्रदायविदां प्राज्ञानाम् अभिप्रायः भवति यत् यथा नारायणः एव श्रीरामरूपेण उपागतः तथा वेद एव रामायणरूपेण उपागतः। तेन शास्त्रमिव काव्यमपि परम्परायां बहुमतमासीत् इति अवगम्यते। एवं च अस्माकं सम्प्रदाये काव्यस्य अस्ति कापि महती प्रतिष्ठा।

## ८.८) काव्यस्य मूलम्

यथा अस्माकं सर्वे विद्याप्रकाराः वेदमूलकाः भवन्ति तथा काव्यस्यापि मूलस्थानं प्रथमं स्थानं भवति वेद एव। काव्यस्य प्रथमं स्वरूपं वेदः। वेदे सहस्त्रशः मन्त्रा परमकाव्यरूपेण भवन्ति। दिङ्मात्रम् उदाह्रियते।

**आत्मानं रथिनं विद्धि शरीरं रथमेव तु।**

**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥** (कठोपनिषत्)

**अन्वयार्थः** - आत्मानम् - स्वमात्मानम्, रथिनं विद्धि - रथी-रथस्वामी इति जानातु। शरीरं तु - देहं तु, रथं विद्धि - रथः इति जानातु। बुद्धिं तु - मतिं तु, सारथिं विद्धि - सारथिः रथचालकः इति जानातु। मनः एव – चित्तमेव, प्रग्रहं विद्धि - रथाश्वनियन्त्रकं सूत्रम् इति जानातु।

**भावार्थः** - अत्र जीवात्मा रथिरूपेण परिकल्पितः। शरीरं रथरूपेण परिकल्पितम्। यथा रथमाश्रित्य कश्चित् इष्टं स्थानं गच्छति तथा शरीरमाश्रित्य जीवात्मा अभीष्टं फलं प्राप्नोति। यथा रथस्य सम्यक् चालमाय समीचीनः सारथिः भवति तथा कार्याकार्यविवेकवती बुद्धिः शरीररूपरथचालनाय आश्रयणीया यया रथी आत्मा मोक्षरूपं निजस्थानं प्राप्नोति। मनः अत्र रज्जुः इति कल्प्यते। सारथेः हस्ते यथा रज्जुः भवति तथा बुद्धेः अधीनं मनः भवेत् इत्यर्थः। अत्र जीवस्य मुक्तिलोभोपायः उक्तः। सः काव्यशैल्या निरूपितः इति स्पष्टं प्रतिभाति।

यथा वा,

**यथा सम्पुष्पितस्य वृक्षस्य दूरात् गन्धो वाति एवं पुष्पस्य कर्मणो दूरात् गन्धो वाति।** (महानारायणोपनिषत्)

**अन्वयार्थः** - यथा - यद्वत्, सम्पुष्पितस्य – विकसितपुष्पयुक्तस्य वृक्षस्य – तरोः, गन्धः - परिमलः, दूरात् - दूरप्रदेशात्, वाति - प्रसरति, तथा - तद्वत्, पुष्पस्य – कल्याणात्मकस्य, कर्मणः - क्रियायाः, दूरात् - दीर्घतया, गन्धः - सत्फलं, वाति - व्याप्नोति।

अत्र सत्कर्मप्रशंसायां पुष्पभरितस्य वृक्षस्य सादृश्यं वर्णितम् अस्ति। तेन अयं मन्त्रः काव्यात्मको जातः। एवं सहस्त्रशो वेदमन्त्राः सन्ति येषु रमणीयं काव्यस्वरूपं समुल्लसति। इत्थं वेदः काव्यस्य मूलमिति प्रतीयते।



## ८.९) काव्यविकासः

यथा वेदे तथा पुराणेषु अपि काव्यात्मकाः श्लोकाः प्रकाशम् उपलभ्यन्ते। भगवतमहापुराणं तु रसात्मकरमणीयवर्णनाविलसितं पुराणं भवति। एवं काव्यधर्मस्य वेदापेक्षया अधिकः विकासः दृश्यते। किन्तु पुराणेषु काव्यशैली एव प्रधानतया न दृश्यते। तस्मात् जगति प्रथमः परिपूर्णकाव्यावतारो नाम वाल्मीकिविरचितं रामायणम्। अतः रामायणम् आदिकाव्यं वाल्मीकिश्च आदिकविः इति प्रसिद्धिः लोके वर्तते। भोजराजस्तु

**मधुमयभणितीनां मार्गदर्शी महर्षिः** इति वदति।

अस्य **अयमर्थः** - सरसानां समधुराणां वचनानां रचनायां सर्वेषां कवीनां मार्गदर्शी भवति महर्षिः वाल्मीकिः इति। रामायणमपि सर्वेषां काव्यानां सर्वोच्चं निदर्शनं भवति। रामायणे परिपूर्णं काव्यत्वं दृश्यते। ततःपरं रामायणमवलम्ब्य नैके कवयः सहस्त्रशः काव्यानि विरचितवन्तः। अतः परं कवीनामाधारम् इति उक्त्वा उत्तरकाले कवीनां परमाधारः रामायणं भवति इति वाल्मीकिः स्वयम् उद्घोषितवान्।

रामायणात् परं विरचितं महत् काव्यं नाम महाभारतम्। महाभारतं तु काव्यम् इति व्यासः स्वयं कथयति। तद्यथा

**कृतं मयेदं भगवन् काव्यं परमपूजितम्।** इति

हे भगवन्, मया महाभारतनामकं परमपूजनीयं काव्यं विरचितम् इति ब्रह्माणं निवेदयति। तस्य गाम्भीर्यं "भारतं पञ्चमो वेदः" इति प्रसिद्धवचनेन ज्ञातं भवति। महाभारतमाश्रित्य तदुत्तरकालेषु नैके कवयः सहस्त्रशः काव्यानि विरचितवन्तः।

महाभारतात् परं कालिदास-भास-अश्वघोषादयः बहवः कवयः उत्कृष्टानि महाकाव्य–नाटकाद्यनेकप्रकारकाणि काव्यानि विरचितवन्तः। तदनन्तरं भारवि-माघ-बाणभट्ट-भवभूति-श्रीहर्ष-कुमारदासप्रभृतयः नैके कवयः सहस्त्रशः काव्यानि विरचितवन्तः। तेन काव्यलोकः अत्यन्तं विकासं प्राप्तवान्। अत एव बहूनि महाकाव्यानि, खण्डकाव्यानि, नाटकानि, चम्पूकाव्यानि, गद्यकाव्यानि इत्येवं नैके काव्यप्रकाराः समजायन्त। अद्यापि संस्कृतकाव्यप्रपञ्चः वर्धमान एव दृश्यते। अतः अद्य संस्कृतकाव्यलोकस्य इयन्तागणना असम्भवा एव जाता।

## ८.१०) काव्यस्य वैशिष्ट्यं प्रयोजनञ्च

वेदः प्रभुसम्मितः इत्युच्यते। पुराणं मित्रसम्मितम् उत्युच्यते। काव्यं हि कान्तासम्मितं भवति। कान्तासम्मितं नाम कान्तासदृशम् इत्यर्थः। कान्ता नाम प्रिया भार्या इत्यर्थः। (यदा) लोके साध्वीं कुशलां च कान्तां किमपि जिज्ञासमानः पृच्छति। तदा सा साक्षात् अभिप्रायवाचकं वाक्यं परित्यजति। ततः स्मित-कटाक्ष-मुखावनमनादिचेष्टाविशेषपुरःसरं परोक्षतः स्वाभिप्रायसूचकैः वचनैः अभिमतार्थं ज्ञापयन्ती



तत्र कान्तं प्रवर्तयति। यथा किम् आम्रफलम् आस्वादयसि उत द्राक्षाफलम् इति कान्तः कान्तां पृच्छति। तदा आम्रफलमास्वादयामि इति साक्षात् न वदति। आम्रफलं मधुरं परिमलयुक्तं विविधवर्णरञ्जितं भवति इति वदति। तेन एतदेव उक्तं भवति यत् अहम् आम्रफलम् आस्वादयितुमिच्छामि इति। एवं कान्तानां यथा परोक्षतः स्वाभिप्रायाभिव्यञ्जनशैली वचने भवति तथा काव्यस्यापि भवति। अतः काव्यं कान्तासम्मितम् इति प्रसिद्धम्। कान्तावचनं यथा सरसं मनोहरं भवति तथा काव्यमपि सरसरमणीयं भवति येन सहृदयहृदयम् आकृष्टं भवति। एतस्मात् कारणात् वेदात् पुराणात् च विलक्षणं भवति।

ईदृशस्य काव्यस्य सन्ति मोद-बोधरूपाणि नानाप्रयोजनानि। वेदार्थस्य विस्तरेण विवरणाय काव्यम् उपादेयमिति प्राचीनानां मतिरासीत्। तदाह भगवान् वाल्मीकिः यथा

**स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ।**

**वेदोपबृंहणार्थाय तावग्राहयत प्रभुः॥** (वाल्मी.रा. बा.का. ४.६)

**काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्।** (४.७)

**अन्वयार्थः** - प्रभुः - वाल्मीकिः, मेधाविनौ - प्रज्ञावन्तौ, वेदेषु - श्रुतिषु, परिनिष्ठितौ - सम्यक् अध्ययनवन्तौ, तौ - लवकुशौ, दृष्ट्वा - अवलोक्य, ज्ञात्वा वा, वेदोपबृंहणार्थाय – वेदार्थस्य समन्वयदृष्ट्या प्रदर्शनाय, सीतायाः चरितम् - जानकीचरित्रात्मकं, कृत्स्नं - समस्तम् रामायणम् - रामायणनामकम्, महत् काव्यम् - महाकाव्यम्, अग्राहयत – ग्राहितवान्, शिक्षितवान्।

अत्र अयं **भावः** वर्तते यत् लवकुशयोः वेदाध्ययनात्परं वेदोक्तानां जीवनधर्माणां लोकजीवनसमन्वयदृष्ट्या निरूपणं कर्तुं रामायणकाव्यं बोधितवान् वाल्मीकिः। तेन काव्यं वेदार्थस्य निरूपणे महत् साधनं भवति इत्यवगम्यते। व्यासस्य महाभारतकाव्येऽपि वेदार्थविस्तरः एव परिलक्ष्यते। अतः पञ्चमो वेदः इति कीर्तिः महाभारतस्य भवति। वेदोपदेशस्तु धर्मार्थकाममोक्षाणां चतुर्विधपुरुषार्थानां विवेकः एव भवति। तस्मात् आलङ्कारिकाः काव्यस्य प्रयोजनं नाम पुरुषार्थेषु व्युत्पत्तिलाभः इति वदन्ति। तदाह भामहः -

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।**

**करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥** (काव्यालङ्कारः १.२) इति।

**अन्वयार्थः** - साधुकाव्यनिषेवणम् - सत्काव्यानाम् अध्ययनम्, धर्मार्थविषयेषु, कलासु च – गीत-नाट्यादिकलानां विषयेषु, वैचक्षण्यम् - कौशलं, बोधम्, कीर्तिम् - यशः, प्रीतिम् - आनन्दं च करोति - जनयति।

**भावार्थः** - सत्काव्यानां प्रथमं फलं भवति यत् धर्मादिविषये सम्यक् बोधः। काव्यद्वारा कवीनां धनलाभोऽपि भवत्येव। गीत-नृत्यादिषु कलासु काव्येन कौशलं वर्धते। काव्येन महती कीर्तिः कवीनां भवति। तया कीर्त्या कालिदासादयः महाकवयः अद्यापि जीवन्ति। अपरं महत् फलं प्रीतिः। प्रीतिर्नाम आनन्दः। स चात्र रसास्वादः। वेद-शास्त्र-पुराणादिषु पुरुषार्थविवेकः नीरसतया भवति। काव्ये तु रसास्वादपूर्वकं पुरुषार्थविवेकः भवति इति काव्यस्य विशेषः अवगन्तव्यः।

लोके वेदादीनाम् अध्ययनेन जीवनविवेकं प्राप्नुवन्तः स्वल्पा दृश्यन्ते। काव्येन जीवनविवेकं प्राप्नुवन्तः संख्यया अधिकाः सन्ति। अतः अस्ति लोके काव्यस्य महती आवश्यकता प्रतिष्ठा च।

## ८.११) एतत् युष्माभिः अवगतम्

जगति प्राचीनतमं वाङ्मयं भवति वेदः। सः अपौरुषेयः अस्ति। सः इष्टप्राप्तेः अनिष्टपरिहारस्य च उपायं बोधयति। स एव भारतीयसंस्कृतेः परमं प्रमाणम्। स च ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदः इति चतुर्धा वर्तते। एतेषां चतुर्णां वेदानां मन्त्रः, ब्राह्मणम्, आरण्यकम्, उपनिषत् इति उपविभागाः भवन्ति। अयं वेदः सांसारिकं योगक्षेमं मोक्षं च साधयितुं धर्मान् उपदिशति। अस्य शिक्षा - व्याकरणं - छन्दः - निरुक्तं-ज्यौतिषं - कल्पः इति षट् अङ्गशास्त्राणि भवन्ति। वेदः प्रभुसम्मितः इत्युच्यते।

वेदोक्तानां धर्माणां सरलतया निरूपणाय भगवान् वेदव्यासः पुराणानि रचितवान्। तानि अष्टादश भवन्ति। पुराणं मित्रसम्मितम् इत्युच्यते।

काव्यं तु कान्तासम्मितं भवति। वेदोक्तानां धर्मार्थकाममोक्षाणां बोधः अत्र सरसमार्गेण भवति। काव्यस्य प्रथमं निदर्शनं वेदमन्त्र एव। पुराणेषु अपि काव्यमयशैली दृश्यते। रामायणं तु परिपूर्णं जगतः आदिकाव्यं च भवति। रामायणात् आरभ्य काव्यस्य विकासः प्रारब्धः। ततःपरं व्यासः महाभारतं विरचितवान्। भारतस्य तु पञ्चमवेदः इति ख्यातिः अस्ति। रामायणं महाभारतं च आश्रित्य सहस्त्रशः काव्यानि नैकैः कविभिः विरचितानि सन्ति। तेन काव्यलोकस्य महान् विकासः प्राप्तः। काव्यद्वारा जीवने कृत्याकृत्यविवेकं प्राप्नुमर्हाः अधिकाः सन्ति। तस्मात् काव्यस्य अत्यन्तं महत्त्वं वर्तते।



## पाठगतप्रश्नाः-३

१४. सरस्वत्याः द्वौ मार्गौ कौ।

१५. काव्यस्य प्रथमम् अस्तित्वं कुत्र उपलभ्यते।

१६. आत्मरूपस्य रथिनः बुद्धिः का।

१७. आदिकाव्यं किम्।

१८. काव्यवचनानां मार्गदर्शी कः।

१९. पञ्चमो वेदः कः।

२०. कान्तासम्मितं किम्।

२१. वाल्मीकिः लवकुशौ कुतः रामायणं पाठितवान्।

२२. काव्येन पुरुषार्थविवेकः कथं भवति।

२३. काव्ये आनन्दो नाम कः।





## पाठान्तप्रश्नाः

१. वेदस्य लक्षणं किम्।

२. वेदस्य भेदाः उपविभागाः च के के सन्ति।

३. ऋग्वेदस्य परिचयं कारयत।

४. वेदाङ्गानि परिचारयत।

५. पुराणस्य पञ्च लक्षणानि व्याख्यात।

६. अष्टादश पुराणानां नामानि कानि।

७. काव्यात्मकं मन्त्रं सान्वयं व्याख्यात।

८. काव्यं कान्तासम्मितम् इति सोदाहरणं निरूपयत।

९. काव्यं वेदात्, पुराणाच्च कथं विलक्षणम्।

१०. काव्यप्रयोजनानि कानि।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि-१**

१. यजुर्वेदे।

२. शिक्षा।

३. वेदमन्त्राणां पदानां अर्थनिरूपणं निरुक्ते भवति।

४. सामवेदः।

५. ऋग्वेदः।

६. वेदः।

७. वेदः कैश्चित् पुरुषैः विरचितः ग्रन्थो नास्ति अतः वेदः अपौरुषेयः।

८. षडङ्गो वेदः।

**उत्तराणि-२**

९. प्राचीनम् इत्यर्थः।

१०. वेदव्यासः।

११. पञ्च।

१२. मित्रसदृशम् इत्यर्थः।

१३. वराहपुराणं, वामनपुराणं, वायुपुराणं, विष्णुपुराणं च।



**उत्तराणि-३**

१४. वेदशास्त्रराशिः, काव्यं च ।

१५. वेदे।

१६. सारथिः।

१७. रामायणम्

१८. वाल्मीकिः

१९. महाभारतम्

२०. काव्यम्

२१. वेदार्थस्य उपबृंहणार्थम्

२२. रसास्वादपूर्वकम्

२३. रसः

---

॥ इति अष्टमः पाठः ॥

---





# काव्यशास्त्रप्रवेशः- २

## प्रस्तावना

कवेः कारयित्रीप्रतिभया समुद्भूतं कर्म भवति काव्यम्। तस्य च काव्यस्य विश्लेषणाय यस्य शास्त्रस्याविर्भावः तस्य अलङ्कारशास्त्रम् इत्यभिधानम्। कविकर्मणः काव्यस्य दर्पणभूतं भवति अलङ्कारशास्त्रम्। अलङ्कारशास्त्रोक्तेन मार्गेण काव्यस्य परिशीलनेन कविः कः, प्रतिभा का, काव्यस्य लक्षणं प्रकाराः च, काव्यम् उत्तमम् अधमं कीदृशं वा, सहृदयः कः, रसः कः, काव्ये कासां गुणालङ्काररीतीनामुपयोगः, वृत्तिस्वरूपं किम् इत्यादीनां विषयाणां ज्ञानं भवति। एवम् अलङ्कारशास्त्रज्ञः एव काव्यस्य उत्तमतया परिशीलने समर्थो भवति। काव्यानुशीलनाय संस्कृतसाहित्यपरम्परायां रचितेषु अलङ्कारशास्त्रेषु आनन्दवर्धनकृतो ध्वन्यालोकः, जगन्नाथकृतः रसगङ्गाधरः, मम्मटाचार्यकृतः काव्यप्रकाशः, दण्डिरचितः काव्यादर्शः, विश्वनाथकविराजकृतः साहित्यदर्पणः, राजशेखरकृता काव्यमीमांसा, अप्पय–दीक्षितकृतः कुवलयानन्दः इत्यादयः ग्रन्थाः अत्यन्तं प्रसिद्धाः।

अलङ्कारशास्त्रमिति नामकरणम् अतीव प्राचीनम्। यस्मिन् समये इदं नामकरणम् अभवत् तदा अलङ्काराणां बहुधा प्रसिद्धिः आसीत् इति केचन कल्पयन्ति। अथवा अलङ्कारशब्दः न हि करणे घञा उत्पन्नः, अपि तु भावे घञा उत्पन्नः। अलङ्करणम् अलङ्कारः इति। अलङ्करणं नाम सौन्दयम्। तेन गुणालङ्काररीत्यादीनां सर्वासां ग्रहणम् इति केचन। अत्र तेषां प्रमाणम् – “काव्यं ग्राह्यमलङ्कारात्” इति ”सौन्दर्यमलङ्कारः” इति च वचः। राजशेखरेण अलङ्कारशास्त्रमिति नाम्नः स्थाने साहित्यविद्या इति नाम स्वीकृतम्।

इदम् अलङ्कारशास्त्रं हि वैदिकलौकिकज्ञानाय अत्यन्तम् उपकारकं भवति। अत एतस्य राजशेखरेण वेदाङ्गत्वं स्वीकृतं – “पञ्चमी साहित्यविद्या इति यायावरीयः, सा च चतसृणां विद्यानां निष्यन्दरूपा।” इति।

अलङ्कारशास्त्रेषु प्रतिपादितानां केषाञ्चित् पारिभाषिकाणां शब्दानां परिचयाय अलङ्कारशास्त्रीयपदपरिचयः इति पाठस्याविर्भावः। अस्मिन् पाठे कविस्वरूपम्, कविभेदाः, प्रतिभास्वरूपम्, सहृदयस्वरूपम्, काव्यस्वरूपम्, काव्यस्य प्रयोजनानि, वृत्तिस्वरूपं तद्भेदाश्च, रसस्वरूपं तद्भेदाश्च समासेन वर्णिताः।





## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- कविस्वरूपं कविभेदान् च जानीयात्
- प्रतिभास्वरूपं जानीयात्।
- सहृदयस्वरूपं जानीयात्।
- काव्यस्वरूपं जानीयात्।
- काव्यप्रयोजनानि जानीयात्।
- वृत्तिस्वरूपं वृत्तिभेदांश्च जानीयात्।
- रसस्वरूपं रसभेदांश्च जानीयात्।

## ९.१) कविस्वरूपं कविभेदाश्च

**"अपारे काव्यसंसारे कविरेकः प्रजापतिः।**

**यथास्मै रोचते विश्वं तथेदं परिवर्तते॥"**

इति ध्वन्यालोककारस्य आनन्दवर्धनाचार्यस्य कविमाहात्म्यपरकं वचः तु सुप्रसिद्धमेव। कविः काव्यसंसारस्य प्रजापतिः भवति, स यथा निर्मातुम् इच्छति तथैव काव्यं निर्माति। स हि काव्यरसिकानां सहृदयानां परमादरणीयः। कवृ वर्णने इत्यस्माद्धातोः कविशब्दो निष्पन्नः। यः कवते स भवति कविः। कवते नाम वर्णयति इति। कीदृशं वर्णनं कविना क्रियते इति प्रश्नः समेषां मनसि उदेति। अत्रोत्तरं तावत् प्रत्यक्षीकृतस्य स्वप्रतिभया सरसया वाण्या कथनं भवति वर्णनम्। तादृशवर्णने एव कविः स्वयं रसास्वादं करोति अन्यान् कारयति च। प्रतिभा हि द्विविधा - कारयित्री भावयित्री च। तत्र कारयित्रीप्रतिभया एव कविः काव्यं निर्माति। काव्यनिर्माणाय प्रतिभया सह व्युत्पत्तिरपि अपेक्षते। कवेः काव्यरचनं न हि गगनकुसुमादिवत् मिथ्याभूतं भवति तत्र वास्तवार्थपर्यवसायित्वम् अवश्यं तिष्ठति। कविः वास्तविकार्थमेव लोकोत्तरचमत्कारसन्निवेशनेन वर्णयति। कविशब्दस्य सामान्यतः कारयित्रीप्रतिभावान् व्युत्पत्तिमान् वर्णयिता इत्यर्थः। तथाहि काव्यमीमांसायां राजशेखरः - "प्रतिभाव्युत्पत्तिमान् च कविः कविरित्युच्यते" इति। यास्काचार्यमते क्रान्तदर्शी इत्यर्थः।

काव्यमीमांसादिशा कविः त्रिविधो भवति शास्त्रकविः काव्यकविः उभयकविः चेति।

**क) शास्त्रकविः** - यः कविः शास्त्रीयविषयान् काव्यरूपेण प्रस्तौति स शास्त्रकविः। शास्त्रीयविषयाणां शास्त्रीयशैल्या निबद्धात् शास्त्रकविः काव्ये रससम्पद्विच्छेदं विदधाति। शास्त्रकविः पुना त्रिधा विभक्तो भवति - शास्त्रस्य रचयिता, शास्त्रे काव्यस्य निवेशयिता, काव्ये शास्त्रस्य निवेशयिता च।

**ख) काव्यकविः** - यः कविः वचोवैचित्र्येण शास्त्रस्थस्य तर्ककर्कशस्य अर्थस्य शैथिल्यं सम्पादयति स काव्यकविः। राजशेखरमते काव्यकविः अष्टधा विभक्तः - रचनाकविः, शब्दकविः, अर्थकविः, अलङ्कारकविः, उक्तिकविः, रस-कविः, मार्गकविः तथा शास्त्रार्थकविः।



**ग) उभयकविः –** यः कविः स्वानुभवस्य आधारेण शास्त्रीयं विषयं तथा प्रस्तौति यथा शास्त्रीयरूपेण सह काव्यरूपमपि धरति स उभयकविः।



## पाठगतप्रश्नाः – १

१. कविशब्दः कस्माद् धातोः उत्पन्नः?

२. कविमाहात्म्यपरकम् आनन्दवर्धनस्य किं वचः?

३. कविः कया प्रतिभया काव्यं निर्माति?

४. कविशब्दस्य यास्कनये अर्थः कः?

५. राजशेखरमते प्रतिभया सह किं काव्यनिर्माणाय अपेक्षते।

६. कवेर्लक्षणं किम्।

७. कविः कतिविधः।

८. शास्त्रकविः कः।

९. काव्यकविः कः।

१०. उभयकविः कः।

## १.२) प्रतिभा

सूर्यः यथा प्रकाशनशक्तिं विना किमपि प्रकाशयितुं न समर्थ एवमेव प्रतिभां विना कविः काव्यं स्रष्टुं न समर्थः। प्रतिभायाः प्रतिभानम् इत्यपि नामान्तरम्।प्रतिभास्वरूपं किमिति चेत् भट्टतौतः -

**"प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।"** इति।

नवीनानाम् अर्थानां प्रकाशनसमर्था प्रज्ञा भवति प्रतिभा। प्रज्ञायाः प्रकारभूता प्रतिभा। प्रतिभा काव्यस्य निर्माणे हेतुः इति भामहः।

आचार्यो वामनः काव्यालङ्कारसूत्रवृत्तिग्रन्थे आह -

**"कवित्वबीजं प्रतिभानम्"** इति। कवित्वस्य बीजं भवति प्रतिभानम्। प्रतिभां विना काव्यं नैव निष्पद्यते। निष्पन्नं च काव्यम् उपहासाय कल्पते न तु यशसे।

अभिनवगुप्ताचार्याणां मते -

**"अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा प्रतिभा"** इति। अर्थात् नूतनस्य विषयस्य संरचने समर्था प्रज्ञा भवति प्रतिभा।

जगन्नाथस्य नये - **"काव्यघटनानुकूलशब्दार्थोपस्थितिः प्रतिभा"** इति। काव्यघटनायां काव्यस्य निर्माणे अनुकूला शब्दार्थोपस्थितिः शब्दार्थयोः अनुकूलः विकाशो भवति प्रतिभा।



प्रतिभालक्षणं राजशेखरेण प्रोक्तं - **"या शब्दग्रामम् अर्थसार्थम् अलङ्कार-तन्त्रम् उक्तिमार्गम् अन्यदपि तथाविधम् अधिहृदयं प्रतिभासयति सा प्रतिभा।"** इति। प्रतिभा एका कविनिष्ठा विशेषशक्तिः या शब्दसमूहम् अर्थसमूहम् अलङ्कारशास्त्रम् उक्तिमार्गम् अन्यदपि काव्यतत्त्वं हृदये प्रतिभासयति। सा प्रतिभा राजशेखरमते कारयित्री भावयित्री चेति द्विविधा। तत्र कवेः काव्यरचनायाम् उपकारिका कारयित्री प्रतिभा। भावयित्री प्रतिभा तु काव्यस्यानुशीलने सहृदयानां भावुकानामुपकारिका।

एषा संस्कारजन्या प्रतिभा एव काव्यस्य कारणम् इति आलङ्कारिकाः। अत एव भामह आह -

**"काव्यं तु जायते जातु कस्यचित्प्रतिभावतः।"** इति।

व्युत्पत्तिः प्रतिभा च काव्यस्य कारणमिति राजशेखरः। अतस्तेनोक्तम् - **"प्रतिभाव्युत्पत्ती मिथः समवेते श्रेयस्यौ इति यायावरीयः"** इति। व्युत्पत्तिः नाम उचितानुचितविवेकः इति।

प्रतिभा व्युत्पत्तिः अभ्यासः इत्येतत्त्रयं काव्यकारणमिति मम्मटाचार्यः। अभ्यासो नाम निरन्तरं काव्यस्य निर्माणे अध्ययने वा प्रवृत्तिः। अतस्तेनोक्तं -

**"शक्तिर्निपुणता लोकशास्त्राद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाऽभ्यासः इति हेतुस्तदुद्भवे॥"** इति।

रुद्रटाचार्यमते अपि '**प्रतिभाव्युत्पत्त्याभ्यासाः काव्यहेतुः**' इति।

दण्डिनः मतमेवमेव –

**"नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम्।**
**अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः॥"** इति।

परन्तु -

**"अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।**
**यत्त्वशक्तिकृतस्तस्य स झटित्यवभासते॥"**

इति आनन्दवर्धनाचार्यस्य मतविश्लषणेन ज्ञायते प्रतिभाशक्तिरेव काव्यस्य हेतुः। एवं प्रतिभा काव्यनिर्माणे हेतुः तत्सहायकौ व्युत्पत्त्यभ्यासौ इति मतमेव समीचीनम्।



## पाठगतप्रश्नाः–२

११. भट्टतौतस्य मते प्रतिभा का।
१२. अभिनवगुप्ताचार्याणां मते प्रतिभा का।
१३. जगन्नाथनये प्रतिभालक्षणं किम्।
१४. राजशेखरनये प्रतिभालक्षणं किम्।
१५. राजशेखरनये प्रतिभा कतिविधा काश्च।



१६. व्युत्पत्तिः नाम का।

१७. अभ्यासः नाम कः।

१८. कानि काव्यस्य कारणानि मम्मटनये।

१९. वस्तुतः किं काव्यस्य कारणम्।

## ९.३) सहृदयः

सहृदयः भवति कविसमानहृदयः। कवेः काव्यं तदैव प्रतिष्ठां लभते यदा तत्काव्यं सहृदयहृदयम् आह्लादयति। कविवत् सहृदयस्यापि अस्ति महत्त्वम्। अत एव अभिनवगुप्तपादाः लोचनारम्भे कथयन्ति –

"सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते।" इति।

काव्यरूपायाः वाग्देव्याः कायस्य अंशद्वयं कविः सहृदयश्च। तत्र कवि प्रख्यावान् अर्थात् कारयित्रीप्रतिभावान्। सहृदयः उपाख्यावान् अर्थाद् भावयित्रीप्रतिभावान्। भावयित्री प्रतिभा एव कवेः श्रमम् अभिप्रायञ्च भावयति। अनया प्रतिभया एव कवेः व्यापारः सार्थक्यं याति। अन्यथा कवेः व्यापारस्तु वैफल्यमियात्। एवम् एतादृशभावयित्रीप्रतिभावान् सहृदय एव कविरचितस्य काव्यस्य आस्वादकः।

एतादृशस्य सहृदयस्य स्वरूपं लोचने आहुः अभिनवगुप्तपादाः – "येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयविषयतन्मयीभवनयोग्यता ते एव हृदयसंवादभाजः सहृदयाः।" इति। सर्वदा काव्यानुशीलनेन येषां मनः कविकाव्येषु तन्मयं भवति ते एव सहृदयाः भवन्ति। सहृदयः कविनिर्मितं काव्यं शृण्वन् तम्नयो भूत्वा कविसदृश एव रसमग्नो भवति। कविः काव्यरचनेन काव्यरसास्वादे स्वतन्त्रतां भजते। किन्तु सहृदयः कविवर्ण्यमानं शृण्वन् रसास्वादं करोतीति स काव्याधीनः। सहृदयस्य भावुकः, रसिकः, भावकः, सचेताः इत्यादीनि नामान्तराणि।



### पाठगतप्रश्नाः – ३

२०. सहृदयलक्षणं किम्।

२१. सरस्वत्याः तत्त्वद्वयं किम्।

२२. सहृदयः कीदृक्प्रतिभावान्।

२३. सहृदयस्य नामान्तराणि कानि।

## ९.४) काव्यम्

कवेः कर्म इत्यर्थे कविशब्दात् कर्मण्यर्थे "गुणवचनब्राह्मणदिभ्यः कर्म च" इति सूत्रेण ष्यञ्प्रत्यये काव्यशब्दो निष्पद्यते। कवेः कारयित्रीप्रतिभासमुद्भूतं कर्म भवति काव्यम्।



तस्य काव्यस्य किं लक्षणम् इति चेद् आलङ्कारिकैः काव्यस्य बहूनि लक्षणानि प्रोक्तानि। तत्राग्निपुराणे यथा -

"संक्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली।

काव्यं स्फुरदलङ्कारं गुणवद्दोषवर्जितम्॥" इति।

अर्थाद् इष्टार्थव्यवच्छिन्ना पदावली काव्यम् इति। इष्टार्थः नाम चमत्कृतिबहुलः लोकोत्तराह्लादजनकः अर्थः। तादृशव्यवच्छिन्नः पदसमूह एव काव्यम्। अत्र स्फुरदलङ्कारमित्यादिकं प्रशस्तिवचनं न तु स्वरूपकथनम्।

एतदेव दण्डिनोक्तं - "शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली।" इति।

आनन्दवर्धनाचार्यनये तु - "सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्य-लक्षणम्" इति। सहृदयानां हृदयानि आह्लादयतः यौ शब्दार्थौ तन्मयमेव काव्यम्।

भामहमते काव्यलक्षणं तावत् - "शब्दार्थौ सहितौ काव्यम्" इति। शब्दार्थौ सहितौ लोकोत्तरचमत्कारकारकधर्मेण संयुक्तौ भवति काव्यम्।

वामननये तु - "काव्यं ग्राह्यमलङ्कारात्। काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते। भक्त्या तु शब्दार्थमात्रवचोऽत्र लभ्यते।" इति। अत्रापि शब्दार्थयोरेव काव्यत्वं स्वीकृतम्।

आलङ्कारिकभोजनये तु - "निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्।" इति। दोषरहितं गुणवत् अलङ्कारालङ्कृतं वाक्यं भवति काव्यम्।

आचार्यमम्मटस्तु - "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति। दोषरहितौ गुणसहितौ सर्वत्र सालङ्कारौ क्वचिदलङ्कारविरहितौ अपि शब्दार्थौ काव्यम् इति।

जगन्नाथो रसगङ्गाधरे - "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इति। रमणीयः यः अर्थः तस्य प्रतिपादकः शब्दो भवति काव्यम्। रमणीयता नाम लोकोत्तर आनन्दः। रमणीयः नाम लोकोत्तरानन्दस्य जनकः। धनं ते दास्यामि पुत्रस्ते जातः इत्यादिवाक्यैः जन्य आनन्दो लौकिक एव भवति, न स लोकोत्तरः। एवं लोकोत्तरानन्दजनकस्य अर्थस्य प्रतिपादकः शब्दो वाक्यं भवति काव्यम् इति।

विश्वनाथकविराजो दर्पणे - "वाक्यं रसात्मकं काव्यम्" इति। रसाभावतदाभासाः आत्मानः यस्य तादृशं वाक्यं भवति काव्यम्।

ननु वाक्यं कीदृशं भवति इति चेदाह विश्वनाथः-

"वाक्यं स्याद्योगताकाङ्क्षासत्तियुक्तः पदोच्चयः।" इति। तादृशः पदोच्चयः पदसमूहः वाक्यं भवति यस्मिन् पदसमूहे योग्यता आकाङ्क्षा आसत्तिश्च तिष्ठति।

अत्र पदं नाम किमिति चेदुच्यते -

"वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः।" इति। प्रयोगार्हः अनन्वितैकार्थबोधकः वर्णसमूहः पदम्।



पदार्थानां परस्परसम्बन्धे बाधाभावः योग्यता। पदार्थानाम् अभिधादिभिः वृत्तिभिः पदप्रतिपाद्यमानानाम् अर्थानां परस्परसम्बन्धे परस्परान्वयबोधे बाधाभावः प्रतिबन्धकाभावः योग्यता। यथा - कृष्णो नगरं याति। किन्तु वह्निना सिञ्चति इत्यादौ परस्परसम्बन्धे वह्निना सेको न शक्यः इति बाधस्य सत्त्वात् योग्यताभावात् न वाक्यत्वम्।

पदानां पदान्तरसापेक्षता भवति आकाङ्क्षा। अत एव निराकाङ्क्षस्य गौः अश्वः पुरुषः इत्यस्य न वाक्यता।

आसत्तिर्नाम पदार्थोपस्थितेः अव्यवधानम्। तेन देवदत्तः इति पदस्य दिनान्तरोच्चारितेन गच्छतीति इत्यनेन सङ्गतौ वाक्यता न भवति।

एवं केचन भामहमम्मटादयः आलङ्कारिकाः शब्दार्थयोः प्राधान्येन, केचन दण्डि-जगन्नाथ-कविराजादयः च शब्दस्य प्राधान्येन काव्यलक्षणं प्रोक्तवन्तः। तत्र यथामति लक्षणं ग्राह्यम्। कारणं सर्वाणि एव लक्षणानि स्ववैशिष्ट्यं धारयन्ति।

तच्च काव्यं ध्वनिकाव्यं गुणीभूतव्यङ्ग्यं चेति द्विविधम्। ततः दृश्यश्रव्यभेदेन पुनः द्वैविध्यं तस्य। एवं तस्य भेदानां विषये अधिकज्ञानाय दर्पणादिग्रन्था द्रष्टव्याः।



## पाठगतप्रश्नाः – ४

२४. काव्यशब्दे कः शब्दः कः प्रत्ययश्च।

२५. काव्यशब्दनिष्पत्तौ किं सूत्रम्।

२६. अग्निपुराणोक्तं काव्यलक्षणं किम्।

२७. दण्डिप्रोक्तं काव्यलक्षणं किम्।

२८. भामहप्रोक्तं काव्यलक्षणं किम्।

२९. आनन्दवर्धनोक्तं काव्यलक्षणं किम्।

३०. जगन्नाथोक्तं काव्यलक्षणं किम्।

३१. मम्मटस्य काव्यलक्षणं किम्।

३२. विश्वनाथस्य काव्यलक्षणं किम्।

३३. वाक्यलक्षणं दर्पणनये किम्।

३४. पदलक्षणं दर्पणनये किम्।

३५. आकाङ्क्षा का।

३६. योग्यता का।

३७. आसत्तिः का।



## १.५) काव्यप्रयोजनम्

"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति उक्तिस्तु सुप्रसिद्धा एव। ननु एतादृशस्य काव्यस्य निर्माणे किं प्रयोजनम् इति प्रश्नः समेषां मनसि आयाति। तत्र काव्यतत्त्वज्ञा आलङ्कारिकाः बहुधा काव्यस्य प्रयोजनानि प्रोक्तवन्तः। तत्र काव्यप्रकाशकारस्य मम्मटाचार्यस्य इदं मतं तावत् -

**"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**

**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥"** इति।

यशसे, अर्थकृते, व्यवहारविदे, शिवेतरक्षतये, सद्यः परनिर्वृतये कान्तासम्मिततया उपदेशयुजे च काव्यं भवति। काव्यं कीर्तिं जनयति, अर्थं प्रददाति, व्यवहारज्ञानं च ददाति। काव्यद्वारा भगवन्नारायणादीनां पूजनेन शिवेतरस्य अमङ्गलस्य प्रशमनं भवति। काव्यं श्रवणेन ब्रह्मानन्दसहोदरं रसं जनयति। काव्यं भवति कान्तासम्मितं वचः। वेदाः प्रभुसम्मिताः भवन्ति। ते प्रभुवत् सत्यं वद धर्मं चरेत्यादिकम् उपदिशन्ति। परन्तु काव्यं प्रिया इव भवति। प्रिया अर्थाद् भार्या यथा मधुराभिः वाग्भिः भर्तुः कृत्याकृत्यविवेकं जनयति तथैव काव्यं सरसया शैल्या रामादिवद् वर्तितव्यम्, न रावणादिवत् इत्यादिकृत्याकृत्यविवेकं जनयति।

एवमेव विश्वनाथः कथयति -

**"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।**

**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते॥"** इति। चतुर्वर्गो नाम धर्मः अर्थः कामः मोक्षः। भगवन्नारायणस्तवादिना "एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति" इत्यादिना वचनेन च काव्याद् धर्मप्राप्तिः। अर्थप्राप्तिः तु यथा श्रीहर्षनाम्ना रत्नावलीनाटिकानिर्माणेन धावकः बहूनि धनानि लब्धवान्। कामप्राप्तिश्च धनैरेव भवति। मोक्षप्राप्तिः काव्यजन्यस्य धर्मादिफलस्य अनुसन्धानाभावात् भवति। किञ्च, मोक्षोपयोगिवाक्येषु व्युत्पत्तिकारकं भवति काव्यम्। एवं चतुर्वर्गफलप्रापकं काव्यम्।

एवमेवाह भामहाचार्यः -

**"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।**

**करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥"** इति।

चतुर्वर्गफलप्राप्तिः वेदादिशास्त्रेभ्यः नीरसतया भवति काव्यात् तु सरसतया इति काव्यस्य विशेषः। यतो हि रोगस्य प्रशमनं कटुकौषधेन भवतु इत्यस्यापेक्षया सितशर्करायोगेन एव सर्वे वाञ्छन्ति।

काव्यं धर्मादिसाधनोपायतया उत्कृष्टहेतुः। तथाह्याह अग्निपुराणे व्यासः -

**"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।**

**कवित्वं दुर्लभं लोके शक्तिस्तत्र सुदुर्लभा॥"** इति।

एवं समीक्षणेन आयाति यत् पुरुषार्थबोधः रसास्वादः चेति काव्यस्य मुख्यं प्रयोजनद्वयम्। बोधस्य रसास्वादस्य च मध्ये रसास्वाद एव काव्यस्य प्रधानं प्रयोजनम्। अत आह महिमभट्टः -



**"काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्।"** इति।



## पाठगतप्रश्नाः – ५

३८. मम्मटाचार्यनये काव्यप्रयोजनं किम्।

३९. विश्वनाथनये काव्यप्रयोजनं किम्।

४०. काव्यात् शिवेतरक्षतिः कथं भवति।

४१. भामहाचार्यनये काव्यं किं करोति।

४२. अग्निपुराणे काव्यविषय किमुक्तम्।

४३. काव्यस्य प्रयोजनद्वयं किम्।

४४. काव्यस्य सर्वापेक्षया किं मुख्यं प्रयोजनम्। तत्र च प्रमाणं किम्।

## ९.६) वृत्तिस्वरूपम्

शब्दः प्रतिपादकः भवति अर्थश्च प्रतिपाद्यो भवति। शब्दो हि त्रिविधः - वाचकः लाक्षणिकः व्यञ्जकश्चेति। शब्दस्य त्रैविध्याद् अर्थः अपि त्रिविधः - वाच्यः लक्ष्यो व्यङ्ग्यश्चेति। शब्दः येन व्यापारेण अर्थं बोधयति स व्यापारो वृत्तिः। एवञ्च शब्दनिष्ठः अर्थबोधको व्यापारविशेषो भवति वृत्तिः। वृत्तेः शक्तिः इत्यपि व्यवहारो विश्वनाथेन क्रियते। तत्र शक्तिः त्रिविधा - अभिधा लक्षणा व्यञ्जना चेति। तत्र कारिकामाह विश्वनाथः -

**"वाच्योऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।**

**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः॥"** इति।

एवं वाच्यार्थस्य प्रतिपादिका अभिधा, लक्ष्यार्थस्य प्रतिपादिका लक्षणा व्यङ्ग्यार्थस्य च प्रतिपादिका व्यञ्जना भवति।

### ९.६.१) अभिधास्वरूपम्

शब्दार्थस्य प्रतिपादिकासु शक्तिषु आद्या भवति - वाच्यार्थप्रतिपादिका अभिधा। अभिधालक्षणमाह विश्वनाथः -

**"तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा।"** इति।

तत्र तिसृषु शक्तिषु मध्ये सङ्केतितार्थस्य सङ्केत इच्छाविशेषः तस्य विषयस्य अर्थस्य बोधनात् कथनात् अभिधा अग्रिमा प्रथमा भवति। सङ्केतितः नाम सङ्केतविषयः। सङ्केतो नाम कः इति चेदाह गदाधरभट्टाचार्यः -



"इदं पदमिमम् अर्थं बोधयतु इति अस्मात्पदाद् अयमर्थो बोद्धव्य इति वेच्छा सङ्केतरूपा वृत्तिः" इति।

एवमेव सङ्केतः स्वाभाविको व्यापार इति मीमांसकाः। सङ्केतादेव पदपदार्थयोः मध्ये नियतः वाच्यवाचकसम्बन्धः सिध्यति। वाच्यवाचकसम्बन्धसत्त्वादेव वह्निशब्दः समयरूपार्थं न बोधयति। एवं सामान्यतः सङ्केतितार्थो नाम वाच्यः शक्यो वा मुख्यार्थः। तस्य बोधनात् स्वज्ञानेन शाब्दबोधजननात् आद्या अभिधाशक्तिः।

तस्य सङ्केतग्रहस्य के उपायाः इति प्रश्नः समुदेति। सङ्केतग्रहस्य तत्र प्रसिद्धा कारिका तावत् -

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**

**वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥** इति।

तत्र व्याकरणादिभ्यः सङ्केतग्रहस्य क्रमश उदाहरणानि प्रस्तूयन्ते -

क) व्याकरणात् सङ्केतग्रहस्य उदाहरणं - पाचकः इति। अत्र पच्धातोः कर्तरि ण्वुल्प्रत्ययेन पाचकशब्दस्य पाककर्तरि सङ्केतबोधः भवति।

ख) उपमानात् सङ्केतग्रहस्य उदाहरणं - गोसदृशो गवयः इति। गोसदृशः गवयः इत्युपमानाद् गवयदर्शनेन अयं गोसदृशः अतः गवयपदवाच्यः इति सङ्केतग्रहो भवति।

ग) "विष्णुर्नारायणः कृष्णः" इत्यमरकोशात् नारायणादिशब्दानां विष्णौ सङ्केतो गृह्यते।

घ) "अयम् अश्वशब्दवाच्यः" इत्याप्तवाक्यात् बालः अयं पशुः अश्वशब्दबोध्यः इति सङ्केतमवधारयति।

ङ) व्यवहारतः सङ्केतग्रहो यथा - उत्तमवृद्धेन मध्यमवृद्धम् उद्दिश्य गामानय इति उक्तम्। तदा मध्यमवृद्धः गाम् आनयति। तं गवानयनप्रवृत्तं दृष्ट्वा बालकः वाक्यस्य सास्नादिमत्पिण्डानयनमर्थः इति जानाति। ततः गां बधान इत्युक्ते मध्यमवृद्धः गां बध्नाति। एवम् आवापोद्वापाभ्यां बालकः गोशब्दस्य सास्नादिमान् अर्थः इति सङ्केतम् अवधारयति।

च) वाक्यशेषात् सङ्केतग्रहो यथा - "यवमयश्चरुर्भवति" इति श्रुतौ यवशब्दस्य दीर्घशूके प्रियङ्गौ वा प्रयोग इति संशयः। तत्र -

"वसन्ते सर्वशस्यानां जायते पत्रशातनम्।

मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥" इति विध्यर्थकाकाङ्क्षायाः प्रवर्तमानाद् वाक्यशेषात् दीर्घशूके यवशब्दस्य सङ्केतग्रहः।

छ) विवृतिर्नाम विवरणम्। विवरणात् शक्तिग्रहो यथा - "हरिः वासुदेवः" इति। अत्र अश्वाद्यनेकार्थकतया हरिशब्दस्यार्थः क इति संशये वासुदेवः इति विवरणाद् हरिशब्दस्य वासुदेवे सङ्केतग्रहो भवति।



ज) सिद्धपदस्य सान्निध्यात् सङ्केतग्रहो यथा - "इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति" इति। मधुकरशब्दस्य भ्रमरः मधुमक्षिका वा अर्थ इति संशये कमलपदसान्निध्यात् मधुकरशब्दस्य भ्रमरे सङ्केतग्रहः।

स च सङ्केतः जातौ गुणे द्रव्ये क्रियायां च गृह्यते। अत आह दर्पणकारः -

"सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियादिषु।" इति।

## १.६.२) लक्षणास्वरूपम्

लक्ष्यार्थप्रतिपादिका भवति लक्षणा। तस्याः किं स्वरूपमिति चेदाह विश्वनाथः -

**"मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते।**

**रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता॥"** इति।

मुख्यार्थबाधे मुख्यार्थस्य अभिधाप्रतिपाद्यस्यार्थस्य बाधे रूढेः रूढिनिमित्तात् प्रयोजनात् प्रयोजननिमित्ताद् वा यया वृत्त्या तद्युक्तः मुख्यार्थसम्बन्धयुक्तः अन्यः अर्थः मुख्यार्थाद् भिन्नार्थः प्रतीयते ज्ञायते, असौ सा अर्पिता आरोपिता स्वाभाविकेतरा शक्तिः वृत्तिः लक्षणानामिका। वक्तुः प्रयोजननिमित्ताद् रूढिनिमित्ताद् वा मुख्यार्थस्य बाधो भवति।

एवम् इयं लक्षणा **रूढिमूला प्रयोजनमूला** चेति द्विविधा। तत्र रूढिः नाम प्रसिद्धिः। रूढिमूला यथा - कलिङ्गः साहसिकः इति। अत्र साहसिकत्वधर्मः चेतने एव सम्भवति। अचेतने कलिङ्गनामकदेशविशेषे न सम्भवतीति कलिङ्गशब्दस्य मुख्यार्थबाधः। तदा रूढिवशात् कलिङ्गशब्दः कलिङ्गदेशवासी इत्यर्थं लक्षणया प्रतिपादयति। तेन कलिङ्गदेशस्थः साहसिकः इत्यर्थः सम्भवति।

प्रयोजनमूलाया लक्षणाया उदाहरणं यथा गङ्गायां घोषः इति। अत्र गङ्गाशब्दस्य जलप्रवाहविशेषो मुख्यार्थः। तत्र घोषः ग्रामः नैव सम्भवतीति गङ्गाशब्दस्य जलप्रवाहरूपस्य मुख्यार्थस्य बाधः। ततो बाधितो गङ्गाशब्दो वक्तृतात्पर्यसिद्धये जलप्रवाहयुक्तं तीररूपमर्थं लक्षणया बोधयति। गङ्गानिष्ठाः शीतत्वपावनत्वादयः धर्माः घोषे अपि सन्ति इति प्रयोजनम्। अयं प्रयोजनभूतार्थो व्यञ्जनया प्रतिपाद्यते इति विशेषः।

द्विविधा च लक्षणा पुनः **उपादानलक्षणा लक्षणलक्षणा** चेति द्विविधा। तत्र उपादानलक्षणाया लक्षणम् -

**"मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये।**

**स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा॥"** इति।

यया लक्षणावृत्त्या वाक्यार्थे अन्वयसिद्धये मुख्यार्थस्य इतराक्षेपो मुख्यार्थनिष्ठधर्मभिन्नधर्माविच्छन्नस्य आक्षेपो भवति, मुख्यार्थस्य च ग्रहणं भवति सा उपादानलक्षणा। तस्या उदाहरणं यथा श्वेतो धावति इति। श्वेतशब्दस्य गुणवाचकत्वात् तस्य धावनक्रियायाम् अनन्वयात् मुखार्थबाधो भवति। तदा उपादानलक्षणया श्वेतशब्दस्य श्वेतवर्णविशिष्टः अश्वः इत्यर्थः स्वीक्रियते। ततः अश्वस्य श्वेतवर्णस्य च धावनक्रियायामन्वयः सिध्यति।



लक्षणलक्षणाया लक्षणम् -

**"अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।**

**उपलक्षणहेतुत्वादेषा लक्षणलक्षणा॥"** इति।

यया लक्षणावृत्त्या वाक्यार्थे परस्य मुख्यार्थभिन्नस्य अन्वयसिद्धये स्वस्य मुख्यार्थस्य अर्पणं त्यागो भवति उपलक्षणहेतुत्वात् स्वार्थत्यागप्रयोजकतया हेतुत्वाद् एषा लक्षणलक्षणा। तस्या उदाहरणं गङ्गायाः घोषः इत्येव। तत्र गङ्गापदस्य जलप्रवाहरूपार्थस्य सम्पूर्णतः त्यागात् तत्र उपलक्षणलक्षणा।

एवमेव लक्षणायाः सारोपा साध्यवसानाः इत्यादयः बहवः अवान्तरप्रकाराः सम्भवन्ति।

## ९.६.३) व्यञ्जनास्वरूपम्

व्यङ्ग्यार्थप्रतिपादिका भवति व्यञ्जना। तस्याः किं स्वरूपमिति चेदाह विश्वनाथः -

**"विरतास्वभिधाद्यासु ययार्थो बोध्यते परः।**

**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥"** इति।

**"शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः"** इति नयेन अभिधालक्षणादिवृत्तिषु स्वं स्वम् अर्थं प्रतिपाद्य विरतासु यया शक्त्या अपरः वाच्यार्थलक्ष्यार्थाभ्यां भिन्न एव अर्थो बोध्यते सा वृत्तिः शब्दस्य अर्थस्य प्रकृतिप्रत्ययादेश्च व्यञ्जनानामिका। एवं व्यञ्जना तु अभिधालक्षणादिसकलवृत्तिभ्यो व्यतिरिक्ता आलङ्कारिकप्रपञ्चे सुप्रसिद्धा नूतना काचन वृत्तिः।

यथा उदाहरणं - गतोऽस्तमर्कः इति। अत्र क्रीडन्तं बालकं प्रति पितुः उक्तौ गृहं गच्छ इत्यर्थो व्यञ्जनया बोध्यते। स च व्यङ्ग्यार्थो ध्वनिः प्रतीयमानार्थो गम्य इति च व्यवह्रियते।

एतादृशस्य अनुभवसिद्धस्य अर्थस्य प्रतिपादनाय एव व्यञ्जना वृत्तिः। तस्याः वृत्तेः आविर्भावः आनन्दवर्धनाचार्यस्य ध्वन्यालोकनामके ग्रन्थे प्रथमं दृश्यते।

सा च वृत्तिः - अभिधामूला लक्षणामूला चेति द्विविधा। तत्र अभिधामूलाया लक्षणं तावत् -

"अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।

एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया॥" इति।

अभिधया संयोगाद्यैः शब्दस्य संयोगाद्यैः एकस्मिन्नर्थे नियन्त्रिते, अन्यधीहेतुः व्यञ्जना अभिधामूला भवति।

संयोगाद्यैः इत्यत्रादिपदेन विप्रयोगादयः गृह्यन्ते। के शक्तिनियामकाः संयोगादयः इति चेत्कारिका -

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**

**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥**

**सामर्थ्यमौचिती देशो कालो व्यक्तिः स्वरादयः।**

**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥** इति।





शब्दार्थस्य अनवच्छेदे सति संयोगादयः तन्नियामकाः भवन्ति। संयोगादीनां क्रमेणोदाहरणानि प्रस्तूयन्ते -

क) संयोगे उदाहरणं तावत् सशङ्खचक्रो हरिः इति। हरिशब्दः विष्णुयमादिनानार्थवाचकः। परन्तु अत्र शङ्खचक्रसम्बन्धात् हरिशब्दो विष्णवर्थे नियम्यते।

ख) विप्रयोगे अशङ्खचक्रो हरिः इत्युदाहरणम्। हरिशब्दस्य नानार्थवाचकत्वे अपि शङ्खचक्रसहितस्य एव विप्रयोगात् हरिशब्दः विष्णवर्थे नियम्यते।

ग) साहचर्ये उदाहरणं तावद् भीमार्जुनौ इति। "अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः" इत्यादिकोषात् अर्जुनशब्दस्य पार्थः कार्तवीर्यार्जुनः वा इत्याद्यर्थसन्देहे भीमसाहचर्याद् अर्जुनः पार्थः।

घ) विरोधितायां कर्णार्जुनौ इत्युदाहरणम्। अत्रापि अर्जुनशब्दस्य नानार्थस्य कर्णेति विरुद्धपदसाहचर्यात् पार्थार्थे शक्तिः।

ङ) अर्थो नाम प्रयोजनम्। अर्थे भवच्छिदे स्थाणुं वन्दे इत्युदाहरणम्। स्थाणुशब्दस्य शङ्करप्रस्तरखण्डादिनानावाचकस्य भवच्छेदरूपप्रयोजनबलात् शङ्करार्थे शक्तिः।

च) प्रकरणे उदाहरणं भवति सर्वं जानाति देवः इति। अत्र देवपदेन सुरनृपयोः सन्देहे राजप्रकरणात् देवशब्दो नृपपरकः।

छ) लिङ्गं नाम धर्मः। अत्रोदाहरणं कुपितो मकरध्वजः इति। मकरध्वजशब्दस्य कामदेवसमुद्रवाचकस्य कोपरूपप्राणिधर्मात् लिङ्गात् कामदेवार्थे शक्तिः।

ज) अन्यशब्दसन्निधौ देवः पुरारिः इत्युदाहरणम्। पुरारिशब्दः खले महादेवे च वर्तते। अत्र देवपदसान्निध्यात् पुरारिशब्दस्य महादेवार्थेत शक्तिः नियम्यते।

झ) सामर्थ्ये उदाहरणं मधुना मत्तः पिकः इति। मधुशब्दः मद्यार्थे वसन्तार्थे च वर्तते। तत्र मद्येन पिकमदस्याप्रसिद्धत्वात् सामर्थ्यात् मधुशब्दः वसन्तवाचकः।

ञ) औचित्यामुदाहरणं तावत् यातु वो दयितामुखम् इति। मुखशब्दस्य नानार्थपरकस्य अत्र औचित्यात् सांमुख्ये शक्तिः।

ट) देशः नाम स्थानम्। अत्रोदाहरणं विभाति गगने चन्द्रः इति। चन्द्रशब्दः इन्द्रे कर्पूरे शशिनि च वर्तते। अत्र गगनरूपदेशात् चन्द्रशब्दस्य शशिनि शक्तिः नियम्यते।

ठ) काले दाहरणं निशि चित्रभानुः इति। चित्रभानुः सूर्यो वह्नि वा इति सन्देहे निशाकालात् चित्रभानुशब्दस्य वह्नौ शक्तिः नियम्यते।

ड) व्यक्तिर्नाम लिङ्गम्। तत्रोदाहरणं भाति रथाङ्गम् इति। रथाङ्गशब्दः चक्रपरकः चक्रवाकपक्षिपरकश्च। अत्र नपुंसकलिङ्गात् रथाङ्गशब्दस्य चक्रे शक्तिः नियम्यते। एवमेव स्वरादयः शब्दार्थस्य नियामका भवन्ति।

अभिधामूलाया उदाहरणं तावत्-

**दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयश्चेतसा**



**प्रोद्यद्राजकलो गृहीतगरिमा विश्वग्वृतो भोगिभिः।**

**नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां मतिं धारयन्**

**गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः॥** इति।

अत्र उमावल्लभः शिवः उमानामिकाया राजमहिष्याः स्वामी भानुदेवनृपो वा इति सन्देहे प्रकरणेन अभिधया उमावल्लभशब्दस्य उमानामिकाया राजमहिष्याः स्वामी भानुदेवनृपः इत्यर्थ आयाति। ततः अभिधामूलया व्यञ्जनया गौरीवल्लभः शिवः इत्यर्थः स्वीक्रियते। एवम् उमानामिकायाः राजमहिष्याः स्वामी भानुदेवः गौरीपतिः शिवः इव इति फलति।

लक्षणामूलाया व्यञ्जनाया उदाहरणं तावत् -

**"लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्।**

**यया प्रत्यायते सा स्याद् व्यञ्जना लक्षणाश्रया॥"** इति।

यस्य प्रयोजनस्य कृते लक्षणा उपास्यते तत् प्रयोजनं यय बोध्यते सा लक्षणामूला व्यञ्जना भवति।

यथा गङ्गायां घोषः इत्यत्र गङ्गाशब्दस्य गङ्गातीरे प्रयोजनलक्षणा। एवं लक्षणा विरता। लक्षणायां शीतत्वपावनत्वाद्यतिशयः प्रयोजनं भवति। सा प्रयोजनं व्यञ्जनया बोध्यते। अतो व्यञ्जना लक्षणामूला भवति।

इतः अपि शाब्दी आर्थी इत्यादयः व्यञ्जनाया नैके प्रकारा भवन्तीत्यलं विस्तरेण।

##  पाठगतप्रश्नाः – ६

४५. शब्दः कतिविधः, के च ते।

४६. अर्थः कतिविधः, के च ते।

४७. वृत्तिः नाम का।

४८. वृत्तेः कति भेदाः, के च ते।

४९. अभिधालक्षणं किम्।

५०. गदाधरनये सङ्केतः कः।

५१. सङ्केतः कुत्र कुत्र गृह्यते।

५२. लक्षणास्वरूपं किम्।

५३. रूढिमूलाया लक्षणायाः किमुदाहरणम्।

५४. प्रयोजनमूलाया लक्षणायाः किमुदाहरणम्।

५५. उपादानलक्षणा का।

५६. लक्षणलक्षणा का।



५७. उपादानलक्षणायाः किमुदाहरणम्।

५८. लक्षणलक्षणायाः किमुदाहरणम्।

५९. व्यञ्जनास्वरूपं किम्।

६०. व्यञ्जना सामान्यतः कतिविधा, के के।

६१. शक्तिनियामकप्रतिपादिकां कारिकां वर्णयत।

## ९.७) रसस्वरूपम्

काव्यस्य परमं प्रयोजनं रसास्वादः। स च रसः कः इति प्रश्नः समुदेति। अस्योत्तरं तावत् रस्यते आस्वाद्यते इति रसः। अर्थात् काव्यनाट्यादिकलासु परमास्वाद्यो हि रसः। अयमेव रसः काव्यात्मेति प्रतिष्ठितः। अस्यैव उन्मेषाय कवयः चेष्टन्ते। सहृदयाश्च अमुमेव काव्याध्ययनेन आस्वादयन्ति। "न हि रसादृते कश्चिदर्थः प्रवर्तते" इति भरतमुनिवचनं रसस्य काव्यात्मत्वं प्रतिष्ठापयति।

तस्य रसस्य स्वरूपपरकं सूत्रं तावद् - **"विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः"** इति। विभावस्य अनुभावस्य व्यभिचारिणः च संयोगात् रसस्य निष्पत्तिः।

को विभावः इति प्रश्ने उत्तरं तावद् विभाव्यन्ते लोकोत्तरत्वेन सहृदयहृदये आस्वादयोग्याः क्रियन्ते रत्यादिस्थायिभावाः येन स रामकृष्णादिः काव्ये निवेशितः सन् विभावः भवति। दर्पणे विभावलक्षणम्-

**रत्याद्युद्बोधकाः लोके विभावाः काव्यनाट्ययोः।** इति।

अनुभावः क इति चेद् अनुभावयति रत्यादीन् स्थायिनो भावान् इत्यनुभावः। अर्थाद् विभावादिगतचेष्टा अनुभावः। तल्लक्षणं दर्पणे -

**उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्।**

**लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः॥**इति।

को नाम व्यभिचरति अस्थिरतया तिष्ठति इति निर्वेदप्रभृतिः व्यभिचारिभावः। स्थिरतया वर्तमाने हि रत्यादौ निर्वेदादिः प्रादुर्भावतिरोभावाभ्याम् आभिमुख्येन चरति इति व्यभिचारिभावः भवति। व्यभिचारिणः तावत् - निर्वेदः, आवेगः, दैन्यम्, श्रमः, मदः, जडता, औग्र्यम्, मोहः, विबोधः, स्वप्नः, अपस्मारः, गर्वः, मरणम्, अलसता, अमर्षः, निद्रा, वहित्थः, औत्सुक्यम्, उन्मादः, शङ्का, स्मृतिः, मतिः, व्याधिः, सन्त्रासः, लज्जा, हर्षः, असूया, विषादः, धृतिः, चपलता, ग्लानिः, चिन्ता वितर्कश्च।

विभावानुभावव्यभिचारिणां संयोगे सति स्थायिभावः रसत्वं प्राप्नोति इति सूत्रस्याशयः। रतिशोकादिभावः रसत्वप्राप्तेः पूर्वपर्यन्तं स्थिरत्वेन एव तिष्ठति। अतः रतिशोकादिभावः स्थायिभावः इत्युच्यते लोके। स्थायिभावाः नव सन्ति ते तावत्-



**"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**

**जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च॥"** इति।

रसस्वरूपस्य व्याख्यानावसरे चत्वारो वादाः समुपलभ्यन्ते। ते तावत् - रसः उत्पद्यते इति भट्टलोल्लटस्य उत्पत्तिवादः, रसः अनुमीयते इति श्रीशङ्कुकस्य अनुमितिवादः, रसः भुज्यते इति भट्टनायकस्य भुक्तिवादः, रसः अभिव्यज्यते इति अभिनवगुप्तस्य अभिव्यक्तिवादः। एतेषु वादेषु अभिनवगुप्तस्य अभिव्यक्तिवादः एव विद्वद्भिः सिद्धान्तरूपेण स्वीकृतः।

एवं रससूत्रे अभिव्यक्तिवादानुसारेण निष्पत्तिः इत्यस्य अभिव्यक्तिः इत्यर्थः। एवं च सूत्रार्थो भवति - विभावस्य अनुभावस्य व्यभिचारिभावस्य च संयोगात् स्थायिभावः रसात्मना अभिव्यज्यते इति। अतः अभिव्यक्तिवादसमर्थकः विश्वनाथकविराज आह -

**"विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।**

**रसतामेति रत्यादिः स्थायिभावः सचेतसाम्॥"** इति।

वस्तुतस्तु चिन्त्यमाने रसाः आस्वाद्यन्ते इति तु प्रयोगो न भवति। यतो हि आस्वाद एव रसः। अत आह अभिनवगुप्तः - "रसाः प्रतीयन्ते इति तु ओदनं पचति इतिवद् व्यवहारः।" इति। रसस्य स्वरूपगर्भः आस्वादनप्रकारः प्रस्तुतो दर्पणकारेण-

**"सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।**

**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।**

**लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः**

**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥"** इति।

बाह्यमेयविमुखतापादकः कश्चन आन्तरो धर्मः सत्त्वम्। बाह्यमेयानि काव्याद्बहिर्भूतानि घटपटादीनि तेभ्यः विमुखतापादकः वैमुख्यप्रयोजकः धर्मः सत्त्वम्। तस्य उद्रेकात् एकः अखण्डः आनन्दस्वरूपः, अन्यज्ञेयपदार्थस्पर्शरहितः, आनन्दमयत्वाद् ब्रह्मसाक्षात्कारसदृशः, लोकोत्तरचमत्कारः प्राणो यस्य स रसः निजदेहवद् अभिन्नत्वेन कैश्चित् सहृदयैः आस्वाद्यते।

येषामेव भावानां लोके अनुभवः तेषामेव काव्ये लोकोत्तरतया अनुभवः। एतस्य कारणं भवति साधारणीकरणम्। विभावानुभावादिषु सहृदयानां मनः यथा यथा प्रवर्तते तथा तथा तन्मयता वर्धते। तदा रजस्तमसी अभिभूय बाह्यमेयविमुखतापादकस्य सत्त्वस्य उद्रेको जायते। तदा देशकालादिसकललौकिकोपाधिसम्बन्धानां क्षयः सहृदयस्य जायते। तदा विभावादयः साधारणाः निर्विशेषा भवन्ति। एष एव व्यापारः साधारणीकरणम्। तदा साधारणीकृतैः विभावादिभिः अभिव्यक्तः रत्यादिः स्थायिभावः रसत्वं प्राप्नोति। एवं साधारणीकृतविभावादिव्यक्तः स्थायिभावः रसः इत्यालङ्कारिकसमयः। पण्डितराजः जगन्नाथः "रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रस" इति भिन्नं मतं पुष्णाति। तस्य मतस्य दुरूहत्वात् नालोच्यते अत्र।

कति पुनः रसा भवन्तीति प्रश्ने स्थायिभावानां नवत्वात् नव रसा भवन्तीति उत्तरम्। ते च -



**"शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।**

**बीभत्सोऽद्भुत इत्यष्टौ शान्तोऽपि नवमो रसः॥"** इति।

तेषां रसानां स्थायिभावानां वर्णानां देवानां च तालिका अधः प्रस्तूयते -

| क्रमः | रसः | स्थायिभावः | देवता | वर्णः |
|---|---|---|---|---|
| १ | शृङ्गारः | रतिः | विष्णुः | श्यामः |
| २ | हास्यः | हासः | प्रमथगणः | श्वेतः |
| ३ | करुणः | शोकः | यमः | कपोतः |
| ४ | रौद्रः | क्रोधः | रुद्रः | रक्तः |
| ५ | वीरः | उत्साहः | महेन्द्रः | हेमवर्णः |
| ६ | भयानकः | भयम् | कालः | कृष्णः |
| ७ | बीभत्सः | जुगुप्सा | महाकालः | नीलः |
| ८ | अद्भुतः | विस्मयः | गन्धर्वः | पीतः |
| ९ | शान्तः | शमः | नारायणः | अतिधवलवर्णः |



## पाठगतप्रश्नाः–७

६२. रससूत्रं किम्।

६३. रसस्य चत्वारो वादाः कस्य कस्य के के।

६४. विभावलक्षणं किम्।

६५. अनुभावलक्षणं किम्।

६६. व्यभिचारिभावस्य लक्षणं किम्।

६७. रसविषये कस्य वादः सर्वापेक्षया श्रेष्ठः।

६८. अभिनवगुप्तमते रससूत्रस्यार्थः कः।

६९. दर्पणोक्ता रसाभिव्यक्तिकारिका।

७०. रसास्वादकारिकां लिखत।

७१. के न व्यापारेण विभावादयः निर्विशेषा भवन्ति।

७२. स्थायिभावस्य किं लक्षणम्।



७३. के स्थायिभावा भवन्ति।

७४. जगन्नाथस्य रसलक्षणं किम्।

७५. कति रसाः भवन्ति।

७६. शृङ्गारहास्यकरुणरसानां का का देवता।

७७. शृङ्गारहास्यकरुणरसानां के के वर्णाः।

७८. रौद्रवीरभयानकानां का का देवता।

७९. रौद्रवीरभयानकानां के के वर्णाः।

८०. बीभत्साद्भुतशान्तानां का का देवता।

८१. बीभत्साद्भुतशान्तानां के के वर्णाः।



## पाठसारः

काव्यस्य समीचीनतया परिशीलनाय काव्योपकारकतया निर्मितम् अलङ्कारशास्त्रम्। काव्यस्य दर्पणभूतं भवति अलङ्कारशास्त्रम्। अलङ्कारशास्त्रोक्तेन मार्गेण काव्यस्य परिशीलनेन एव काव्यस्य यथार्थं ज्ञानं भवति। काव्यानुशीलनाय संस्कृतसाहित्यपरम्परायां रचितेषु अलङ्कारशास्त्रेषु आनन्दवर्धनकृतो ध्वन्यालोकः, जगन्नाथकृतः रसगङ्गाधरः, मम्मटाचार्यकृतः काव्यप्रकाशः, दण्डिरचितः काव्यादर्शः, विश्वनाथकविराजकृतः साहित्यदर्पणः, राजशेखरकृता काव्यमीमांसा, अप्पय-दीक्षितकृतः कुवलयानन्दः इत्यादयः ग्रन्थाः अत्यन्तं प्रसिद्धाः।

काव्यरसिकानां सहृदयानां परमादरणीयः कविः काव्यसंसारस्य प्रजापतिः भवति। कवृ वर्णने इत्यस्माद्धातोः कविशब्दो निष्पन्नः। यः कवते स कविः। कविः स्वप्रतिभया सरसया वाण्या वर्णयति। प्रतिभा हि द्विविधा - कारयित्री भावयित्री च। तत्र कारयित्रीप्रतिभया एव कविः काव्यं निर्माति। कविः वास्तविकार्थमेव लोकोत्तरचमत्कारसन्निवेशनेन वर्णयति। एवं कविः सामान्यतः कारयित्रीप्रतिभावान् व्युत्पत्तिवान् वर्णयिता। काव्यमीमांसादिशा कविः त्रिविधो भवति शास्त्रकविः काव्यकविः उभयकविः चेति।

सूर्यः यथा प्रकाशनशक्तिं विना किमपि प्रकाशयितुं न समर्थ एवमेव प्रतिभां विना कविः काव्यं स्रष्टुं न समर्थः। तस्याः स्वरूपं - "प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।" इति भट्टतौतः। एवं प्रकारेण बहुभिः आलङ्कारिकैः प्रतिभाया बहूनि लक्षणानि प्रोक्तानि। राजशेखरमते सा प्रतिभा कारयित्री भावयित्री चेति द्विविधा। तत्र कवेः काव्यरचनायाम् उपकारिका कारयित्री प्रतिभा। भावयित्री प्रतिभा तु काव्यस्यानुशीलने सहृदयानां भावुकानामुपकारिका। प्रतिभा एव काव्यस्य कारणम् इति भामहः। व्युत्पत्तिः प्रतिभा च काव्यस्य कारणमिति राजशेखरः। व्युत्पत्तिः नाम उचितानुचितविवेकः इति। प्रतिभा व्युत्पत्तिः अभ्यासः इत्येतत्त्रयं काव्यकारणमिति मम्मटाचार्यः। अभ्यासो नाम निरन्तरं काव्यस्य निर्माणे



अध्ययने वा प्रवृत्तिः। रुद्रटस्य दण्डिनश्च नये अपि एतदेव। ध्वन्यालोकमतपर्यालोचनेन सिद्धान्तरूपेण इदं वक्तुं शक्यते यत् प्रतिभा एव काव्यस्य कारणम्। व्युत्पत्तिः अभ्यासश्च प्रतिभासहायकः।

भावयित्रीप्रतिभावान् सहृदयः। तस्य लक्षणमुक्तम् अभिनवगुप्तपादैः - "येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते एव कविहृदयसंवादभाजः संहृदयाः" इति।

ततः कविकर्म काव्यं वर्णितम्। तस्य काव्यस्य बहूनि लक्षणानि आलङ्कारिकैः प्रोक्तानि। तेषु वामनभामहमम्मटादयः शब्दार्थप्राधान्येन, केचन दण्डि-जगन्नाथ-कविराजादयः च शब्दस्य प्राधान्येन काव्यलक्षणं प्रोक्तवन्तः। अस्मिन् पाठे अग्निपुराणोक्तस्य, दण्डिप्रोक्तस्य, आनन्दवर्धनस्य, भामहस्य, वामनस्य, भोजस्य, मम्मटस्य, जगन्नाथस्य विश्वनाथकविराजस्य च काव्यलक्षणानि संगृहीतानि। तेषु विश्वनाथकविराजस्य "वाक्यं रसात्मकं काव्यम्" इत्यस्य वर्णनावसरे वाक्यस्वरूपं पदस्वरूपं च दृष्टम्। तत आकाङ्क्षा योग्यता आसत्तिश्च दृष्टा। तच्च काव्यं ध्वनिकाव्यं गुणीभूतव्यङ्ग्यं चेति द्विविधम्। ततः दृश्यश्रव्यभेदेन पुनः द्वैविध्यं तस्य इत्येवं काव्यं प्रतिपादितम्।

तस्य काव्यस्य प्रयोजनानि संगृहीतानि। मम्मटोक्तं विश्वनाथोक्तम् अग्निपुराणोक्तं च प्रयोजनमत्र संगृहीतम्। ततः सिद्धान्तरूपेण पुरुषार्थबोधो रसास्वादश्च काव्यस्य प्रयोजनमिति आगतम्। तत्रापि रसास्वाद एव परमं प्रयोजनम्।

शब्दनिष्ठः अर्थप्रतिपादको व्यापारविशेषो भवति वृत्तिः। सा च त्रिविधा - अभिधा लक्षणा व्यञ्जना चेति। तत्र वाच्यार्थबोधिका अभिधा, लक्ष्यार्थबोधिका लक्षणा, व्यङ्ग्यार्थबोधिका व्यञ्जना च भवति। तत्र अभिधा हि सङ्केतितार्थस्य बोधिका। सङ्केतस्तु जातौ गुणे द्रव्ये क्रियायां च गृह्यते। मुख्यार्थबाधे रूढेः प्रयोजनाद्वा मुख्यार्थसम्बद्धः अन्यार्थः यया बोध्यते सा अर्पिता शक्तिर्लक्षणा। सा हि रूढिमूला प्रयोजनमूला इति प्राधान्येन द्विविधा। ततः उपादानलक्षणा लक्षणलक्षणा इति चतुर्विधा। एवं लक्षणाया बहवि भेदाः सन्ति। व्यञ्जना तु अभिधाद्यासु विरतासु व्यङ्ग्यार्थप्रतिपादनाय प्रवर्तते। सा हि अभिधामूला लक्षणामूला चेति द्विविधा। अभिधामूलायाः प्रतिपादनावसरे शक्तिनियामकाः संयोगादयो वर्णिताः। एवं समासेन वृत्तिस्वरूपं प्रोक्तम्।

ततः रसस्वरूपं पर्यालोचितम्। तत्र रससूत्रस्य व्याख्यानकाले चत्वारो वादाः प्रोक्ताः। तेषु अभिनवगुप्तस्याभिव्यक्तिवादः सिद्धान्तभूतः। तत्र रससूत्रस्थानां विभावानुभावव्यभिचाराणां लक्षणानि प्रोक्तानि। ततः समीकरणं किमिति प्रोक्तम्। रसास्वादप्रकारः दर्पणकारिकादिशा प्रोक्तः। ततः स्थायिभावानां नवत्वात् नव रसाः प्रोक्ताः। तेषां सामान्यतः स्थायिभाव-वर्ण-देवतानां संग्रहरूपेण एका तालिका प्रस्तुता। एवं समासेन अस्य पाठस्य सारः प्रोक्तः।



## पाठान्तप्रश्नाः

१. कविस्वरूपं कविभेदान् च वर्णयत।



२. प्रतिभास्वरूपं वर्णयत।

३. काव्योत्पत्तौ हेतुविषये मतानि वर्णयत।

४. सहृदयस्वरूपं वर्णयत।

५. काव्यस्वरूपं वर्णयत।

६. वाक्यलक्षणं वर्णयत।

७. आकाङ्क्षा-योग्यता-आसत्तिलक्षणानि वर्णयत।

८. काव्यप्रयोजनानि च वर्णयत।

९. वृत्तिस्वरूपं प्रतिपाद्य एकां वृत्तिं प्रतिपादयत।

१०. अभिधां प्रतिपादयत।

११. लक्षणां वर्णयत।

१२. सङ्केतग्रहोपायान् वर्णयत।

१३. शक्तिनियामकान् वर्णयत।

१४. व्यञ्जनां वर्णयत।

१५. रसस्वरूपं वर्णयत।

१६. रससूत्रं पर्यालोचयत।

१७. रसभेदान् वर्णयत।

१८. कविशब्दः कस्माद् धातोः - क) कुधातोः, ख) कवृधातोः, ग) कव्धातोः।

१९. कविभेदेषु नास्ति - क) शास्त्रकविः ख) स्मृतिकविः ग) काव्यकविः घ) उभयकविः।

२०. कारयित्रीप्रतिभावान् कः – क) कविः ख) सहृदयः, ग) नायकः, घ) प्रतिनायकः।

२१. प्रख्या का - क) कारयित्रीप्रतिभा, ख) भावयित्रीप्रतिभा, ग) व्युत्पत्तिः, घ) अभ्यासः।

२२. काव्यस्य किं परमं प्रयोजनम् - क) यशोलाभः, ख) पुरुषार्थबोधः, ग) रसास्वादः, घ) व्यवहारज्ञानम्।

२३. गङ्गायां घोषः इत्यत्र का लक्षणा - क) रूढिमूला, ख) प्रयोजनमूला, ग) उपादानलक्षणा।



## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि-१

१. कविशब्दः कवृधातोः उत्पन्नः।

२. कविमाहात्म्यपरकम् आनन्दवर्धनस्य वचः-

“अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्तते॥” इति



३. कविः कारयित्रीप्रतिभया काव्यं निर्माति।

४. कविशब्दस्य यास्कनये क्रान्तदर्शी इत्यर्थः।

५. राजशेखरमते प्रतिभया सह व्युत्पत्तिः काव्यनिर्माणाय अपेक्षते।

६. कवेर्लक्षणं तावत् कारयित्रीप्रतिभावान् व्युत्पत्तिमान् वर्णयिता कविः।

७. कविः त्रिविधः - शास्त्रकविः, काव्यकविः उभयकविश्चेति।

८. यः कविः शास्त्रीयविषयान् काव्यरूपेण प्रस्तौति स शास्त्रकविः।

९. यः कविः वचोवैचित्र्येण शास्त्रस्थस्य तर्ककर्कशस्य अर्थस्य शैथिल्यं सम्पादयति स काव्यकविः।

१०. यः कविः स्वानुभवस्य आधारेण शास्त्रीयं विषयं तथा प्रस्तौति यथा शास्त्रीयरूपेण सह काव्यरूपमपि धरति स उभयकविः।

### उत्तराणि-२

११. भट्टतौतस्य मते तु - "प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।" इति।

१२. अभिनवगुप्ताचार्याणां मते तु - "अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा प्रतिभा" इति।

१३. जगन्नाथनये प्रतिभालक्षणं तु - "काव्यघटनानुकूलशब्दार्थोपस्थितिः प्रतिभा" इति।

१४. राजशेखरनये प्रतिभालक्षणं तु -

"या शब्दग्रामम् अर्थसार्थम् अलङ्कार-तन्त्रम् उक्तिमार्गम् अन्यदपि तथाविधम् अधिहृदयं प्रतिभासयति सा प्रतिभा।" इति।

१५. राजशेखरनये प्रतिभा द्विविधा - कारयित्री भावयित्री चेति।

१६. व्युत्पत्तिः नाम उचितानुचितविवेकः।

१७. अभ्यासः नाम निरन्तरं ग्रन्थस्याध्ययने संरचने वा व्युत्पत्तिः।

१८. प्रतिभा अभ्यासः व्युत्पत्तिश्च काव्यस्य कारणानि मम्मटनये।

१९. वस्तुतः प्रतिभा काव्यस्य कारणम्।

### उत्तराणि-३

२०. सहृदयलक्षणं तावत् -

"येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयविषयतन्मयीभवनयोग्यता ते एव हृदयसंवादभाजः सहृदयाः।" इति।

२१. सरस्वत्याः तत्त्वद्वयं कविः सहृदयश्च।

२२. सहृदयः भावयित्रीप्रतिभावान्।

२३. सहृदयस्य भावकः भावुकः रसिकः सचेताः इत्यादीनि नामान्तराणि।

### उत्तराणि-४

२४. काव्यशब्दे कविशब्दः ष्यञ्प्रत्ययश्च।

२५. काव्यशब्दनिष्पत्तौ "गुणवचनब्राह्मणदिभ्यः कर्म च" इति सूत्रम्।



२६. अग्निपुराणोक्तं काव्यलक्षणं तु -

"संक्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली।

काव्यं स्फुरदलङ्कारं गुणवद्दोषवर्जितम्॥" इति।

२७. दण्डिप्रोक्तं काव्यलक्षणं तु - "शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली।" इति।

२८. भामहप्रोक्तं काव्यलक्षणं तु - "शब्दार्थौ सहितौ काव्यम्" इति।

२९. आनन्दवर्धनोक्तं काव्यलक्षणं तु - "सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यलक्षणम्" इति।

३०. जगन्नाथोक्तं काव्यलक्षणं तु - "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इति।

३१. मम्मटस्य काव्यलक्षणं तु - "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति

३२. विश्वनाथस्य काव्यलक्षणं तु - "वाक्यं रसात्मकं काव्यम्" इति।

३३. वाक्यलक्षणं दर्पणनये तु - "वाक्यं स्याद्योगताकाङ्क्षासत्तियुक्तः पदोच्चयः।" इति।

३४. पदलक्षणं दर्पणनये तु "वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः।" इति।

३५. आकाङ्क्षा तु पदानां पदान्तरसापेक्षता भवति आकाङ्क्षा।

३६. योग्यता तु पदार्थानां परस्परसम्बन्धे बाधाभावः

३७. आसत्तिर्नाम पदार्थोपस्थितेः अव्यवधानम्।

**उत्तराणि-५**

३८. मम्मटाचार्यनये काव्यप्रयोजनं तु -

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।

सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥" इति॥

३९. विश्वनाथनये काव्यप्रयोजनं तु -

"चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।

काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते॥" इति।

४०. काव्यात् भगवन्नारायणादीनां पूजनेन शिवेतरक्षतिः भवति।

४१. भामहाचार्यनये तु

"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।

करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥" इति।

४२. अग्निपुराणे काव्यविषये उक्तं तु -

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा।

कवित्वं दुर्लभं लोके शक्तिस्तत्र सुदुर्लभा॥" इति।

४३. काव्यस्य प्रयोजनद्वयं तु पुरुषार्थबोधः रसास्वादश्च।

४४. काव्यस्य सर्वापेक्षया रसास्वादः मुख्यं प्रयोजनम्। तत्र च प्रमाणं तु -

"काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्।" इति महिमभट्टस्य वचः।

उत्तराणि-६



४५. शब्दः त्रिविधः - वाचकः लक्ष्यकः व्यञ्जकश्च।

४६. अर्थः त्रिविधः - वाच्यो लक्ष्यो व्यङ्ग्यश्च।

४७. शब्दनिष्ठः अर्थबोधको व्यापारविशेषो भवति वृत्तिः।

४८. वृत्तेः त्रयो भेदाः - अभिधा लक्षणा व्यञ्जना चेति।

४९. अभिधालक्षणं तु -“तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा।” इति।

५०. गदाधरनये सङ्केतः - “इदं पदमिमम् अर्थं बोधयतु इति अस्मात्पदाद् अयमर्थो बोद्धव्य इति वेच्छा सङ्केतरूपा वृत्तिः” इति।

५१. सङ्केतः जातौ गुणद्रव्यक्रियादिषु गृह्यते।

५२. लक्षणास्वरूपं तु - “मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते। रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता॥” इति।

५३. रूढिमूलाया लक्षणायाः कलिङ्गः साहसिकः इत्युदाहरणम्।

५४. प्रयोजनमूलाया लक्षणायाः गङ्गायां घोषः इत्युदाहरणम्।

५५. उपादानलक्षणाया लक्षणं तु -
“मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये।
स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा॥” इति।

५६. लक्षणलक्षणाया लक्षणं तु -
“अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।
उपलक्षणहेतुत्वादेषा लक्षणलक्षणा॥” इति।

५७. उपादानलक्षणायाः श्वेतो धावतीत्युदाहरणम्।

५८. लक्षणलक्षणायाः गङ्गायां घोषः इत्युदाहरणम्।

५९. व्यञ्जनास्वरूपं दर्पणे -
“विरतास्वभिधाद्यासु ययार्थो बोध्यते परः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥” इति।

६०. व्यञ्जना सामान्यतः द्विविधा अभिधामूला व्यञ्जनामूला चेति।

६१. शक्तिनियामकप्रतिपादिकं कारिकाद्वयं तु-
योगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशो कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ इति।

उत्तराणि-७

६२. रससूत्रं तु - “विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः” इति।

६३. रसस्य चत्वारो वादाः - रसः उत्पद्यते इति भट्टलोल्लटस्य उत्पत्तिवादः, रसः अनुमीयते इति



श्रीशङ्कुकस्य अनुमितिवादः, रसः भुज्यते इति भट्टनायकस्य भुक्तिवादः, रसः अभिव्यज्यते इति अभिनवगुप्तस्य अभिव्यक्तिवादः।

६४. विभावलक्षणं तु - रत्याद्युद्बोधकाः लोके विभावाः काव्यनाट्ययोः।इति।

६५. अनुभावलक्षणं तु -

उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्।
लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः॥ इति।

६६. व्यभिचारिभावस्य लक्षणं तु - स्थिरतया वर्तमाने हि रत्यादौ निर्वेदादिः प्रादुर्भावतिरोभावाभ्याम् आभिमुख्येन चरति इति व्यभिचारिभावः भवति।

६७. रसविषये अभिनवगुप्तस्य अभिव्यक्तिवादः सर्वापेक्षया श्रेष्ठः।

६८. अभिनवगुप्तमते तु रससूत्रस्यार्थः - विभावानुभावव्यभिचारिणां संयोगात् स्थायिभावस्य रसात्मना अभिव्यक्तिः इति।

६९. दर्पणोक्ता रसाभिव्यक्तिकारिका तु -

"विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।
रसतामेति रत्यादिः स्थायिभावः सचेतसाम्॥" इति।

७०. रसास्वादकारिका तु -

"सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।
लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥" इति।

७१. साधारणीकरणव्यापारेण विभावादयः निर्विशेषा भवन्ति।

७२. रतिशोकादिभावः रसत्वप्राप्तेः पूर्वपर्यन्तं स्थिरत्वेन एव तिष्ठति। अतः रतिशोकादिभावः स्थायिभावः इत्युच्यते लोके।

७३. स्थायिभावाः तावत् -

"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च॥" इति।

७४. जगन्नाथस्य रसलक्षणं तु भग्नावरणा चिदेव रसः।

७५. नव रसाः भवन्ति -

"शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्सोऽद्भुत इत्यष्टौ शान्तोऽपि नवमो रसः॥" इति।

७६. शृङ्गारहास्यकरुणरसानां यथाक्रमं विष्णुः प्रमथगणः यमश्च देवता।

७७. शृङ्गारहास्यकरुणरसानां यथाक्रमं श्यामः श्वेतः कपोतश्च वर्णाः।

७८. रौद्रवीरभयानकानां यथाक्रमं रुद्रः महेन्द्रः कालश्च देवता।



७९. रौद्रवीरभयानकानां यथाक्रमं रक्तः हेमवर्णः कृष्णश्च वर्णाः।

८०. बीभत्साद्भुतशान्तानां यथाक्रमं महाकालः गन्धर्वः नारायणः च देवता।

८१. बीभत्साद्भुतशान्तानां यथाक्रमं नीलः पीतः अतिधवलश्च वर्णाः।

॥ इति नवमः पाठः ॥



# १०

# काव्यशास्त्रप्रवेशः- ३

## प्रस्तावना

अलङ्कारशास्त्रीयपदपरिचयावसरे काव्यात्मनः रसस्य उत्कर्षकाः गुणालङ्काररीतयः उल्लेखयोग्या भवन्ति। अस्मिन् पाठे गुणस्वरूपं गुणभेदाः, रीतिस्वरूपं रीतिभेदाः, अलङ्कारस्वरूपम् अलङ्कारभेदाः च वर्ण्यन्ते। अलङ्कारभेदवर्णनावसरे केषाञ्चिद् बहुलतया प्रसिद्धानाम् अलङ्काराणां सोदाहरणं प्रतिपादनम् अस्मिन् पाठे विहितम्। ततः काव्यस्य सौन्दर्याधायकं भवति छन्दः। अतः छन्दसः सामान्यं स्वरूपम्। तस्मिन् प्रसङ्गे पद्यस्वरूपं पद्यभेदाश्च वर्णिताः। ततः केषाञ्चित् छन्दसां सोदाहरणं प्रतिपादनम् अस्मिम् पाठे विहितम्।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान् -

- गुणस्वरूपं गुणभेदांश्च जानीयात्
- रीतिस्वरूपं रीतिभेदांश्च जानीयात्।
- अलङ्कारस्वरूपम् अलङ्कारभेदांश्च जानीयात्।
- केषाञ्चित्प्रसिद्धानाम् अलङ्काराणां लक्षणानि जानीयात्।
- पद्यस्वरूपं पद्यभेदांश्च जानीयात्।
- केषांञ्चित् छन्दसां लक्षणानि जानीयात्।

## १०.१) गुणस्वरूपम्

काव्यस्य उत्कर्षहेतवः भवन्ति गुणालङ्काररीतयः। अत एवोक्तं दर्पणकारेण -

**"उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः॥"** इति।

काव्यस्य गुणाः शौर्यादिवत्, अलङ्काराः कटककुण्डलादिवत्, रीतयः अवयवसंस्थानविशेषवद् भवन्ति। ते हि देहेन इव शब्दार्थात्मककाव्यस्य आत्मभूतस्य रसस्य उत्कर्षका भवन्ति। अत एव ते काव्यस्यापि उत्कर्षहेतवः।



गुणाः शौर्यादिवत् भवन्ति। अर्थाद् आत्मनः उत्कर्षहेतुत्वात् शौर्यादयो यथा गुणपदवाच्या भवन्ति तथैव काव्ये प्राधान्यं भजमानस्य रसस्य धर्माः माधुर्यादयः रसव्यञ्जकपदसन्दर्भस्य काव्यस्य उपयोगिनः सन्तः गुणा भवन्ति। अत एवोक्तं दर्पणे गुणलक्षणम् -

**"रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा। गुणाः"** इति।

गुणाः त्रयः भवन्ति - **माधुर्यम्, ओजः प्रसादः** चेति।

**क) माधुर्यम् -** माधुर्यस्य लक्षणं तावत्-

"चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते।" इति।

चित्तस्य सहृदयहृदयस्य द्रवीभावमयः गलितप्रायत्वरूपः ह्लादः दुःखेन अग्रस्तः यः आनन्दविशेषः स मार्धुर्यगुणः भवति। अयं गुणः वाल्मीकिकालिदासादीनां काव्येषु दृश्यते। सम्भोगे करुणे विप्रलम्भे शान्ते च अयं गुणः क्रमाद् अधिकतया भासते। रेफडकारादिश्रुतिकटुवर्णरहिता वर्गान्त्यवर्णसहिततद्वर्गीयवर्णोपेता समास-त अल्पसमासा च मधुरा रचना एतस्य गुणस्य अभिव्यक्तौ निमित्तं भवति। यथा-

**अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः।**

**जनयन्ति मुहूर्यूनामन्तःसन्तापसन्ततीम्॥**इति।

अत्र प्रथमभागे वर्गस्थेन अन्तिमवर्णेन ङकारेण सहितः तद्वर्गीयः गकारः, द्वितीयभागे च वर्गस्थेन अन्तिमवर्णेन नकारेण सह तद्वर्गीयः तकारः माधुर्यस्याभिव्यक्तौ कारणम्।

**ख) ओजः -** ओजोगुणस्य लक्षणं तावत्-

**"ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते।"** इति।

सहृदयानां वीरादिरसास्वादसमये द्रवीभावप्रतिकूलचित्तविस्तारात्मकं दीप्तत्वम् ओजः भवति। वीरबीभत्सरौद्रेषु रसेषु क्रमशः गुणस्यास्य आधिक्यं भवति। अस्य गुणस्याभिव्यक्तिः श्रुतिकटुवर्णैः दीर्घसमासपदैः महाप्राणाक्षरैः सम्यग् भवति। यथा -

**चञ्चद्भुजभ्रमितचण्डगदाभिघात-**

**सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।**

**स्त्यानावनद्धघनशोणितशोणपाणि-**

**रुत्तंसयिष्यति कचांस्तव देवि भीमः॥**इति।

अत्र श्रुतिकटुवर्णानां ञ्च द्भु इत्यादीनां सम्मलेनात् दीर्घसमासपदानां सत्त्वाच्च ओजोगुणस्य सम्यगभिव्यक्तिर्भवति।

**ग) प्रसादः** - प्रसादस्य लक्षणं दर्पणे तावत् -

**"चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।**

**स प्रसादः समस्तेषु रसेषु रचनासु च॥"**इति।



अनलः यथा शुष्कम् इन्धनं शीघ्रं व्याप्नोति तथैव यः गुणः चित्तं शीघ्रं व्याप्नोति स प्रसादः इत्यच्यते। अयं प्रसादः सर्वेषु रसेषु रचनासु च वर्तते। श्रुतिमात्रेण अर्थबोधकाः शब्दाः प्रसादगुणस्य अभिव्यक्तौ निमित्तम्। उदाहरणं यथा-

**सूचीमुखेन सकृदेव कृतव्रणस्त्वं**
**मुक्ताकलाप लुठसि स्तनयोः प्रियायाः।**
**बाणैः स्मरस्य शतशो विनिकृत्तमर्मा**
**स्वप्नेऽपि तां कथमहं न विलोकयामि॥**इति।

एवं समासेन गुणः वर्णितः।



## पाठगतप्रश्नाः – १

१. काव्यस्य उत्कर्षहेतवः के भवन्ति।

२. गुणादयः कथं काव्यस्य उपकारकाः।

३. गुणस्वरूपं किम्।

४. कति गुणस्य भेदाः, के च ते।

५. माधुर्यस्य लक्षणं किम्।

६. माधुर्यस्याभिव्यक्तौ किं निमित्तम्।

७. माधुर्यगुणः केषु रसेषु भासते।

८. माधुर्यस्य एकमुदाहरणं देयम्।

९. ओजसो लक्षणं किम्।

१०. ओजसः अभिव्यक्तौ किं निमित्तम्।

११. ओजोगुणस्य केषु आधिक्यं भवति।

१२. ओजसः एकमुदाहरणं देयम्।

१३. प्रसादस्य लक्षणं किम्।

१४. प्रसादस्याभिव्यक्तौ किं निमित्तम्।

१५. प्रसादस्य एकमुदाहरणं देयम्।

## १०.२) रीतिस्वरूपम्

रीतयः अवयवसंस्थानिवशेषवत् इति आदावेव प्रतिपादितम्। इदानीं का नाम रीतिः इति चेदुक्तं दर्पणे -



**"पदसंघटना रीतिरङ्गसंस्थाविशेषवत्। उपकर्त्री रसादीनाम्"** इति।

शरीरे यथास्थानम् अवयवसन्निवेशविशेषवद् शब्दार्थशरीरे काव्ये माधुर्यादिगुणव्यञ्जकवर्णानां सन्निवेशो भवति रीतिः, सा परम्परया रसादीनां पोषिका भवति। एवं सा रीतिः दर्पणानुसारेण चतुर्विधा - वैदर्भी, गौडी पाञ्चाली लाटिका चेति। ध्वनिकारादीनाम् अभिप्रायेण तिस्र एव रीतयः, लाट्या नास्ति प्रयोजनम्। तथाप्यत्र तु दर्पणदिशा सामान्यतः चतसृणां परिचयः प्रदीयते।

**क) वैदर्भी** - माधुर्यगुणस्य अभिव्यञ्जकैः वर्णैः सुकुमारबन्धात्मिका समासरहिता स्वल्पसमाससहिता या रचना सा वैदर्भी रीतिः। तथाहि दर्पणे -

**"माधुर्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका।**

**अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते॥"** इति।

अर्थात् बाहुल्येन कोमलवर्णाः भवेयुः। एषा माधुर्यगुणाभिव्यञ्जकत्वात् शृङ्गारकरुणादिषु प्रयोक्तुं योग्या। यथा उदाहरणं-

**लताकुञ्जं गुञ्जन् मदवदलिपुञ्जं चपलयन्**

**समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्।**

**मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्**

**रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि॥**इति।

**ख) गौडी** - ओजःप्रकाशकैः वर्णैः समासबहुला उद्भटा पदयोजना भवति गौडी। अत उक्तं दर्पणे-

**"ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः। समासबहुला गौडी"** इति।

क्रोधादिप्रधानेषु रौद्रादिरसेषु इयं प्रयुज्यते। यथा -

**विकचकमलगन्धैरन्धयन् भृङ्गमालाः**

**सुरभितमकरन्दं मन्दमावाति वातः।**

**प्रमदमदनमाद्यद्यौवनोद्दामरामा-**

**रमणरभसखेदस्वेदविच्छेददक्षः॥**इति।

**ग) पाञ्चाली** - गौडीवैदर्भ्योः व्यञ्जकातिरिक्तैः वर्णैः, पञ्च षट् वा समस्तानि पदानि यत्र स बन्धः पाञ्चाली भवति। तथाहि दर्पणे -

**"वर्णैः शेषैः पुनर्द्वयोः। समस्तपञ्चषपदो बन्धः पाञ्चालिका मता।"** इति।

अत्रोदाहरणं तावत् -

**मधुरया मधुबोधितमाधवीसमृद्धिसमेधितमेधया।**

**मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥** इति।

**घ) लाटिका** - लाटिका रीतिस्तु दर्पणकाराभिमता। तथाहि दर्पणे तल्लक्षणम् -



**"लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरे स्थिता।"** इति।

अत्रोदाहरणं तावत् -

**अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्**

**उदयगिरवनालीबालमन्दारपुष्पम्।**

**विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्**

**कुपितकपिकपोलक्रोडताम्रस्तमांसि॥** इति।

एवं सामान्यतो रीतयः प्रोक्ताः।



## पाठगतप्रश्नाः – २

१६. रीतिस्वरूपं किम्।

१७. कति रीतेः भेदाः, के च ते।

१८. वैदर्भीरीतेः लक्षणं किम्।

१९. वैदर्भीरीतेः एकमुदाहरणं देयम्।

२०. गौडीरीतेः लक्षणं किम्।

२१. गौडीरीतेः एकमुदाहरणं देयम्।

२२. पाञ्चालीरीतेः लक्षणं किम्।

२३. पाञ्चालीरीतेः एकमुदाहरणं देयम्।

२४. लाटिकारीतेः लक्षणं किम्।

२५. लाटिकारीतेः एकमुदाहरणं देयम्।

२६. लाटिकारीतिः केषां मते नास्ति।

## १०.३) अलङ्कारस्वरूपम्

काव्यस्य उपकर्षकेषु अलङ्कारः अन्यतमो भवति। स हि कटककुण्डलादिवद् भवति। यथा हि कटकुण्डलादयः शरीरशोभातिशायिनः शरीरिण आत्मनः सौन्दर्यं वर्धयन्ति तथैव शब्दार्थात्मककाव्यस्य शोभाकराः अलङ्काराः तद्द्वारा काव्यात्मनः रसस्य उत्कर्षका भवन्ति। अलङ्कारलक्षणं दर्पणे-

**"शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।**

**रसादीनुपकुर्वन्तस्तेऽलङ्कारास्तेऽङ्गदादिवत्॥"** इति।

अलङ्क्रियते अनेन इत्यलङ्कारः इति बहवो वामनादय आलङ्कारिकाः चिन्तयन्ति। स हि अलङ्कारः काव्यशरीरभूतयोः शब्दार्थयोः लोकोत्तररमणीयतायाः सम्पादकः।





शब्दार्थयोः वैचित्र्याद् अलङ्कारः द्विविधः - शब्दालङ्कारः अर्थालङ्कारश्चेति। केचन आलङ्कारिकाः शब्दार्थालङ्कारः इति तृतीयं पक्षमपि समुद्भावयन्ति। अनुप्रासादयः शब्दालङ्काराः उपमारूपकादयः अर्थालङ्काराश्च भवन्ति। तेषु केचन अलङ्कारा अधः प्रस्तूयन्ते -

**क) शब्दालङ्कारः** - यस्मिन् अलङ्कारे शब्दस्य प्राधान्यं भवति सः अलङ्कारः शब्दालङ्कारः इत्युच्यते। शब्दालङ्कारेषु अनुप्रासः यमकम् वक्रोक्तिश्चात्र वर्ण्यते -

**१) अनुप्रासः** - स्वरवर्णानां वैषम्ये सत्यपि व्यञ्जनवर्णानां यत् चमत्कारि साम्यं तदेव अनुप्रासालङ्कारः। तल्लक्षणं यथा दर्पणे-

"अनुप्रासः शब्दसाम्यं वैषम्येपि स्वरस्य यत्।" इति।

स्वरवर्णानां तथा वैचित्र्यं न जनयति। अतः लक्षणे स्वरसादृश्यं न स्वीकृतम्। यथा अत्रोदाहरणं तावत् -

**आदाय वकुलगन्धानन्धीकुर्वन् पदे पदे भ्रमरान्।**

**अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः॥**इति।

पदे पदे, मन्दमन्दं, पावनः पवनः इत्यादौ व्यञ्जनवर्णानां साम्याद् अनुप्रासालङ्कारः। स चानुप्रासः पञ्चविधः – छेकानुप्रासः, वृत्त्यनुप्रासः, श्रुत्युनप्रासः, अन्त्यानुप्रासः लाटानुप्रासः चेति। तेषां विशेषाध्ययनाय साहित्यदर्पणः द्रष्टव्यः।

**२) यमकम्** - अर्थे सति स्वरव्यञ्जनसमूहस्य पृथगर्थकस्य तेनैव क्रमेण आवर्तनं भवति यमकम्। तथाहि लक्षणमाह विश्वनाथः -

**"सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।**

**क्रमेण तेनैवावृत्तिः यमकं विनिगद्यते॥"**इति।

स्वरव्यञ्जनसमूहस्य क्वचित् सार्थकत्वं क्वचिच्च निरर्थकत्वं भवति। तदेव प्रतिपादयितुं लक्षणे सत्यर्थे इति पदं प्रयुक्तम्। अत्र उदाहरणं तावत् -

**"नवपलाश-पलाश-वनं पुरः स्फुटपराग-परागत-पङ्कजम्।**

**मृदुल-तान्त--लतान्तमलोकयत् स सुरभिं सुरभिं सुमनोहरैः॥"**इति।

अस्मिन् श्लोके पलाश-पलाश, सुरभिं सुरभिम् इति स्वरव्यञ्जनसमूहस्य आवर्तनद्वयस्य सार्थक्यमस्ति। लतान्त-लतान्त इत्यत्र प्रथमस्य निरर्थकत्वमस्ति। परागपराग इत्यत्र द्वितीयस्य निरर्थकता भवति। एवमत्र स्वरव्यञ्जनसमूहस्य तनैव क्रमेण आवर्तनाद् यमकालङ्कारः।

**३) वक्रोक्तिः** - वक्रोक्त्यलङ्कारस्य लक्षणं प्राह विश्वनाथः साहित्यदर्पणे -

**"अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेत् यदि।**

**अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा॥"**इति।



अन्यस्य वक्तुः अन्यार्थकं अन्यतात्पर्यबोधकं वाक्यम् अन्यः श्रोता यदि श्रुत्वा श्लेषेण काक्वा वा अन्यथा वर्णयति तदा सा वक्रोक्तिः नामालङ्कारः। भिन्नकण्ठध्वनिः काकुः इत्युच्यते। सा वक्रोक्तिः सामान्यतः श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति द्विविधा भवति। तत्रोदाहरणं यथा -

**"के यूयं, स्थल एव सम्प्रति वयम्, प्रश्नो विशेषाश्रयः,**

**किं ब्रूते विहगः, स वा फणिपतिर्यत्रास्ति सुप्तो हरिः।**

**वामा यूयमहो विडम्बरसिकः कीदृक् स्मरो वर्तते**

**येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद्भ्रमः॥"** इति।

अत्र वक्ता के यूयम् इति वक्ता पृच्छति। तदा श्रोता के इत्यस्य जले इत्यर्थं श्लेषेण कल्पयति। ततः कथयति - स्थले एवं वयं सम्प्रति इति। तत्र विरक्तः प्रथमवक्ता कथयति - प्रश्नो विशेषाश्रयः इति। अर्थाद् व्यक्तिविशेषमाश्रित्य प्रश्नः। श्रोता श्लेषेण विः इत्यस्य विहगपरकत्वं शेष इत्यस्य चानन्तपरकत्वं गृहीत्वा कथयति- किं ब्रूते स विहगः स वा फणिपतिर्यत्रास्ति सुप्तो हरिः इति। एवम्प्रकारेण श्लेषेण वक्तुः अन्यतात्पर्यकस्य वाक्यस्य अन्यतात्पर्यकत्वेन श्रोत्रा अत्र कल्पनाद् वक्रोक्तिरलङ्कारः। एवं सामान्यतया शब्दालङ्कारत्रयं प्रस्तुतम्।

**ख) अर्थालङ्कारः** - अर्थवैचित्र्यात् यः अलङ्कारः भवति सः अर्थालङ्कारः। अर्थालङ्कारेषु प्रवेशाय उपमा, रूपकम्, उत्प्रेक्षा, दृष्टान्तः, समासोक्तिः इत्येते अर्थालङ्कारा अत्र प्रस्तूयन्ते -

**१) उपमा** - अर्थालङ्कारेषु सादृश्यमूलकानाम् अलङ्काराणां जननी भवति उपमा। तस्या लक्षणं दर्पणे प्रस्तुतम् -

**"साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः।"** इति।

वाक्यैक्ये वाक्यस्य एकत्वे सति द्वयोः उपमानोपमेययोः मध्ये अवैधर्म्यं विरुद्धधर्मोक्तिशून्यं वाच्यम् अभिधया प्रतिपाद्यं यत् साम्यं साधारणधर्मरूपसादृश्यं तदेव उपमा। ययोः सादृश्यं गृह्यते तत्र यस्य सादृश्यम् तद् उपमानम्। यत्र सादृश्यं तच्च उपमेयं भवति। यथा मुखं चन्द्र इव। चन्द्रस्य सादृश्यम् अतः चन्द्र उपमानम्। मुखे सादृश्यम् अतः मुखम् उपमेयं भवति।

अत्र लक्षणे वाच्यमिति पदस्य उपादानात् रूपकालङ्कारस्य निरासः। यतो रूपके साम्यं व्यङ्ग्यं भवति। एवमेव अवैधर्म्यम् इति पदेन व्यतिरेकस्य निरासः। कारणं हि व्यतिरेके साधर्म्येण सह वैधर्म्यमपि उच्यते। वाक्यैक्ये इति पदस्य उपादानाद् उपमेयोपमायाः निरासो भवति। यतो हि उपमेयोपमायां वाक्यद्वयं भवति। द्वयोः इति पदोपादानाद् अनन्वयस्य निरासः, तत्र एकस्यैव साम्यकथनात्।

अस्यालङ्कारस्य पूर्णोपमा लुप्तोपमा इति भेदद्वयमस्ति। यस्याम् उपमायां उपमेयम् उपमानं साधारणधर्मः सादृश्यवाचकश्च अभिधया प्रतिपाद्यते सा पूर्णोपमा भवति। एवम् अंशचतुष्टयसम्पन्ना पूर्णोपमा। पूर्णोपमाया उदाहरणं तावद् -

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**

**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥**इति।



अत्र वागर्थौ इत्युपमानम्, पार्वतीपरमेश्वरौ इत्युपमेयम्, इवेति सादृश्यवाचकशब्दः सम्पृक्तत्वरूपः साधारणधर्मो वर्तते इति पूर्णोपमा।

यस्याम् उपमायाम् उपमेयम् उपमानं साधारणधर्मः सादृश्यवाचकश्च इत्यंशचतुष्टये एकस्य द्वयोः त्रयाणां वा अनुपादानं भवति सा लुप्तोपमा। अत्रोदाहरणं यथा -

**मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये।**

**वाचः सुधा इवोष्ठस्ते बिम्बतुल्यो मनोऽश्मवत्॥**इति।

अत्र यथाक्रमम् आनन्दयति, कोमलः, मधुराः, कठिनमिति साधारणधर्मवाचकानां शब्दानाम् अनुपादानात् लुप्तोपमा। सा च श्रौती आर्थी इत्यादिभेदेन बहुविधतां याति। तत्सर्वं दर्पणादिषु द्रष्टव्यम्।

**२) रूपकम्** - अभेदप्रधानो भवति रूपकालंकारः। तल्लक्षणं तावद् दर्पणे -

**"रूपकं रूपितारोपाद्विषये निरपह्नवे।"** इति।

अपह्नवो नाम प्रकृतगोपनम्। निरपह्नवे गोपनरहिते विषये उपमेये रूपितस्य उपमानस्य आरोपात् सादृश्यातिशयमहिम्ना अभेदेन वर्णनाद् रूपकालङ्कारः। अर्थात् रूपकालङ्कारे उपमानोपमेययोः अभेदः प्रतिपाद्यते। मुखं चन्द्र इव इत्युपमा, मुखं चन्द्रः इति रूपकम्। अत्रोदाहरणं यथा -

**पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः।**

**त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः॥** इति।

अत्र त्रैलोक्यम् हरिबाहवः इत्युपमेयद्वयम्। मण्डपः स्तम्भाः इत्युपमानद्वयम्। अत्र त्रैलोक्यमेव मण्डपः, हरिबाहवः एव स्तम्भाः इति अभेदेन वर्णनाद् रूपकालङ्कारः। तच्च रूपकं परम्परितं निरङ्गं साङ्गं चेति भेदेन त्रैविध्यं याति। विशेषतया भेदज्ञानाय दर्पणादिग्रन्था द्रष्टव्याः।

**३) उत्प्रेक्षा** - सम्भावनात्मकः उत्प्रेक्षालङ्कारः। तस्य लक्षणं तावद् दर्पणे-

**"भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना।"** इति।

प्रकृतस्य प्रस्तुतस्य परात्मना सदृशतया उपकल्पितार्थरूपेण सम्भावना भवति उत्प्रेक्षा। मन्ये शङ्के ध्रुवं प्रायः इव इत्यादयः उत्प्रेक्षावाचकाः भवन्ति। तदुदाहरणं यथा-

**ज्ञान मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।**

**गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव॥**इति।

अत्र प्रस्तुतेषु गुणेषु सप्रसवत्वस्य सम्भावनाद् उत्प्रेक्षालङ्कारः। गुणानां सप्रसवत्वं न हि वास्तविकम्।

अस्यालङ्कारस्य वाच्या प्रतीयमाना इत्यादयः भेदाः सन्ति। तेषां ज्ञानाय दर्पणादिग्रन्था द्रष्टव्याः।

**४) दृष्टान्तः** – दृष्टान्तालङ्कारः तु समर्थ्यसमर्थकभावमूलकः अलङ्कारः। साहित्यदर्पणे दृष्टान्तालङ्कारस्य लक्षणं प्राह-

**"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्॥"**इति।



द्वयोः वाक्ययोः मध्ये सधर्मस्य समानधर्मविशिष्टस्य वस्तुनः सामान्यधर्मस्य प्रतिबिम्बनं प्रतिबिम्बभावेन वर्णनं भवति दृष्टान्तालङ्कारः। प्रतिबिम्बनं नाम प्रणिधानगम्यं भवति साम्यम्। अर्थाद् अभिधया सादृश्यं न बुध्यते, अपि तु अवधानेन गम्यते। यथा अत्रोदाहरणम् -

**"अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।**

**अनधिगतपरिमलापि हि हरति दृशं मालतीमाला॥"** इति।

अविदितगुणा अपि सत्कविभणितिः कर्णेषु मधुधारां वमति इति वाक्यस्य समर्थनम् अनधिगतपरिमला अपि हि मालतीमाला दृशं हरति इति वाक्यं समर्थकं भवति। वाक्यद्वये वमनम् हरणञ्च इति साधारणधर्मद्वयम्। अत्र सादृश्यवशादेव सामान्यधर्मयोः बिम्बप्रतिबिम्बभावो विद्यते इति दृष्टान्तालङ्कारस्य लक्षणसमन्वयः।

**५) समासोक्तिः –** कविराजः विश्वनाथः साहित्यदर्पणनामके ग्रन्थे समासोक्त्यलङ्कारस्य लक्षणं प्राह –

**"समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः।**

**व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥"** इति।

समानेन कार्येण लिङ्गेन विशेषणेन वा प्रस्तुते विषये अन्यस्य अप्रस्तुतस्य वस्तुनः विषयस्य यत्र व्यवहारसमारोपः सा समासोक्तिः। अत्रोदाहरणं यथा -

**"असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः।**

**अनाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः॥"** इति।

यस्य जयेच्छा न पूर्णा तादृशस्य नीतिज्ञस्य पुरुषस्य रमणीसम्भोगस्य स्पृहा कथं सम्भवति इति प्रथमवाक्यार्थः। अत्र प्रस्तुतः नायक नायिका च। द्वितीयस्य च वाक्यस्यार्थो भवति सूर्यः अखिलं जगत् अनाक्रम्य सन्ध्यया साकं न मिलति। अस्मिन् श्लोके नायके सूर्यस्य नायिकायां सन्ध्यायाः च व्यवहारसमारोपात् समासोक्तिरलङ्कारः। अत्र समारोपे लिङ्गसाम्यं कारणं भवति। रवेः नायकस्य च पुंलिङ्गत्वात् नायके रविव्यवहारस्य, सन्ध्या–नायिकयोः स्त्रीलिङ्गत्वात् नायिकायां सन्ध्याव्यवहारस्य समारोपः भवति।

एवं सामान्येन अर्थालङ्कारपञ्चकं वर्णितम्।



## पाठगतप्रश्नाः – ३

२७. अलङ्कारलक्षणं किम्।

२८. अलङ्कारः कतिविधः कानि च।

२९. अनुप्रासस्य लक्षणं किम्।

३०. अनुप्रासस्य कति भेदाः के च ते।



३१. यमकस्य किं लक्षणम्।

३२. यमकस्य उदाहरणं किम्।

३३. सत्यर्थे इति पदं यमकलक्षणे किमर्थम्।

३४. वक्रोक्तेः किं लक्षणम्।

३५. वक्रोक्तेः भेदाः के।

३६. सादृश्यमूलकालङ्कारस्य जननी का।

३७. उपमालक्षणं किम्।

३८. उपमा कतिविधा, के च ते।

३९. पूर्णोपमाया अंशचतुष्टयं किं किम्।

४०. रूपकस्य लक्षणं किम्।

४१. रूपकस्य कति भेदाः के च ते।

४२. उत्प्रेक्षालङ्कारस्य लक्षणं किम्।

४३. दृष्टान्तस्य लक्षणं किम्।

४४. दृष्टान्तस्य उदाहरणं किम्।

४५. प्रतिबिम्बनं नाम किम्।

४६. समासोक्तेः लक्षणं किम्।

## १०.४) छन्दस्स्वरूपम्

काव्यस्य अनुशीलनाय छन्दसां ज्ञानम् अनिवार्यम्। तस्य च छन्दसः विकासः सर्वप्रथमं वेदेषु परिलक्ष्यते। छन्दसां ज्ञानं विना वेदमन्त्राः साधु उच्चारयितुं न शक्यन्ते। अतो वेदस्योपकारकतया इदं पादस्थानीयं भवति वेदाङ्गम्। किं नाम छन्दः इति चेदाम्नातम् ऐतरेयारण्यके - "मानवान् पापकर्मभ्यः छादयन्ति छन्दांसि इति छन्दः।" इति। व्याकरणाचार्यस्य महर्षेः पाणिनेः मते तु छन्द्-धातोः छन्दःशब्दस्य व्युत्पत्तिः। छन्दांसि यत्रोपनिबद्धानि तत् छन्दःशास्त्रं भवति। अस्य शास्त्रस्य प्रथमग्रन्थः पिङ्गलमहर्षिणा विरचितं पिङ्गलच्छन्दःसूत्रम् इति।

**क) पद्यविभागः** - छन्दोबद्धं पद्यं हि पादचतुष्टयात्मकं भवति। तच्च पद्यं वृत्तपद्यं जातिपद्यं चेति द्विविधम्। तथाह्युक्तं छन्दोमञ्जुर्याम्-

**"पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा।**

**वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्॥"** इति।

अक्षरैः परिगणितं पद्यं वृत्तपद्यम्। मात्रया परिगणितं जातिच्छन्दः। मात्रा त्रिविधा भवति। ताश्च एकमात्रा, मात्राद्वयम् मात्रात्रयञ्च। तत्र ह्रस्वस्य एका मात्रा, दीर्घस्य मात्राद्वयम् प्लुतस्य च मात्रात्रयम्।



वृत्तं समवृत्तम् अर्धसमवृत्तं विषमवृत्तं चेति त्रिविधम्। यस्य वृत्तस्य पादचतुष्टये गुरुलघुक्रमेण समानसंख्यकम् अक्षरं विद्यते तत् समवृत्तम्। इन्द्रवज्रा, मालिनी, वसन्ततिलकम् इत्यादीनि उदाहरणानि। यस्य वृत्तस्य प्रथमपादः तृतीयपादतुल्यः चतुर्थपादः द्वितीयपादतुल्यः तद् अर्धसमवृत्तम्। पुष्पिताग्रा, सुन्दरी, मालभारिणी इत्यादीनि एतस्य उदाहरणानि। यस्य वृत्तस्य पादचतुष्टयं भिन्नाक्षरविशिष्टं भवति तद् विषमवृत्तम्। उद्गता, सौरभकः इत्यादीनि अत्रोदाहरणानि। तथाह्युक्तं छन्दोमञ्जर्याम् -

**"समं समचतुष्पादं भवत्यर्धसमं पुनः॥**

**आदिस्तृतीयवद् यस्य पादस्तुर्यो द्वितीयवत्।**

**भिन्नचिह्नचतुष्पादं विषमं परिकीर्तितम्।"**इति।

**ख) पद्योपकारकाः गणाः -** समवृत्तच्छन्दसि ये गणा उपयुज्यन्ते ते अक्षरगणा भवन्ति। ते हि - मगणः, यगणः, रगणः, सगणः, तगणः, जगणः, भगणः, नगणः, गगणः, लगणः इत्येते दश गणाः। एते समवृत्तस्य उपकारका गणा भवन्ति। एतेषु मगणाद् आरभ्य नगणपर्यन्तं ये गणाः ते अक्षरत्रयेण निर्मिता भवन्ति। गगणः लगणश्च एकाक्षरविशिष्टः। अत्र अक्षरशब्दः स्वरवर्णस्यैव बोधकः। छन्दोमञ्जर्यां गणलक्षणानि प्रोच्यन्ते -

**"मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः।**

**जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥**

**गुरुरेको गकारस्तु लकारो लघुरेककः।"** इति।

मगणः त्रिगुरुः। यस्मिन् गणे त्रयः स्वरवर्णाः गुरवः भवन्ति स मगणः।संयोगात् पूर्वं स्वरवर्णः गुरुसंज्ञको भवति। त्रिलघुः नकारः। यस्मिन् गणे त्रयः स्वराः लघवः भवन्ति स स नगणः। भादिगुरुः अर्थात् यस्मिन् गणे आदिः स्वरवर्णो गुरुः, अन्यौ च लघू भवति स भगणः। आदिलघुः यः अर्थात् यस्मिन् गणे केवलं प्रथमवर्णः लघुसंज्ञकः भवति स यगणः। जो गुरुमध्यगतः अर्थात् जगणे मध्यमः वर्णः गुरुसंज्ञकः अन्यौ च लघू स्तः। रलमध्यः अर्थात् रगणे मध्यमः वर्णः लघुसंज्ञकः भवति।सोऽन्तगुरुः अर्थात् सगणे अन्तिमः वर्णः गुरुः भवति अन्यौ लघू च। अन्तलघुस्तः अर्थात् तगणे अन्तिमः वर्णः लघुसंज्ञकः अस्ति आद्यौ गुरू स्तः। गुरुरेको गकारस्तु अर्थाद् गगणे एकः गुरुवर्णो भवति। लकारो लघुरेककः अर्थात् लगणे एक लघुवर्णो भवति। दशानां गणानां चिह्नानि अधः प्रदीयन्ते -

| गणस्य नामानि | लक्षणानि | चिह्नानि |
|---|---|---|
| मगणः | त्रिगुरुः | ऽऽऽ |
| नगणः | त्रिलघुः | ।।। |
| भगणः | आदिगुरुः | ऽ।। |
| यगणः | आदिलघुः | ।ऽऽ |
| जगणः | गुरुमध्यगतः | ।ऽ। |



| | | |
|---|---|---|
| रगणः | लमध्यः | ऽ।ऽ |
| सगणः | अन्तगुरुः | ।।ऽ |
| तगणः | अन्तलघुः | ऽऽ। |
| गगणः | गुरुरेकः | ऽ |
| लगणः | लघुरेककः | । |

मात्रावृत्तस्य उपयोगिनः गणाः पञ्च भवन्ति – सर्वगुरुः, अन्तगुरुः, मध्यगुरुः, आदिगुरुः सर्वलघुः चेति। तथाह्युक्तं छन्दोमञ्जर्याम् –

**"ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः।**

**गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः॥"** इति।

एते गणाः चतुष्कलाः भवन्ति। चतुष्कला चतुर्मात्रकाः। चतस्रो मात्राः यत्र स गणः चतुर्मात्रकः। सर्वगुरुः नाम यस्मिन् गणे सर्वे वर्णा गुरवः। अन्तगुरुः नाम यस्मिन् गणे अन्तवर्णः गुरुर्भवति, अन्यच्च वर्णद्वयम् एकमात्रिकं भवति। मध्यगुरुः नाम मध्यवर्णो यस्मिन् गणे गुरुः भवति। अन्यच्च लघुवर्णद्वयं भवति। आदिगुरुः नाम यस्मिन् गणे आदिवर्णः गुरुः, अन्यच्च वर्णद्वयं लघु भवति। सर्वलघुः नाम यस्मिन् गणे सर्वे लघवः वर्णा भवन्ति। अत्र एतद् अवधेयम् अस्ति यत् मात्रावृत्ते चतुर्मात्रिकः गणः भवति। तस्मात् प्रत्येकगणे मात्राः चतस्रः इति तु अनिवार्यम्। अत्र सौविध्याय तालिका प्रस्तूयते –

| गणः | चिह्नानि | मात्राः |
|---|---|---|
| सर्वगुरुः | ऽऽ | चतस्रः |
| अन्तगुरुः | ।।ऽ | चतस्रः |
| मध्यगुरुः | ।ऽ। | चतस्रः |
| आदिगुरुः | ऽ।। | चतस्रः |
| सर्वलघुः | ।।।। | चतस्रः |

मात्रा त्रिविधा भवति – एकमात्रा, मात्राद्वयं मात्रात्रयम्। तत्र एकमात्रिकः ह्रस्ववर्णः, द्विमात्रिकः दीर्घः त्रिमात्रिकः प्लुतश्च। तथाहि प्रोक्तम्–

**"एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते।**

**त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम्॥"** इति

**ग) लघुगुरुव्यवस्था –** गुरुवर्णः कः भवति, लघुवर्णश्च कः भवति इति शङ्का सम्प्रति मनसि



उदेति। छन्दोमञ्जर्याम् एतस्य समाधानाय कारिका –

**"सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत्।**

**वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा॥"** इति।

अनुस्वारेण युक्तः सानुस्वारः स्वरः गुरुसंज्ञकः। यथा – ग्रामं गच्छति इत्यत्र मकारोत्तरवर्तिनः अकारात् परम् अनुस्वारो वर्तते। अतः अनुस्वारयुक्तत्वात् सः अकारः गुरुः। तत्र अनुस्वारः अवसानस्यापि उपलक्षणम्। तेन अवसाने व्यञ्जनसत्त्वेऽपि लघुः गुरुः भवति। एवमेव विसर्गसंयुक्तः स्वरो गुरुः। यथा रामः इत्यत्र विसर्गात्पूर्वं मकारोत्तरः अकारो गुरुः। एवमेव संयुक्तवर्णात् पूर्वो वर्णो गुरुः। यथा रक्त इत्यत्र क्तेति संयुक्तवर्णात् पूर्ववर्णः रकारोत्तरः अकारः गुरुः। पादान्ते स्थितः लघुवर्णः विकल्पेन गुरुः गुरुवर्णश्च प्रयोजनानुसारं लघुवर्णो भवति।

**घ) यतिः –** छन्दसि यतिः इत्यस्य महत्त्वं वर्तते। यतिर्नाम जिह्वाया इष्टं विश्रामस्थानम्। सा विच्छेदः विरामो वा वक्तुं शक्यते। तदुक्तं गङ्गादासकविराजेन –

**"यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते।**

**सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया॥"** इति।

यतिः छन्दसि सर्वत्र न भवति। पदान्ते यतिः चमत्कारकारिका भवति। पदमध्या चमत्कारं नाशयति। सा यतिः – पादान्ता पादमध्या च। तत्र यथा वंशस्थविलच्छन्दसि पादान्ता यतिः –

**न तज्जलं यन्न सुचारुपङ्कजं/**

**न पङ्कजं तद् यदलीनषट्पदम्॥इति।**

**पादमध्या यतिः यथा मालिनीच्छन्दसि –**

**सरसिजमनुविद्धं/ शैवलेनापि रम्यं/**

**मलिनमपि हिमांशोः/ लक्ष्म लक्ष्मीं तनोति॥** इति।

अत्र 'ननमयययुतेयं मालिनी भोगिलोकैः' इति छन्दोलक्षणत्वात् पादान्ते यथा यतिः तथैव पादमध्ये अष्टमाक्षरात् परं भवति।

**ङ) छन्दांसि** – वृत्तं समार्धसमविषमभेदेन त्रैविध्यं याति। तत्र समवृत्तानां पुनः षड्विंशभेदाः सन्ति। समवृत्तच्छन्दस्सु केषाञ्चित् छन्दसां परिचयः अधः प्रस्तूयते –



**१) इन्द्रवज्रा** – त्रिष्टुप्–छन्दसः एकादशाक्षराणि भवन्ति। अस्य एकः भेदो भवति इन्द्रवज्रा। अस्य लक्षणं तावत् – "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति। तौ नाम तगणद्वयं जगौ नाम जगणेन साकं गुरुद्वयम्। यस्य छन्दसः प्रत्येकं पादे तगणद्वयं जगणः गुरुद्वयं च क्रमशः भवति तत् छन्दः इन्द्रवज्रा। अत्र पादान्ता यतिर्वर्तते। तस्योदाहरणं यथा–

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ/

गोष्ठे गि–रिं सव्य–करेण धृत्वा/

रुष्टेन्द्रवज्राहतिमुक्तवृष्टौ।/

यो गोकुलं गोपकुलञ्च सुस्थं/

चक्रे स नो रक्षतु चक्रपाणिः॥/इति।

अस्य श्लोकस्य चतुर्षु अपि चरणेषु क्रमशः तगणद्वयम्, एकः जगणः, गुरुवर्णद्वयं च वर्तते। एवम् इन्द्रवज्राछन्दसः लक्षणं भवति सङ्गतम्। अत्र सर्वत्र पादान्ता यतिः वर्तते। अतः छन्दोलक्षणे तस्योल्लेखो नास्ति।

**२) उपेन्द्रवज्रा** – त्रिष्टुप्छन्दसः अयमेकः प्रकारः। उपेन्द्रवज्राच्छन्दसः लक्षणं छन्दोमञ्जर्याम् – "उपेन्द्रवज्रा प्रथमे लघौ सा"इति। इन्द्रवज्राछन्दसः प्रथमाक्षरस्य लघौ सति उपेन्द्रवज्रा छन्दो भवति। एवमिन्द्रवज्रायाः प्रथमः गणः तगणः। तस्य प्रथमाक्षरस्य लघौ सत्यां गुरुमध्यगतो जगणः भवति। एवं यस्य छन्दसः प्रत्यकें चरणे क्रमेण जगणः तगणः जगणः गुरुवर्णद्वयं च वर्तते तद् उपेन्द्रवज्राछन्दः। अत्रापि पादान्ता यतिः। तस्योदाहरणं यथा –

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ/

उपेन्द्र–वज्रादि–मणिच्छ–टाभिः/

विभूषणानां छुरितं वपुस्ते।/

स्मरामि गोपीभिरुपास्यमानं/

सुरद्रुमूले मणिमण्डपस्थम्॥/इति।

अत्र प्रस्तुते श्लोके प्रतिचरणं क्रमशः जगणः, तगणः, जगणः गुरुवर्णद्वयं च वर्तते। एव उपेन्द्रवज्राच्छन्दसः लक्षणं भवति अत्र सङ्गतम्।



**३) रथोद्धता –** त्रिष्टुभः छन्दसः कश्चिद् भेदः रथोद्धता। तल्लक्षणं छन्दोमञ्जर्याम् – "रात्परैर्नरलगै रथोद्धता"इति। यस्य छन्दसः प्रतिपादं रात् रगणात् परैः नरलगैः नगणेन रगणेन लघुना गुरुणा च वर्णेन विरचिता रथोद्धता। एवं रथोद्धतायां क्रमेण रगणः, नगणः, रगणः, लघुः गुरुश्च भवति। अत्र पादान्ता यतिः।रथोद्धताच्छन्दस उदाहरणं तावत् –

ऽ।ऽ।।।ऽ।ऽ।ऽ/

एवमाश्रमविरुद्धवृत्तिना/

संयमः किमिति जन्मतस्त्वया।/

सत्त्वसंश्रयसुखो हि दुष्यते/

कृष्णसर्पशिशुनेव चन्दनः॥/इति।

प्रकृतश्लोकस्य प्रत्येकं चरणेषु क्रमेण रगणः नगणः रगणः लघुवर्णः गुरुवर्णश्च वर्तते। एवं सिध्यति रथोद्धतालक्षणसङ्गमनम्।

**४) वंशस्थविलम् –** द्वादशाक्षरात्मकस्य जगतीछन्दस एकः प्रकारः वंशस्थविलम्। तस्य लक्षणं छन्दोमञ्जर्यां – "वदन्ति वंशस्थविलं जतौ जरौ"इति। यस्य छन्दसः प्रतिपादं क्रमेण जगणः तगणः जगणः रगणश्च भवति तत् वंशस्थविलम्। अत्रापि पादान्ता यतिः। अस्य छन्दस उदाहरणं तावत्–

।ऽ । ऽ ऽ।। ऽ। ऽ । ऽ/

अयं स ते तिष्ठति सङ्गमोत्सुको/

विशङ्कसे भीरु यतोऽवधीरणाम्।/

लभेत वा प्रार्थयिता न वा श्रियं/

श्रिया दुरापः कथमीप्सितो भवेत्॥/इति।

श्लोकस्यास्य प्रतिपादं क्रमेण जगणः, तगणः, जगणः रगणश्च वर्तते इति सिध्यति वंशस्थविललक्षणसङ्गमनम्।

**५) वसन्ततिलकम् –** चतुर्दशाक्षरात्मिकायाः शर्कर्याः एकः प्रकारः वसन्ततिलकम्। वसन्ततिलका इत्यस्य नामान्तरम्। तल्लक्षणं छन्दोमञ्जर्याम् – "ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति। तभजाः तगणः भगणः जगणः, जगौ जगणः गुरुवर्णः गः गुरुवर्णः। यस्य छन्दसः प्रतिपादः तगणः,



भगणः, जगणद्वयं गुरुवर्णद्वयं च क्रमेण भवति तत् वसन्ततिलकम्। तस्य यतिः पादान्ता भवति। तस्योदाहरणं तावत–

ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ/

फुल्लं व–सन्तति–लकं ति–लकं व–नाल्याः/

लीलापरं पिककुलं कलमत्र रौति।/

वात्येष पुष्पसुरभिर्मलयाद्रिवातो/

यातो हरिः स मधुरां विधिना हताः स्मः॥/ इति।

अस्य प्रतिचरणं क्रमेण तगणः, भगणः, जगणद्वयं गुरुवर्णद्वयं च वर्तते। एवमस्य वसन्ततिलकलक्षणं संगच्छते।

६) **मालिनी** – पञ्चदशाक्षरात्मकस्य अतिशर्करीछन्दसः मालिनीच्छन्दः प्रकारः। मालिनीछन्दसः लक्षणम्– "ननमयययुतेयं मालिनी भोगिलोकैः" इति। ननमयययुता इयं मालिनी। अर्थाद् यस्य छन्दसः प्रतिपादं क्रमेण नगणद्वयम्, मगणः, यगणद्वयं च भवति तच्छन्दः मालिनी। भोगिन् इति संख्याष्टकस्य लोक इति संख्यासप्तकस्य बोधकः। एवं प्रतिपादं प्रथमतः अष्टमाक्षरात् परमेका यतिः ततः सप्तमाक्षरात् परमर्थात् पादान्ते एका यतिः। एवमत्र पादमध्या यतिः भवति। एतस्योदाहरणं तावत्–

। । । । । । ऽ ऽ/ऽ । ऽ ऽ । ऽ ऽ/

सरसिजमनुविद्धं शैवलेनापि रम्यं

मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।

इयमधिकमनोज्ञा वल्कलेनापि तन्वी

किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥इति।

अस्य प्रत्येकं चरणे क्रमेण नगणद्वयं मगणद्वयं यगणद्वयं च वर्तते। किञ्च, अष्टमाक्षरात्परं ततः सप्तमाक्षराच्च परं यतिर्वर्तते। एवं सिध्यति मालिनीछन्दोलक्षणसमन्वयः। एवं केचन समवृत्तच्छन्दांसि अत्र प्रस्तुतानि।





## पाठगतप्रश्नाः – ४

४७. छन्दःशास्त्रस्य प्रणेता कः।

४८. छन्दः कीदृशं वेदाङ्गम्।

४९. पद्यस्य किं स्वरूपम्।

५०. पद्यस्य के विभागा भवन्ति।

५१. वृत्तस्य लक्षणं किम्।

५२. वृत्तस्य के विभागाः।

५३. समवृत्तस्य किं स्वरूपम्।

५४. अर्धसमवृत्तस्य किं स्वरूपम्।

५५. विषमवृत्तस्य किं स्वरूपम्।

५६. पद्योपकारकाः गणाः के सन्ति।

५७. मात्राछन्दस उपकारकाणां गणानां नामानि कानि।

५८. गणानां स्वरूपबोधिकां कारिकां लिखत।

५९. लघुगुरुव्यवस्थापरकं श्लोकं लिखत।

६०. यतेः किं लक्षणम्।

६१. यतिः कतिविधा के च ते।

६२. कुत्र यतिः चमत्काराय भवति।

६३. कुत्र यतिः चमत्कारं नाशयति।

६४. इन्द्रवज्राछन्दसो लक्षणं किम्।

६५. उपेन्द्रवज्राछन्दसो लक्षणं किम्।

६६. रथोद्धताछन्दसो लक्षणं किम्।

६७. वंशस्थविलच्छन्दसो लक्षणं किम्।

६८. वसन्ततिलकछन्दसो लक्षणं किम्।

६९. मालिनीछन्दसो लक्षणं किम्।

७०. मालिनीछन्दसि कुत्र कुत्र यतिः।



## पाठसारः

काव्यात्मनः रसस्य उपकारकत्वेन काव्यस्योपकारका ये गुणालङ्काररीतयः तेषां स्वरूपमत्र



प्रस्तुतम्। तत्रादौ गुणः वर्णितः। शौर्यादय यथा शरीरिण उपकारकाः सन्तः शरीरस्योपकारका एवमेव माधुर्यादयः शब्दार्थात्मककाव्यस्य आत्मनः रसस्य उपकारकाः सन्तः काव्यस्योपकारकाः सन्ति। गुणस्त्रिविधः– माधुर्यम् ओजः प्रसादश्चेति। तत्र माधुर्यं तु चित्तद्रवीमयभावो भवति। समासरहिता अल्पसमाससहिता वा कटुशब्दवर्जिता रचना तस्य अभिव्यक्तौ निमित्तम्। सम्भोगे करुणे विप्रलम्भे शान्ते च माधुर्यगुणः क्रमाद् अधिकतया भासते। एवमेव चित्तस्य विस्ताररूप ओजोगुणः। स हि वीरबीभत्सरौद्रेषु रसेषु क्रमशः अधिकं भासते। दीर्घसमासबहुला रचना एतस्याभिव्यक्तौ कारणम्। शुष्केन्धनमिव यः गुणः चित्तं शीघ्रं व्याप्नोति स प्रसादः।श्रुतिमात्रेण अर्थबोधकाः शब्दाः प्रसादस्याभिव्यक्तौ निमित्तम्।

ततः अवयवसन्निवेशविशेषवद् रीतिः वर्णिता। रीतिस्तु दर्पणकारनये त्रिविधा– वैदर्भी गौडी पाञ्चाली लाटिका चेति। परन्तु ध्वनिकारादीनां नये लाटिकारीतिः नापेक्षते। माधुर्यव्यञ्जकवर्णैः अल्पसमासा समासरहिता वा या मधुरा रचना सा वैदर्भी। ओजःप्रकाशकैः वर्णै या उद्भटा रचना सा गौडी। यत्र पञ्च षट् वा समस्तानि पदानि, पूर्वप्रोक्तस्य रीतिद्वयस्य अभिव्यञ्जकान् विहाय वर्णैः या रचना सा पाञ्चाली। लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरे स्थिता। एवं रीतिपरिचयः प्रदत्तः।

ततः कटककुण्डलादिवद् अलङ्कारा वर्णिताः। अलङ्कारः द्विविधः - शब्दालङ्कारः अर्थालङ्कारः च। तत्र शब्दालङ्कारेषु अनुप्रासः, यमकं वक्रोक्तिश्च, अर्थालङ्कारेषु च उपमा, रूपकम्, उत्प्रेक्षा, दृष्टान्तः, समासोक्तिः इत्येते अलङ्काराः अत्र वर्णिताः।

वैयाकरणस्य पाणिनेः नये अभिप्रायार्थबोधकात् आनन्दपर्यायभुक्तात् वा छन्द्– धातोः छन्दः शब्दस्य उत्पत्तिः जाता। छन्दोबद्धं पादचतुष्टयात्मकं भवति पद्यम्। तत्र अक्षरपरिगणितं पद्यं वृत्तं, मात्राघटितं पद्यञ्च जातिः इत्युच्यते। वृत्तपद्यस्य उदाहरणानि भवन्ति वसन्ततिलकादयः। जातिच्छन्दस्य उदाहरणानि भवन्ति आर्यादयः इति। वृत्तम् त्रिविधम् – समवृत्तम् अर्धसमवृत्तं विषमवृत्तं चेति। तेषां लक्षणानि उक्त्वा ततः वृत्तस्य उपकारका दश गणाः जातेश्च उपकारकाः पञ्च गणा अत्र वर्णिता। ततः यतिस्वरूपं वर्णितम्। यतिस्तु जिह्वेष्टविरामस्थलं भवति। ततः सानुस्वारो विसर्गश्च इत्यादिकारिकया छन्दसि लघुगुरुव्यवस्था वर्णिता। ततः समवृत्तेषु इन्द्रवज्रा, उपेन्द्रवज्रा, रथोद्धता, वंशस्थविलं, वसन्ततिलकं मालिनी इत्येतेषां छन्दसां स्वरूपं सोदाहरणं प्रस्तुतमिति पाठस्य सारः।



## पाठान्तप्रश्नाः

१. गुणस्वरूपं गुणभेदान् च वर्णयत।



२. माधुर्यं सोदाहरणं वर्णयत।

३. ओजोगुणं सोदाहरणं वर्णयत।

४. प्रसादं सोदाहरणं वर्णयत।

५. रीतस्वरूपं रीतिभेदान् च वर्णयत।

६. वैदर्भीं सोदाहरणं वर्णयत।

७. गौडीं सोदाहरणं वर्णयत।

८. पाञ्चालीं सोदाहरणं वर्णयत।

९. लाटिकां सोदाहरणं वर्णयत।

१०. अलङ्कारस्वरूपं वर्णयत।

११. शब्दालङ्कारेषु एकस्यालङ्कारस्य लक्षणसङ्गमनं कुरुत।

१२. अर्थालङ्कारेषु एकस्यालङ्कारस्य लक्षणसङ्गमनं कुरुत।

१३. अनुप्रासालङ्कारं वर्णयत।

१४. वक्रोक्तिं वर्णयत।

१५. यमकं वर्णयत।

१६. उपमां सोदाहरणं वर्णयत।

१७. रूपकं सोदाहरणं वर्णयत।

१८. उत्प्रेक्षां सोदाहरणं वर्णयत।

१९. समासोक्तिं सोदाहरणं वर्णयत।

२०. दृष्टान्तं सोदाहरणं वर्णयत।

२१. पद्यस्वरूपं पद्यभेदान् च वर्णयत।

२२. वृत्तस्वरूपं वृत्तभेदान् च वर्णयत।

२३. यतिस्वरूपं वर्णयत।

२४. श्लोकेषु लघगुरुव्यवस्थां वर्णयत।

२५. वृत्तस्य जातेश्च गणान् वर्णयत।

२६. इन्द्रवज्रां सोदाहरणं वर्णयत।

२७. उपेन्द्रवज्रां सोदाहरणं वर्णयत।

२८. रथोद्धतां सोदाहरणं वर्णयत।

२९. वसन्ततिलकां सोदाहरणं वर्णयत।

३०. मालिनीं सोदाहरणं वर्णयत।

३१. गुणाः कीदृशा भवन्ति - क) शौर्यादिवत्, ख) अवयवसंस्थानविशेषवत्, ग) कटककुण्डलादिवत्।

३२. सर्वाधिकतया माधुर्यं कुत्र भासते - क) सम्भोगे ख) करुणे ग) विप्रलम्भे घ) वीरे।



३३. ओजोगुणस्य सर्वापेक्षया आधिक्यं कुत्र – क) वीरे ख) बीभत्से, ग) रौद्रे, घ) शृङ्गारे।

३४. ध्वनिकारस्य मते का रीतिः नास्ति - क) गौडी, ख) पाञ्चाली, ग) लाटिका, घ) वैदर्भी।

३५. रूपकं प्राधान्येन कतिविधम् - क) एकविधम्, ख) द्विविधम्, ग) त्रिविधम्, घ) चतुर्विधम्।

३६. वृत्तं कीदृशम् - क) अक्षरसंख्यातम्, ख) वाक्यसंख्यातम्, ग) पदसंख्यातम्।



## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि-१

१. काव्यस्य उत्कर्षहेतवः गुणालङ्काररीतयः भवन्ति।

२. गुणादयः काव्यात्मनः रसस्य उपकारकाः सन्तः काव्यस्य उपकारकाः।

३. गुणस्वरूपं तावद् दर्पणे – "रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा। गुणाः" इति।

४. त्रयः गुणस्य भेदाः - माधुर्यम् ओजः प्रसादः चेति।

५. माधुर्यस्य लक्षणं तावत् – "चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते।" इति।

६. रेफडकारादिश्रुतिकटुवर्णरहिता वर्गान्त्यवर्णसहिततद्वर्गीयवर्णोपेता समास-रहिता अल्पसमासा च मधुरा रचना माधुर्यस्याभिव्यक्तौ निमित्तम्।

७. सम्भोगे करुणे विप्रलम्भे शान्ते च माधुर्यगुणः क्रमाद् अधिकतया भासते।

८. माधुर्यस्य एकमुदाहरणं तावद् –

अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः।
जनयन्ति मुहूर्यूनामन्तःसन्तापसन्ततीम्॥इति।

९. ओजसो लक्षणं तु – "ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते।" इति।

१०. ओजसः अभिव्यक्तौ श्रुतिकटुवर्णसहिता दीर्घसमासपदोपेता महाप्राणाक्षर-सहिता रचना निमित्तम् अस्ति।

११. वीरबीभत्सरौद्रेषु रसेषु क्रमशः ओजोगुणस्य आधिक्यं भवति।

१२. ओजसः एकमुदाहरणं तावत् –

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः॥इति।

१३. प्रसादस्य लक्षणं तावत् –

"चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।
स प्रसादः समस्तेषु रसेषु रचनासु च॥"



१४. श्रुतिमात्रेण अर्थबोधकाः शब्दाः प्रसादस्याभिव्यक्तौ निमित्तम्।

१५. प्रसादस्य एकमुदाहरणं तावत् –

सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप लुठसि स्तनयोः प्रियायाः।
बाणैः स्मरस्य शतशो विनिकृत्तमर्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि॥इति।

**उत्तराणि-२**

१६. शरीरे यथास्थानम् अवयवसन्निवेशविशेषवद् शब्दार्थशरीरे काव्ये माधुर्यादि-गुणव्यञ्जकवर्णानां सन्निवेशो भवति रीतिः, सा परम्परया रसादीनां पोषिका भवति।

१७. रीतेः दर्पणानुसारेण चत्वारो भेदाः - वैदर्भी गौडी पाञ्चाली लाटिका चेति।

१८. वैदर्भीरीतेः लक्षणं तावत्–

"माधुर्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते॥" इति।

१९. वैदर्भीरीतेः उदाहरणं तावत् –

लताकुञ्जं गुञ्जन् मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि॥इति।

२०. गौडीरीतेः लक्षणं तावत् –

"ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः। समासबहुला गौडी" इति।

२१. गौडीरीतेः एकमुदाहरणं तावद् -

विकचकमलगन्धैरन्धयन् भृङ्गमालाः
सुरभितमकरन्दं मन्दमावाति वातः।
प्रमदमदनमाद्यद्यौवनोद्दामरामा-
रमणरभसखेदस्वेदविच्छेददक्षः॥इति।

२२. पाञ्चालीरीतेः लक्षणं तावत् –

"वर्णैः शेषैः पुनर्द्वयोः। समस्तपञ्चषपदो बन्धः पाञ्चालिका मता।" इति।

२३. पाञ्चालीरीतेः उदाहरणं तावत् –

मधुरया मधुबोधितमाधवीसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥ इति।

२४. लाटिकारीतेः लक्षणं तावत् -

"लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरे स्थिता।" इति।



२५. लाटिकारीतेः एकमुदाहरणं तावत् –

अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्
उदयगिरवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि॥ इति।

२६. लाटिकारीतिः ध्वन्यालोककारादीनाम् आनन्दवर्धनादीनां मते नास्ति।

**उत्तराणि-३**

२७. अलङ्कारलक्षणं तु"शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।
रसादीनुपकुर्वन्तस्तेऽलङ्कारास्तेऽङ्गदादिवत्॥"इति।

२८. अलङ्कारः द्विविधः - शब्दालङ्कारः अर्थालङ्कारः च।

२९. अनुप्रासस्य लक्षणं तावत् -

"अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्।" इति।

३०. अनुप्रासस्य पञ्च भेदाः। ते तावत्- छेकानुप्रासः, वृत्त्यनुप्रासः, श्रुत्युनप्रासः, अन्त्यानुप्रासः लाटानुप्रासः चेति।

३१. यमकस्य लक्षणं हि -

"सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।
क्रमेण तेनैवावृत्तिः यमकं विनिगद्यते॥"इति।

३२. यमकस्योदाहरणं तावत् -

"नवपलाश-पलाश-वनं पुरः स्फुटपराग-परागत-पङ्कजम्।
मृदुल-तान्त--लतान्तमलोकयत् स सुरभिं सुरभिं सुमनोहरैः॥"इति।

३३. स्वरव्यञ्जनसमूहस्य क्वचित् सार्थकत्वं क्वचिच्च निरर्थकत्वं भवति इति प्रतिपादयितुं सत्यर्थे इति पदं यमकलक्षणे।

३४. वक्रोक्तेः लक्षणं तावत् -

"अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेत् यदि।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा॥"इति।

३५. वक्रोक्तेः भेदद्वयं श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति।

३६. सादृश्यमूलकालङ्कारस्य जननी उपमा।

३७. उपमालक्षणं तु –

"साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः।" इति।

३८. उपमा प्राधान्ये द्विविधा - पूर्णोपमा लुप्तोपमा चेति।

३९. पूर्णोपमाया अंशचतुष्टयं तावत् - उपमानम् उपमेयं सादृश्यवाचकः साधारणधर्मश्च।



४०. रूपकस्य लक्षणं तु -

"रूपकं रूपितारोपाद्विषये निरपह्नवे।" इति।

४१. रूपकस्य त्रयो भेदाः। ते च परम्परितं निरङ्गं साङ्गं चेति।

४२. उत्प्रेक्षालङ्कारस्य लक्षणं तावत् -

"भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना।" इति।

४३. दृष्टान्तस्य लक्षणं तु –

"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्।" इति।

४४. दृष्टान्तस्य उदाहरणं तु -

"अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलापि हि हरति दृशं मालतीमाला॥"इति।

४५. प्रतिबिम्बनं नाम प्रणिधानगम्यम्।

४६. समासोक्तेः लक्षणं तु –

"अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्।" इति।

**उत्तराणि-४**

४७. छन्दःशास्त्रस्य प्रणेता पिङ्गलाचार्यः।

४८. छन्दः पादरूपं वेदाङ्गम्।

४९. पद्यस्य चतुष्पादात्मकं भवति।

५०. पद्यस्य विभागद्वयं वृत्तं जातिश्चेति।

५१. वृत्तस्य लक्षणं तावद् - "वृत्तमक्षरसंख्यातम्"इति।

५२. वृत्तस्य त्रयो विभागाः - समवृत्तम् अर्धसमवृत्तं विषमवृत्तं चेति।

५३. समवृत्तस्य स्वरूपं तु - "समं समचतुष्पादम्"इति।

५४. यस्य वृत्तस्य प्रथमपादः तृतीयपादतुल्यः चतुर्थपादः द्वितीयपादतुल्यः तद् अर्धसमवृत्तम्।

५५. यस्य वृत्तस्य पादचतुष्टयं भिन्नाक्षरविशिष्टं भवति तद् विषमवृत्तम्।

५६. पद्योपकारकाः - मगणः, यगणः, रगणः, सगणः, तगणः, जगणः, भगणः, नगणः, गगणः, लगणः इत्येते दश गणाः।

५७. मात्राछन्दस उपकारकाः गणाः तावत् – सर्वगुरुः, अन्तगुरुः, मध्यगुरुः, आदिगुरुः सर्वलघुः चेति।

५८. गणानां स्वरूपबोधिकां कारिकां तावत् –

"मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः।
जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥
गुरुरेको गकारस्तु लकारो लघुरेककः।" इति।

५९. लघुगुरुव्यवस्थापरकः श्लोकस्तु –



"सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत्।
वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा॥" इति।

६०. यतेः लक्षणं तु - "यतिर्जिह्वेष्टविरामस्थानम्" इति।

६१. यतिः द्विविधा - पादमध्या यतिः पादान्ता यतिश्चेति।

६२. पदान्ते यतिः चमत्काराय भवति।

६३. पदमध्ये यतिः चमत्कारं नाशयति।

६४. इन्द्रवज्राछन्दसो लक्षणं तु - "स्यादिन्द्रवज्रा यदि तौ जगौ गः"इति।

६५. उपेन्द्रवज्राछन्दसो लक्षणं तु - "उपेन्द्रवज्रा प्रथमे लघौ सा" इति।

६६. रथोद्धताछन्दसो लक्षणं तु - "रात्परैर्नरलगै रथोद्धता" इति।

६७. वंशस्थविलच्छन्दसो लक्षणं तु - "वदन्ति वंशस्थविलं जतौ जरौ" इति

६८. वसन्ततिलकछन्दसो लक्षणं तु - "उक्ता वसन्ततिलका तभजा जगौ गः" इति।

६९. मालिनीछन्दसो लक्षणं तु - "ननमयययुतेयं मालिनी भोगिलोकैः" इति।

७०. मालिनीछन्दसि अष्टमाक्षरात्परं ततः सप्तमाक्षरात्परम् अर्थात्पादान्ते यतिः।

॥ इति दशमः पाठः ॥



# ११

# काव्यप्रकाराः

## प्रस्तावना

संस्कृतसाहित्यस्य भाण्डारः सागरतुल्यः। संस्कृतवाङ्मये अस्माभिः बहुविधानि कविकर्माणि परिलक्ष्यन्ते। परन्तु कवेः कृतिरियं कीदृशी तद्विषये सम्यक् परिचयः नैव जायते। कुत्रचित् दृश्यते केवलं गद्यरूपं, कुत्रचित् गद्यपद्योभयात्मकं, कुत्रापि वा केवलं पद्यमयम्। अतः पठितृणां मनसि संशयः नितरां वर्तते। अतः पाठेऽस्मिन् छात्राणां बोधसौकर्याय काव्यभेदाः सरलया रीत्या प्रतिपाद्यन्ते। कीदृशं काव्यं कया अभिधया उच्यते तदत्र आलोच्यते। अनेन काव्यानां दलभेदाः भवन्ति। सरलेन उपायेन तेषां पृथक्करणमपि भवति। वैचित्र्यं हि मनुष्याणां स्वभावः, अतः कविभिः स्वप्रतिभया स्वेषां कर्मणां वैचित्र्यं प्रतिपाद्यते। तेषामेव वैचित्र्याणां पृथक् पृथक् अभिधारूपेण अत्र आलोचना विधीयते।



## उद्देश्यानि-

अमुं पाठं पठित्वा भवान् -

- काव्यप्रकारान् ज्ञास्यति।
- काव्यस्य अभिधानं कर्तुं शक्नुयात्।
- काव्यभेदस्य प्रयोजनं जानीयात्।
- काव्यभेदे कारणं जानीयात्।
- काव्यकर्तृणां विषये ज्ञास्यति।
- विविधकाव्यानां विषये ज्ञास्यति।
- दृश्यकाव्यादीनां स्वरूपं जानीयात्।

## ११.१) भूमिका

सामान्यतः काव्यवस्तुनश्चतस्र आश्रयभूमयः पुराणानि, इतिहासः, जनश्रुतिः, कविकल्पना च। यानि खलु पौराणिकीं कथामाश्रित्य प्रणीतानि तानि पौराणिककाव्यानि, यानि च ऐतिहसिकाधारेण प्रणीतानि तानि ऐतिहासिकानि, यानि च जनश्रुत्याधारेण विरचितानि तानि जनश्रुतिकाव्यानि, यानि च कविकल्पनोद्भुतं यद् वस्तु तदाधारेण प्रणीतानि तानि काल्पनिकानि काव्यानि भवन्ति। यद्यपि पौराणिकादौ काव्येऽपि कल्पनायाः प्राधान्यं भवत्येव तथापि गणना एषा कथावस्तुमात्राश्रया। तानि च पुनः समालोचकैः स्वरूपतः देवकाव्य-यमककाव्य-श्लेषकाव्यादिभेदेनापि बहुशः भेदितानि।



पौराणिकानि खलु काव्यानि पाणिनेः जाम्बवतीविजयः, व्याडेः बालचरितम्, कात्यायनस्य स्वर्गारोहणम्, पतञ्जलेर्महानन्दमयम्, कालिदासस्य रघुवंशम्, कुमारसम्भवं च, कुमारदासस्य जानकीहरणम् , भारवेः किरातार्जुनीयम् बाणस्य हर्षचरितम्, भट्टिकवेः रावणवधम् , माघस्य शिशुपालवधम् , श्रीहर्षस्य नैषधीयचरितं प्रभृतीनि।

ऐतिहासिककाव्येषु हि वाक्पतिराजस्य गौडवधं (गउडवहो), शिवस्वामिनः कप्फणाभ्युदयः, पद्मगुप्तस्य नवसाहसाङ्कचरितम्, बिल्हणस्य विक्रमाङ्कदेवचरितम्, कल्हणस्य राजतरङ्गिणी, जल्हणस्य सोमपालविजयः, हेमचन्द्रस्य कुमारपालचरितम्, सोमेश्वरस्य कीर्तिकौमुदीकाव्यम्, अरिसिंहस्य सुकृतकीर्तनम्, बालचन्द्रस्य वसन्तविलासः, नयनचन्द्रस्य हम्मीरमहाकाव्यम्, चन्द्रशेखरस्य सुर्जनचरितम्, राजनाथस्य अच्युतराजाभ्युदयम्, गङ्गादेव्याः मधुराविजयम् वीरकम्परायचरितं वा, सन्ध्याकरनन्दिनो रामपालचरितम्, जयानककवेः पृथ्वीराजविजयम्, शम्भुकवेः राष्ट्रौढवंशमहाकाव्यम्, यज्ञनारायणस्य रघुनाथभुपविजयः, परमेश्वरशिवद्विजस्य श्रीरामवर्ममहाराजचरितम्, शङ्करलालस्य रावजीराजकीर्तिविलासः, नागराजस्य भारतीयदेशभक्तचरितम्, दिलीपदत्तस्य मथुराप्रसादस्य प्रतापविजयम्, द्विजेन्द्रनाथस्य स्वराज्यविजयम्, सत्यव्रतस्य गोविन्दसिंहमहाकाव्यं चेत्यादीनि सन्ति प्रसिद्धानि समुल्लेखनीयानि।

जनश्रुतिमूलककाव्येषु प्रायो गद्यसाहित्यमेव दृश्यते। तेषु सुबन्धोर्वासवदत्ता, बाणस्य कादम्बरी, दण्डिनो दशकुमारचरितञ्च इत्यादीनि प्रसिद्धानि। एवमेव गुणाढ्यस्य बृहत्कथा, सोमेश्वरस्य कथासरित्सागरः, क्षेमेन्द्रस्य बृहत्कथामञ्जरी च।

कल्पनामूलकेषु मेघदूत-ऋतुसंहारप्रभृतीनि लघुकाव्यान्येव दृश्यन्ते।

## ११.२) स्वरूपानुसारं काव्यस्य भेदाः

लोके यानि काव्यानि प्राप्यन्ते तानि स्वस्ववैशिष्ट्यात् काव्यभेदेषु स्वस्वकोटौ तेषाम् अन्तर्भावः भवति। काव्यानि बहुविधानि भवन्ति। तेषां भेदाः अधः आलोच्यन्ते। बहुविधानि काव्यानि सन्ति चेदपि स्वरूपानुसारं मूलतः काव्यस्य भेदद्वयं वर्तते। तद्यथा श्रव्यकाव्यं दृश्यकाव्यं च।

## ११.३) श्रव्यकाव्यम्

यस्य काव्यस्य रसास्वादनं अन्येभ्यः श्रुत्वा अथवा स्वयं पठित्वा भवति तत् काव्यं श्रव्यकाव्यम् उच्यते। यथा रामायणम् महाभारतम् इत्यादि। श्रव्यकाव्यस्य अपि बहवः भेदाः वर्तन्ते। ते क्रमशः आलोच्यन्ते।

### ११.३.१) महाकाव्यानि

महाकाव्यं सर्गैः निबद्धं भवति। तत्र अष्टाधिकसर्गाः अवश्यमेव भवेयुः। महाकाव्ये धीरोदात्तादिगुणयुक्तं नायकं भवति। शृङ्गारवीरशान्तकरुणरसेषु एकः रसः मुख्यः भवति तथा अन्ये रसाः तस्य अङ्गभूताः भवन्ति। काव्यस्य उपजीव्यम् ऐतिहासिकम् अथवा सज्जनाश्रितं भवति। महाकाव्यस्य फलं चतुर्वर्गेषु एकं



भवति। लज्जास्पदविषयस्य महाकाव्येषु वर्णना न क्रियते। महाकाव्यस्य उदाहरणं यथा रघुवंशम्, कुमारसम्भवम् इत्यादि।

## ११.३.२) शास्त्रकाव्यानि

पदप्रयोगस्य व्याकरणनियमानां ज्ञानाय अन्यशास्त्रीयज्ञानस्य सौलभ्याय च यानि काव्यानि प्रणीतानि तानि शास्त्रकाव्यानि उच्यन्ते। कानिचित् शास्त्रकाव्यानि अधः आलोच्यन्ते।

**भट्टिस्वामिनो 'भट्टिकाव्यम्'**

शास्त्रकाव्येषु भट्टिकाव्यं प्रसिद्धतरम्। अस्य काव्यस्य विषये उच्यते 'दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम्' इति।

काव्यमिदं भट्टिस्वामिना प्रणीतम्। तन्नाम्नैव चास्य प्रसिद्धिरपि जाता। इदं काव्यं रावणवधनाम्नापि प्रथते।

अत्र काव्ये द्वाविंशतिः सर्गाः येषु संहत्य १३२९ श्लोका विद्यन्ते। अस्य काव्यस्य निर्माणस्य उद्देश्यं मनोविनोदेन सह संस्कृतव्याकरणस्य ज्ञानम्। तदिदमुद्देश्यं पूर्वमपि भवति।

**भट्टभीमस्य 'रावणार्जुनीयम्'**

अस्मिन् रावणार्जुनीयनामके काव्ये अष्टाध्यायीसूत्रपाठक्रमेण पादानां निदर्शनं कृतम् अस्माद् इदमपि शास्त्रकाव्येषु अन्यतमं मन्यते। 'सुवृत्ततिलकम्' नाम स्वग्रन्थे क्षेमेन्द्रेण शास्त्रकाव्योदाहरणतया भट्टिकाव्येन सह रावणार्जुनीयम् अपि निर्दिष्टम्।

यतः क्षेमेन्द्रः स्वग्रन्थे सुवृत्ततिलके रावणार्जुनीयं शास्त्रकाव्यं निर्दिशति, अतः रावणार्जुनीयप्रणेतुः भट्टभीमस्य समय एकादशशतकात् प्राक्तनः सिद्ध्यति।

**वासुदेवस्य 'वासुदेवविजयम्'**

केरलेषु गृहीतजन्मनो 'वासुदेवस्य' वासुदेवविजयं नाम काव्यमपूर्णमेव। अपूर्णमेव वासुदेवेन निर्मितम्, यस्य पूर्तिः केरलवासिनैव नारायणेन त्रिषु सर्गेषु धातुकाव्यं निर्माय कृता। अत्र धातूनां प्रयोगभेदान् दर्शयित्वा कंसवधवृत्तान्तो वर्णितः। समयोऽस्य निश्चित्य वक्तुं न शक्यते।

**हेमचन्द्रस्य 'कुमारपालचरितम'**

ऐतिहासिककाव्यनिर्देशप्रकरणे वर्णितमिदं काव्यं शास्त्रकाव्यमपि, यतः अत्र आदितो विंशं सर्गं यावत् संस्कृतव्याकरणनियमानां ततोऽष्टसु सर्गेषु प्राकृतव्याकरणनियमानाञ्च प्रपञ्चः कृतः।

**चिरञ्जीवभट्टाचार्यस्य'विद्वन्मोदतरङ्गिणीकाव्यम्'**

केनचित् वङ्गदेशीयेन ऊनविंशख्रीष्टशतकप्राग्भागसम्भूतेन चिरञ्जीवभट्टाचार्यविदुषा निर्मितमिदं काव्यं कथोपकथनरूपेण सकलदर्शनमतप्रतिपादनाय निबद्धम्। स्वल्पतनुरप्ययं ग्रन्थः सरसपदविन्यासतया हृदयाकर्षकः। प्रत्यक्षमात्रं प्रमाणं मन्यमानान् प्रति कवेः इयम् उक्तिः महत् सारल्यं सारस्यं च बिभर्ति -



'भवादृशे दूरविदेशमागते चरन्तु वैधव्यविधानमङ्गनाः।' इति।

## ११.३.३) देवकाव्यानि

यथा शास्त्रकाव्यानि शास्त्रीयतत्त्वप्रख्यापनबुद्ध्या विरचितानि, तथैव प्रधानतया देवतानां कीर्तीः गातुं यानि काव्यानि रचितानि तानि देवकाव्यानि अभिधीयन्ते। माघ-कुमारसम्भवादीनि यथा कवित्वप्रदर्शनाय विरचितानि प्रतीयन्ते न तथा देवतानां कीर्तीः वर्णयितुम्। अतस्तानि न देवकाव्यानि। देवकाव्यानि तान्येव यत्र देवकीर्त्तीनां प्राधान्यम् भवति। अतोऽत्र प्रकरणे तादृशान्येव कतिचित् काव्यानि परिचाययितुमुक्रम्यते।

| क्रमः | देवकाव्यानि | कर्तारः | काव्यस्य विषयाः |
|---|---|---|---|
| १. | भिक्षाटनकाव्यम् | उत्प्रेक्षावल्लभ-गोकुलनाथः | अत्र शृङ्गारिकपद्धत्या भिक्षुकरूपस्य शिवस्य चित्रणं क्रियते। |
| २. | शिवलीलार्णवः | नीलकण्ठदीक्षितः | अत्र द्वाविंशत्या सर्गैः मदुरास्थितस्य सुरेन्द्रनाथशिवस्य ६४-प्रख्यातलीलानां वर्णनं निबद्धम्। |
| ३. | हरचरित-चिन्तामणिः | जयद्रथः | अत्र शिवस्य महिमानः वर्णिताः। अत्र अनुष्टुप् छन्दः विद्यते। |
| ४. | हरिविलासकाव्यम् | लोलिम्बराजः | अत्र श्रीकृष्णस्य बाललीलायाः सरसं शृङ्गारिकं वर्णनं कृतम्। |
| ५. | यादवाभ्युदयम् | वेदान्तदेशिकः | अत्र श्रीकृष्णस्य जीवनकथाः महिमानः च वर्णिताः। |

इतोऽपि बहूनि देवकाव्यानि उपलभ्यन्ते।

## ११.३.४) खण्डकाव्यानि

**परिचयः** - महाकाव्यस्य एकदेशानुसारि खण्डकाव्यं भवति। महाकाव्ये हि एकस्य एकाधिकानां वा नायकनायिकानां समग्रमेव जीवनं चित्रितं भवति। खण्डकाव्ये तु तस्यैकदेश एव चित्रितो भवति। तेन खण्डकाव्यं हि वस्तुतो लघुकाव्यमेव। यतो हि यत्र महाकाव्ये जीवनस्य समग्रतायाः प्रसारः तत्र खण्डकाव्ये जीवनस्य एकस्यैव पक्षस्य तन्मयता भवति, तेन हि खण्डकाव्यम् आकारेण प्रकारेण च महाकाव्यात् लघुतरं तु भवत्येव। अपि च महाकाव्ये जीवनस्य एकाधिकमपि पक्षं प्रस्तोतुं शक्यते, खण्डकाव्ये तु एक एव पक्ष उन्नीयते, अधिकतया प्रस्तूयते। अतो विस्तृतकलेवरात् महाकाव्यात् लघुकलेवरं हि खण्डकाव्यम्। तस्य समधिकमेव लालित्यं माधुर्यञ्च भवति।

खण्डकाव्यं हि मुख्यतश्चतुर्विधं दृश्यते शाङ्गारिकम्, धार्मिकम्, नैतिकं साङ्ग्रहिकञ्च। प्रथमोऽपि भेदः गीति-प्रस्तुति-स्फुटभेदेन त्रिविधः। द्वितीयो हि स्तुतिकाव्यमेव। तृतीयस्तु नीतिपरकः (स एव



उपदेशपरकः इति कथ्यते), अन्योक्तिरूपश्च। चतुर्थभेदस्तु सङ्ग्रहपरकः सुभाषितसङ्ग्रहः कोषश्चास्य भेदौ। क्वचिच्च सर्वेषामेव पक्षाणां मिश्रणमपि दृश्यते।

**खण्डकाव्यस्योत्पत्तिः** - यद्यपि लौकिकसाहित्ये खण्डकाव्यस्योद्घाटनं कालिदासेनैव कृतं तथापि न एतावता तस्य तस्मादपि प्राचीनतरत्वं व्याहन्यते। ऋग्वेदादावपि खण्डकाव्यस्य स्वरूपमुपलभ्यते। कमनीयार्थद्योतकं वाक्यमेव भवति काव्यम्। यत्र हि किञ्चिदपि वाक्यं तथारूपेणोपन्यस्तं भवति, तत्र खण्डकाव्यस्य विषयः उत्पद्यते एव। तेन हि वाक्यस्य काव्यत्वेऽन्तस्तत्वमेव हेतुर्न तु बाह्यम्। वाक्यौघः अर्थात् वाक्यराशिः काव्यं भवति, एकं वाक्यम् अपि काव्यं भवति यदि तत्कमनीयमर्थं प्रकाशयति। ऋग्वेदादौ सन्ति एतादृशानि वचनानि यानि खलु काव्यत्वं बिभ्रति। यथा हि उषःसूक्तम्, विपाशाशुतुद्रीसूक्तम्, सुदासविजयसूक्तम्, भूमिसूक्तं च इत्यादिसूक्तेषु।

हंसराजप्रभृतयः समालोचकाः खण्डकाव्यं पञ्चविधं मन्यन्ते सूक्तमयं भक्तिरसमयम् ऐतिहासिकं रूपकान्तर्गतं सङ्कीर्णञ्च। तेषु हि वेदेषु समुपन्यस्तं सूक्तमयं यथा उषःसूक्तम्, भक्तिरसमयं यथोपनिषत्सु बौद्धादिग्रन्थेषु च, ऐतिहासिकं यथा रामायणे महाभारते प्रस्तुतं प्रकृतप्रकृतिवर्णनम्, रूपकान्तर्गतं यथा रूपकान्तरुपस्थापितपद्यानि, सङ्कीर्णञ्च शृङ्गारप्रधानं मेघदूतादिकमिति।

## ११.३.५) यमककाव्यानि

यथा शास्त्रकाव्यं देवकाव्यं च पृथक् वर्गभेदे स्थापितं तथैव यमककाव्यं श्लेषकाव्यञ्चापि पृथग्वर्गमर्हत इति प्रथमं यमककाव्यानि ततः श्लेषकाव्यानि च दर्श्यन्ते।

यमकानि बहुविधानि रीतिग्रन्थेषु दृश्यन्ते तत्र कविभिः अत्यन्तमात्रायाम् इमानि समादृतानि कालिदासादिभिः। कतिपयेषु स्वल्पकाव्येषु तेषामादरं तानि प्रयुज्य कृतवन्तस्तत्र साफल्यमलभन्त च। दण्डिना स्वीये काव्यादर्शे यमकं विस्तरेण प्रपञ्चितम्। द्विसन्धाननामकं किमपि काव्यमपि तादृशं दण्डिना स्मृतम्।

**घटखर्परस्य 'यमककाव्यम्'**

घटखर्परस्य वास्तविकं नाम न स्मर्यते, तेन हि-

आलम्ब्य चाम्बुतृषितः करकोशपेयं भावानुरक्तवनितासुरतैः शपेयम्।
जीयेय येन कविना यमकेन तेन तस्मै वहेयमुदकं घटखर्परेण॥

इतीदृशी प्रतिज्ञा कृता, तदारम्भ तस्य घटखर्परसंज्ञयैव प्रथा जाता।

इदं यमककाव्यं केवलैः द्वाविंशत्या श्लोकैः सम्पूर्णम्। अस्य कालिदासप्रणीतत्वं ये प्रतियन्ति ते भ्राम्यन्ति। अस्य ग्रन्थस्याष्टौ टीकाः प्रथन्त सन्दिशति। अस्य रचनाकालो निर्धारयितुं न शक्यते।

**नीतिवर्मणः 'कीचकवधकाव्यम्'**

अस्य रचयिता पूर्वभारतवासी कश्चन कविः प्रतीयते। अत्र पञ्च सर्गाः, १७७ श्लोकश्च सन्ति। आदिमेषु चतुर्षु सर्गेषु यमकप्रपञ्चो हृद्यतमः।

**वासुदेवस्य 'नलोदयकाव्यम्'**



केरलदेशवासिना वासुदेवेन रचितं नलोदयकाव्यं यमककाव्येषु प्रसिद्धतमम्। अत्र चतुर्षु सर्गेषु २१७ श्लोका निबद्धाः। अनेनैव कविना यमकमयं युधिष्ठिरविजयोदयं नाम काव्यान्तरमपि प्रणीतम्। अयं वासुदेवः कुलशेखरवर्मसमकालिकतया दशमशतकोत्पन्न इति कथ्यते। नलोदयकाव्यस्य यमकं नितान्तरमणीयम्। एकमुदाहरणं दृश्यताम्-

'योजनि ना गोपीतश्चचार यो वल्लवाङ्गनागोपीतः।

भूर्येना गोपीतः कंसारेर्द्वेषमेव योनागोपीतः॥'

## ११.३.६) श्लेषकाव्यानि

**सन्ध्याकरनन्दिनो 'रामचरितम्'**

अयं सन्ध्याकरनन्दी वंगवर्तिनः पुण्ड्रवर्धनस्थस्य पिनाकिनन्दिनः पुत्रः प्रजापतिनन्दिनश्च पौत्रोऽवर्त्तत। अस्य पूर्तिः कविनानेन एकादशशतकान्तभागोत्पन्नस्य राज्ञो मदनपालस्य समये कृतेति अस्य समयो निश्चितः। अत्र काव्ये पालवंशोद्भवस्य रामपालस्य भगवतो रामस्य च वर्णनं श्लेषमयभाषयाऽकारि। वंगदेशस्य मध्ययुगीनम् इतिहासं ज्ञातुमिदं काव्यमुत्तमं साधनम्।

**धनञ्जयस्य 'राघवपाण्डवीयम्'**

अस्य कवेः समयः ११२३-११४० खीष्टीयो मन्यते। अत्र अष्टादशसु सर्गेषु रामायणमहाभारतयोः कथा महता चातुर्येण निबद्धा।

एतादृशानि अन्यकाव्यानि-

| ग्रन्थाः | कर्त्तारः | समयः |
|---|---|---|
| राघवपाण्डवीयम् | कविराजमाधवभट्टः | द्वादशशतकान्तभागः |
| राघवनैषधीयम् | हरदत्तसुरिः | अष्टादशशतकम् |
| पार्वतीरुक्मिणीयम् | विद्यामाधवः | द्वादशशतकमध्यमम् |
| यादवराघवीयम् | वेङ्कटाध्वरी | सप्तदशशतकम् |
| राघवपाण्डवयादवीयम् | चिदम्बरकविः | १५८६-१७१४ ई० |
| रामकृष्णविलोमकाव्यम् | दैवज्ञसूर्यः | षोडशर्शतकपूर्वार्द्धम् |



## पाठगतप्रश्नाः-१

१. ऐतिहासिककाव्यस्य किमुदाहरणम्?

२. पाणिनेः जाम्बवतीविजयः कीदृशं काव्यम्?



३. महाकाव्ये कति सर्गाः अवश्यमेव स्युः?

४. भट्टिकाव्यं कीदृशं काव्यम्?

५. रावणार्जुनीयं केन विरचितम्?

६. यमककाव्यस्य एकम् उदाहरणं दीयताम्।

७. सन्ध्याकरनन्दिनः रामचरितं कीदृशं काव्यम्?

८. यादवराघवीयकाव्यस्य रचनाकालः कः?

## ११.४) दृश्यकाव्यम्

यस्य काव्यस्य रसास्वादनं काव्यस्य अभिनयदर्शनेन किञ्च अभिनेतृणां वार्तालापस्य श्रवणेन भवति तत् काव्यं दृश्यकाव्यम् उच्यते। यथा अभिज्ञानशाकुन्तलम्। दृश्यकाव्यस्य भेदद्वयं वर्तते। रूपकम् उपरूपकं च।

### ११.४.१) रूपकम्

रूप्यते कल्प्यते चतुर्विध-अभिनयेन प्रत्यक्षीगोचरीक्रियते येन तद्रूपकम्। अतः कविना स्वप्रतिभया काव्यस्य अभिनयार्थं यदा कल्पना क्रियते तदा तत् काव्यं रूपकम् इत्युच्यते। रुपकस्य दश प्रकाराः सन्ति। ते क्रमशः अधः आलोचयिष्यन्ते। संस्कृतसाहित्यजगति साहित्यान्तरमिव रूपकसाहित्यमपि सुसमृद्धं विद्यते। तत्र तस्य हि स्वकीया एव विशिष्टपरम्परा। लोकप्रियतादृष्ट्या काव्येषु रूपकसाहित्यस्य प्रथमं स्थानम्। तस्य हि त्रयाणाम् एव अङ्गानां नाट्यनृत्यनृत्तानां वैदिकयुगात्प्राग् अपि अस्तित्वम् आसीत् इति वेदसाहित्यत एव सिध्यति। ऋग्वेदे हि उषा नर्तकीरूपेण चित्रिताऽस्ति। तथाहि-

"अधि पेशांसि वपते नृतूरिवापोर्णते वक्ष उस्रेव वर्जहम्।

ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्युषा आवर्तमः"॥ इति। (ऋ.१।९२।४)

एवमेव तत्र नाट्यतत्त्वेषु मुख्यतमं कथोपकथनम् अपि दृश्यते यथा पुरुरवोर्वशीसूक्ते, यमयमीसूक्ते, इन्द्रेन्द्राणीदृषाकपिसंवादे च। कात्यायनश्रौतसूत्रे सोमपानावसरे अभिनयस्य प्रसङ्गः अपि आयाति। यथा- 'अपोर्णुते दीक्षितः शिरः' (ऋ. ७।८।२५) इति। यजुर्वेदे हि नृत्तगीतयोः कृते जातेः एव उल्लेखो दृश्यते सूतशैलूषादीनाम्। यथा-

'नृत्ताय सूतं गीताय शैलूषं (३०।६)।

शब्दायाडम्बराघातं महसे वीणावादं (३०।१९)।

नमयि पुंश्वलूं हसाय कारिं' (३०।२०)।

इत्थं हि वैदिककाले समुप्तं नाट्यबीजं रामायणकाले समुद्गतं दृश्यते। तदा नाट्यं नृत्तं गानञ्च जीवनस्य अनिवार्य-अङ्गत्वेन गृहीतानि दृश्यन्ते तथैव अभिनयः अपि। तत्र नटनर्तकादीनां सङ्घस्य अपि उल्लेखो दृश्यते। यथा-



"नटनर्तकसङ्घानां गायकानां च गायताम्।

यतः कर्णसुखा वाचः शुश्राव जनता ततः॥" इति।

महाभारते रामायणे च कौबेरः रंभाभिसारश्चेति नाटकद्वयस्य नाम्नैवोल्लेखो दृश्यते। हरिवंशे वसुदेवयज्ञप्रसङ्गे भद्राख्यस्य नटस्य नाट्यप्रदर्शनं स्मृतम् अस्ति।

विनयपिटके रङ्गशालाया उल्लेखो दृश्यते चुल्लवग्गकथाप्रसङ्गे। पातञ्जले महाभाष्ये अपि कंसवध-वालिवधाख्यनाटकद्वयं स्मृतम् अस्ति। शुङ्गकालात्तु नाट्ययुग एव प्रवर्तितो दृश्यते। संस्कृतनाटकसाहित्यस्य उत्पत्तिम् अधिकृत्य पण्डितेषु विविधानि मतानि सन्ति। तदनुसारेण अनुकरणप्रवृत्तिः एव नाटकस्य मूलाधारः। अनुकरणप्रवृत्तिस्तु मनुष्यस्य सर्वासु प्रवृत्तिषु मूर्धन्या। विशेषतो बालकेषु प्रवृत्तिरेषा प्रौढापेक्षया विशिष्टतमा। इयमेव प्रवृत्तिः क्रमशः अभिनयस्य पश्चात् च नाट्यस्य योनिः समुपद्यते। प्रथमतस्तु प्रवृत्तिरेषा वीरपूजायाम् मूर्तरूपेण दृश्यते। स्वर्गतवीरपुरुषाणां स्मृतौ तान् प्रति सम्मानप्रदर्शनाय समये समये सामूहिकोत्सवाः आयुज्यन्ते स्म। ते हि समाजशब्देन व्यपदिश्यन्ते स्म। तादृशे हि समाजे श्रद्धेयवीरचरितम् अनुक्रियते स्म अभिनयकुशलैः। रामलीला कृष्णलीला च अस्य एव उदाहरणेषु अन्यतमे। तत्र हि प्राकृतिकपरिवर्तनानां मूर्तरूपेण उपस्थापनप्रवृत्तिः अपि नाट्योत्पत्तौ सहायिका आसीत्। पुत्तलिकानृत्यस्य अपि अत्र योगदानं महार्घ्यम् एव आसीत् इति सम्भवति। इन्द्रध्वजोत्थानप्रभृतयः महोत्सवा अपि नाट्योत्पत्तौ सहकारिकारणानि सम्भवन्ति। वस्तुतः तु नाट्योत्पत्तेः मनुष्यस्य स्वाभाविकी अनुकरणप्रवृत्तिः एव योनिः। भरताचार्यः तु नाट्योत्पत्तेः अन्यद् एव कारणं निर्दिशति। तदनुसारेण हि वैवस्वतमन्वन्तरे त्रेतायुगे प्रथमे लोके सुखदुःखाभिभूतत्वेन ग्राम्यधर्मे प्रवृत्ते तस्य शिक्षणाय सार्ववर्णिकवेदरचनार्थम् इन्द्रादिभिः प्रार्थितः पितामह ऋग्वेदात्पाठ्यं सामभ्यो गीतं यजुर्वेदात् अभिनयं रसानाथर्वणादादाय वेदोपवेदसम्बद्धं नाट्यवेदं प्रणिनाय। ततश्च भरतमुनिः तस्य प्रयोगाय ब्रह्मणा आदिष्टः। इन्द्रध्वजमहे नान्दीपुरःसरं वेदस्य अस्य प्रथमः प्रयोगः कृतः। (नाट्यशास्त्रम् १।५६) परमेष्ठिप्रणीतः अमृतमन्थनो नाम समवकारः नाट्यत्वेन प्रथमतः अभिनीतः, ततश्च द्वितीयतस्त्रिपुरदाहाख्यो डिमो ब्रह्मप्रणीतः (४।२।२।१०) इति। यद्यपि भरतमते वास्तविकतापेक्षया पौराणिकत्वम् एव अधिकं विलसति तथापि एतस्माद् एतत् तु सिध्यति यदिन्द्रध्वजोत्सवायोजना हि नाट्यस्य प्रथमतः प्रेरिकेति। नाट्योत्पत्तिविषये रिजवेमहोदयस्य वीरपूजामतं कीथस्य प्राकृतिकपरिवर्तनमतापेक्षया पिशेलस्य पुत्तलिकानृत्यमतापेक्षया कोनोमहोदयस्य च्छायानाटकापेक्षया अपि प्रशस्यतरं प्रतिभाति यतो हि तदेव मतं वस्तुतो नाट्याचार्यभरतमतेन सह संवदते अपि। अमृतमन्थनं त्रिपुरदाहश्च वीरपूजापरम्पराया एव ग्रन्थविशेषौ।

नाट्यस्य प्रयोजनं हि लोकरञ्जनपूर्वकं धर्मार्थकामशिक्षणम्। उक्तमेव-

'त्रिवर्गसाधनं नाट्यम्'। तत्रापि लोकरञ्जनम् एव नाट्यस्य मूलभूतम् उद्देश्यम्। यथा आह धनञ्जयः-'आनन्दनिःस्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः' इति। एतद्धि दुःखार्तानां श्रमार्तातां शोकार्तानाञ्च विश्रामजननम्। इदं हि त्रैलोक्यस्यास्य भावानुकीर्तनं सर्वेषाम् एव विनोदजननञ्च। यथा आह कालिदासो मालविकाग्निमित्रे-



**"देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं**
**रुद्रेणेदमुमाकरव्यतिकरे स्वाङ्गे विभक्तं द्विधा।**
**त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते**
**नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्॥" इति। (१।४)**

अवस्थानुकृतिः नाट्यं तच्च रसाश्रयम्। अन्यद्भावाश्रयं नृत्यं ताललयाश्रितं नृत्तम्। वस्तु-नेतृ-रसभेदान्नाट्यं दशविधं नाटक-प्रकरण-भाण-व्यायोग-समवकार-डिम-ईहामृग-अङ्ग-वीथी-प्रहसन-भेदात्। वस्तु द्विविधमाधिकारिकं प्रासङ्गिकञ्च। तच्च पुनः प्रसिद्धकल्पितभेदात् द्विविधम्। नेता चतुर्विधो धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्त-भेदात्। रसा अष्टौ शृङ्गार-वीर-करुणाद्भुत-हास्य-भयानक-बीभत्स-रौद्र-भेदात्। व्यापाराभावेन अभिनयासम्भवात् नैव शान्तस्य नाट्ये पुष्टिः इति केचित्। रामचन्द्रमते तु तस्यापि पुष्टिः अभिनयसम्भवात्। दृश्यतया हि नाट्यं रूपमित्यप्युच्यते समारोपाद्रूपकमपि। अभिनय एव नाट्यस्य जीवनम्। तच्चतुर्विधं वाचिक-आङ्गिक-आहार्य-सात्त्विक-भेदात्। नटादौ पात्राणां तादात्म्यायत्या नाट्ये सामाजिकानां रसास्वादनसम्भवः।

### रूपकस्य प्रकाराः

रूपकस्य दश प्रकाराः सन्ति।

**"नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।**
**ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश॥"** इति।

### १) नाटकम्

भारतीयनाटकानामुद्भवः कथम् अभूत् इति विषये विचार्यमाणे प्रथमं पाश्चात्त्यपण्डितानां मतानि द्रष्टव्यानि। तत्र रिजवे-महोदयः वीरपूजामूलकं भारतीयनाटकानामुद्भवं प्राह। तन्मतेन मृतानां वीरपुरुषाणां सत्काराय समवेतालोका यत्तदीयचरितमनुचक्रुः तन्मूलिकैव भारते नाटकप्रवृत्तिः। रामलीला कृष्णलीला चात्र निदर्शनभावं भजतः।

डा. कीथमहोदयस्तु-'प्राकृतिकपरिवर्तनानां मूर्तं रूपं साधारणजनसमक्षम् अवतारयितुमेव नाटकानामुदयो जातः। कंसवधनामके महाभाष्यनिर्दिष्टे नाटके कृष्णपक्षीया रक्तमुखाः कंसपक्षीयाश्च श्याममुखाः भवन्ति। तत्र वसन्तस्य हेमन्तोपरि विजय एव दर्शयितुम् अभिलषितः। कृष्णविजयेन प्रकृतिप्रकोपं प्रति प्रकाश आधीयत' इत्याह।

डाक्टर-पिशेलमहोदयस्तु- पुत्तलिकानृत्यमूलं नाटकानाम् उदयमाह। नाटकेषु प्रचलिताः सूत्रधारव्यवस्थापकादिशब्दा एतन्मतम् उपोद्बलयन्ति, समर्थयन्ति। सूत्रधारः सूत्रमादाय पुत्तलिकां नर्त्तयति, व्यवस्थापकश्च तामादाय यथास्थानं रक्षति। इमौ शब्दौ पुत्तलिकानृत्ये व्यवह्रियते स्म, सम्प्रति नाटकेषु व्यवह्रियेते इति पुत्तलिकानृत्यमूला नाटकप्रवृत्तिः सम्भाव्यते।

कतिपये पाश्चात्त्यविद्वांसो भारतीयनाटकानामुदयं पोलनृत्याधारमाहुः।शीतप्रधाने पाश्चात्त्यदेशे मईमासोऽतिहृद्यो भवति। तस्मिन् मासे ध्वजाकारं वंशमेकमारोप्य तदधः स्त्रीपुंससमाजो नृत्यति स्म।



एतदाधारैव नाटकानामुत्पत्तिः। अमुम् आधारम् अगणयन्तो विद्वांसः विचारम् इमम् अक्षोदक्षमं (युक्तिहीनम्) मन्यन्ते।

अपरे भारतीया विद्वांसो नाटकानामुदयं वेदस्थितसूक्तमूलकमाहुः। ऋग्वेदे अनेकानि कथनोपकथनप्रधानानि यमयमीसूक्त-सरमापणिसंवादसूक्त-ऊर्वशीपुरूरवःसंवादसूक्त-प्रभृतीनि सूक्तानि सन्ति, यानि आधारीकृत्य नाटकानि जातानि दृष्टान्तरूपेण ऊर्वशीपुरूरवःसंवादमूलं कालिदासीयं विक्रमोर्वशीयं नाम त्रोटकम् उपस्थापयितुं शक्यते।

जर्मनविद्वान् डाक्टरश्रोदरमहोदयोऽपि विचारम् इमम् अनुमोदयति। स हि संवादसूक्तेषु एषु गानमामनति। तदिदं गायनं नृत्येन अभिनीयते स्म, तदिष्यतेऽस्य संवासूक्तनिवहस्य धार्मिकनाटकरूपता। एतन्मूलैव च भारतीयनाटकप्रवृत्तिः इत्याह।

डाक्टर-हर्टलमहोदयोऽपि श्रोदरमहोदयस्य विचारमनुमोदयति। अपरे पुनर्विद्वांसो विण्डिश-ओल्डेनवर्ग-पिशेल-मुख्या अभिप्रयन्ति यत् संवादसूक्तानि पुरा गद्यपद्यात्मकानि आसन्। पद्यभागोऽतिरोचकतया सम्प्रति अवशिष्यते। गद्यभागस्तु केवलवर्णनपरतया लुप्तप्रायतां गतः। नाटके यदधुना गद्यपद्ययोः मिश्रणं दृश्यते तदपि एतादृशसंवादसूक्तमूलकमेव। एते विद्वांसः ऐतरेयब्राह्मणगतं शुनःशेपोपाख्यानं शतपथब्राह्मणगतमुर्वशीपुरूरव-उपाख्यानं चात्र साक्षिभावेन उपस्थापयन्ति।

नाटकानामुत्पत्तेर्विषये भारतीयं भरतानुसारिमतमधो निर्दिश्यते-

'महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः।

क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत्॥' इति।

अस्मात् श्लोकात् ज्ञायते यत् चतुर्मुखब्रह्मा देवतानां विनोदनाय नाटकं सृष्टवान्।

'नाटकं ख्यातवृत्तं स्यात्' इति प्राचीनः सम्प्रदायः। आधुनिकास्तु कल्पितवृत्तमपि नाटकं मन्यन्ते।

रूपकनाटकयोर्मध्ये प्राचीना इदमेव भेदकं निर्णयन्ति यत् नाटके ख्यातं वृत्तं, रूपके कविकल्पितं तत्। प्राचीनसंस्कृतसाहित्ये रूपकाणां निर्माणमपि महता प्रयासेन विधीयते स्म। विशालमिदम् अङ्गम्, तत्र प्रसिद्धानि कतिचन रूपकाणि प्रदर्श्यन्ते-

| क्रमः | रूपकाणि | कर्तारः |
|---|---|---|
| १. | मालतीमाधवम् | भवभूतिः |
| २. | मृच्छकटिकम् | शूद्रकः |
| ३. | मल्लिकामारुतम् | उद्दण्डः |
| ४. | कौमुदीमित्रानन्दम् | जैनाचार्यहेमचन्द्रस्य शिष्यः रामचन्द्रः |
| ५. | प्रबुद्धरौहिणेयम् | विरामभद्रः |
| ६. | मुद्रितकुमुदचन्द्रम् | यशश्चन्द्रनामकः जैनकविः |



प्रबोधचन्द्रोदय-चैतन्यचन्द्रोदय-जीवानन्द-विद्यापरिणयादीनि तु कविकल्पितकथाघटितानि अपि नाटकानि एव। तेषां पात्राणि कविभिः कल्पितानि सन्त्यपि प्रसिद्धमनोभावरूपाण्येवेति सर्वथा काल्पनिकपात्रघटितत्वाभावात्। अत एव इमानि नाटकतया एव प्रथन्ते।

### २) प्रकरणम्

प्रकरणे धीरप्रशान्तः नायकः भवति। नायिका कुलस्त्री गणिका भवति। शृङ्गारः अङ्गी रसः भवति। प्रकरणं पञ्चात्मकं भवति। प्रकरणस्य एकम् उदाहरणं मृच्छकटिकम्।

### ३) भाणः

संस्कृतसाहित्ये प्राचीनतादृष्ट्या भाणस्यापि स्थानं नाटकवत् प्रतिष्ठितम्। धूर्तस्य नायकस्य चरितम्, एक एवाङ्कः, हास्यरसस्य प्राधान्ये सत्यपि सौभाग्यशौर्यादिवर्णनया शृङ्गारवीररससूचना, भारतीवृत्तिश्च भवति। भाणरचनायां यशोलाभः प्रयाससाध्यो भवति, यथोक्तम्-

'वररुचिरीश्वरदत्तः श्यामिलकः शुद्रकश्च चत्वारः।
एते भाणान् बभणुः का शक्तिः कालिदासस्य ॥'

भाणग्रन्थेषु वररुचेः उभयाभिसारिका, शूद्रकस्य पद्माप्राभृतकम्, ईश्वरदत्तस्य धूर्तविटसंवादः, श्यामिलकस्य पादताडितकम्, वामनभट्टबाणस्य शृङ्गारभूषणम्, रामभद्रदीक्षितस्य शृङ्गारतिलकम्, वरदाचार्यस्य वसन्ततिलकम्, शङ्करकवेः शारदातिलकम्, नल्लाकवेः शृङ्गारसर्वस्वम्, युवराजस्य रससदनभाणः, साहित्यदर्पणोक्तः लीलामधुकरश्चेत्यादयो ग्रन्थाः स्मर्यन्ते।

### ४) व्यायोगः

व्यायोगनामकरूपकप्रभेदसाहित्यमपि संस्कृते न दुर्लभम्। व्यायोगे प्रसिद्धमितिवृत्तम्, स्त्रीपात्रविरहः, बहुपुरुषपात्रता, गर्भविमर्शसन्ध्यभावः, कैशिकीवृत्तिः प्रख्यातश्च नायको भवति। हास्यशृङ्गारशान्तभिन्नाः रसाः।

व्यायोगग्रन्थेषु द्वादशशतकोत्तरार्धभववत्सराजकविकृतः किरातार्जुनीयव्यायोगः, भासस्य मध्यमव्यायोगः, प्रह्लादनदेवविरचितः पार्थपराक्रमः, काञ्चनार्यस्य धनञ्जयविजयः, रामचन्द्रस्य निर्भयभीमव्यायोगः, विश्वनाथस्य सौगन्धिकाहरणम् इत्यादयो ग्रन्थाः प्रख्याताः।

### ५) समवकारः

समवकारे देवासुराश्रयं ख्यातं वृत्तम्, द्वादश नायकाः, वैदिकानि गायत्र्यादीनिच्छन्दांसि, वीरः प्रधानो रसः। समवकीर्यन्ते बहवो रसा यत्रेति व्युत्पत्या सर्वरसावस्थानं सूच्यते। एतत्प्रभेदसाहित्यमल्पम्, यथा वत्सराज्यस्य समुद्रमथनम्।



### ६) डिमः

रौद्ररसप्रधानः, ख्यातेतिवृत्तः, चतुरङ्कः, षोडशभिः उद्धतनायकैः उपेतः, शान्तहास्यशृङ्गारभिन्नैः रसैः उपस्कृतः, कैशिक्यतिरिक्तवृत्तिशाली च भवति डिमः। अस्योदाहरणं च 'त्रिपुरदाहः' इति महर्षिः। तदुक्तम्-

'इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम्।

ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः॥'

'डिम-सङ्घाते'इति नायकसंघातव्यापारात्मकत्वाड्डिम इति संज्ञेति धनिकः। वेङ्कटवर्यस्य 'कृष्णविजयः' रामकवेः 'मन्मथोन्मथनम्' इति च अपरे उदाहरणे।

### ७) ईहामृगः

ईहामृगे ख्यातं कल्पितं किञ्चिद् अंशं च वृत्तम्, चत्वारोऽङ्काः, त्रयः सन्धयः, सङ्घर्षसङ्कुलं कथानकं भवन्ति। मृगवदलभ्यायां नायिकायाम् अभिलाषस्य वर्णनीयतया ईहामृग इति नामकरणम्। प्राचीनयोः 'वीरविजय''रुक्मिणीहरण' नामकयोरीहामृगग्रन्थयोः यद्यपि उपलब्धिर्न भवति, तथापि वत्सराजकृतं रुक्मिणीपरिणयपुस्तक प्राप्यत इति तदेवैकमस्योदाहरणमं लभ्यम्। साहित्यदर्पणोक्तः 'कुसुमशेखरविजय' नामकोऽपीहामृगग्रन्थोऽप्राप्य एव।

### ८) वीथी

वीथीनामनि रूपकप्रभेदे भाणसमानैव कथा, एकोऽङ्कः शृङ्गारोऽनुद्भिन्नरूपो रसः,कैशिकी वृत्तिश्च। 'माधवीवीथी' इति नाममात्रशेषोऽस्य निदर्शनग्रन्थः।

### ९) अङ्कः

पुराणेतिहासप्रसिद्धं कथानकम्, करुणः प्रधानो रसः, वास्तवयुद्धाभावेऽपि वाग्युद्धम्, इत्यादिसामग्री अङ्केऽपेक्ष्यते। एतदुदाहरणं 'शर्मिष्ठाययाति' नामकमप्राप्यम्। भास्करकवेः उन्मत्तराघवं नाम अङ्कस्य उदाहरणपुस्तकं लभ्यते, परन्तु तद्रचनाकालो नावधार्यते।

### १०) प्रहसनम्

हास्यरसस्य समाजे महानुपयोगे शिष्टहासस्य बहुल आदरः, समाजविरोधितत्त्वस्य मार्गस्थाने हास्यरसप्रधानकाव्यस्य उपयुक्तभावश्च प्रहसनकाव्यस्य सृष्टौ कारणतां गतः। यथाऽधुना हास्यरसप्रधानं व्यङ्गमयं च काव्यं कामपि विशिष्टां मर्यादां रक्षति, नानायासं लिख्यते, तथैव प्रागपि प्रहसनं बहुलतया नालिख्यत, तथाऽपि संस्कृतसाहित्ये प्रहसनग्रन्थस्य एकान्ततोऽभावो नास्ति।

प्रहसने भाणवत् सन्ध्यादयः, निन्दनीयत्वेन वर्ण्यमानानां कल्पितं वृत्तम्, विष्कम्भकप्रवेशकराहित्यम्, हास्यरसप्राधान्यश्च भवति।

सर्वप्राचीनः प्रहसनग्रन्थः 'मत्तविलासः'। तस्य रचयिता पल्लवनरेशस्य सिंहविष्णुवर्मणः पुत्रो महेन्द्रविक्रमवर्माऽऽसीत्। अयं च राजा हर्षवर्धनपुलकेशिद्वितीययोः समकालिक इत्यस्य समयः ख्रीष्टीयसप्तमशतकस्य पूर्वार्धभागो मान्यः।



### ११.४.२) उपरूपकम्

रूपकवत् आचरति व्यभिचरति तद् उपरूपकम्। उपरूपकस्य अष्टादश प्रकाराः सन्ति। ते प्रकाराः सोदाहरणं अधः लिख्यन्ते।

१. नाटिका- रत्नावली।

२. त्रोटकम्- विक्रमोर्वशीयम्।

३. गोष्ठी- रैवतमदनिका।

४. सट्टकम्- कर्पूरमञ्जरी।

५. नाट्यरासकम्- नर्मवती।

६. प्रस्थानकम्- शृङ्गारतिलकम्।

७. उल्लाप्यम्- देवीमहादेवम्।

८. काव्यम्- यादवोदयम्।

९. प्रेङ्खणम्- वालीबधम्।

१०. रासकम्- मेनकाहितम्।

११. संलापकम्- मायाकापालिकम्।

१२. श्रीगदितम्- क्रीडारसातलम्।

१३. शिल्पकम्- कनकावतीमाधवम्।

१४. विलासिका- (न प्राप्यते)

१५. दुर्मल्लिका- बिन्दुमती।

१६. प्रकरणिका- (न प्राप्यते)

१७. हल्लीशः- केलीरैवतकम्।

१८. भणिका- कामदत्ता।

## ११.५) दृश्यकाव्यस्य प्राचीनता

संस्कृतसाहित्ये दृश्यकाव्यानाम् उदयः प्राचीनकाल एव अजायत। वैदिकयुगे दृश्यकाव्यानामस्तित्वं प्रमाणितम्। ऋग्वेदीयसूक्तैः प्रतीयते यत् तदा दृश्यकाव्यम् अप्रथत। सोमविक्रयसमये क्रियमाणस्य अभिनयस्य वर्णनं तत्काले दृश्यकाव्यस्य सद्भावं गमयति। संहिताब्राह्मणग्रन्थयोः शैलूषशब्दोपलब्धिः अपि वैदिकयुगे दृश्यकाव्यस्य अस्तित्वं प्रमापयति। महाव्रते वृष्टेः पशुसमृद्धेः च उपलब्धौ सत्यां वह्नेः समन्ततः कुमारिकाणां नृत्यस्य वर्णनं दृश्यते, तदपि अत्र अर्थे प्रमाणभावं भजते। ऋग्वेदगताः यमयमीसंवादाः सरमापणिसंवादाश्च तदानीं नाटकस्य अस्तित्वं गमयितुं क्षमाः। सामवेदे गानप्रधाने ऋक्षु संवादात्मिकासु च सतीषु नाटकानाम् अस्तित्वं तदातनम् अपलपितुम् अशक्यमेव।



रामायणकाले दृश्यकाव्यानाम् अस्तित्वस्य स्फुटप्रमाणमिह उपलभ्यते। रामायणे 'शैलूष'-'नट'-'नर्तक'प्र-भृतीनां दृश्यकाव्याङ्गानामुल्लेखो विद्यते। 'साँची' स्थाने प्राप्तासु मूर्तिषु कथकानां समूहस्य मूर्त्तयोऽप्यलभ्यन्त यासु तच्चेष्टाभिरभिनयः प्रकाश्यते। महाभारताङ्गभूते हरिवंशे रामचरिताभिनयस्य उल्लेखो लभ्यते। एभिः प्रमाणैस्तदात्वे दृश्यकाव्यसद्भावः प्रमापितो भवति।

पाणिनिप्रणीतायाम् अष्टाध्याय्याम् 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' (४/३/११०) 'कर्मन्दकृशाश्वादिनिः' (४/३/१११ इति सूत्रद्वयं) दृश्यते। अतः सिद्धमिदं यत्तत्र समये नटानां शिक्षार्थं सूत्राणि विरच्यन्ते स्म। नटानां शिक्षा चाभिनयस्य प्ररूढप्रचारतां गमयति।

भगवतः पतञ्जलेः महाभाष्यमपि तदीये समयेऽभिनयस्य सद्भावं प्रकटयति। तत्र हि-'ये तावदेते शोभनिका नामैते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षं च बलिं बन्धयन्ति' इत्युक्तम्। प्रत्यक्षकंसवधबलिबन्धौ सम्भवतोऽभिनय एवेति सिद्ध्यति तदाभिनयप्रचारः।

द्वितीयशतकनिर्मिते वात्स्यायनीये कामसूत्रे लिखितम्-'पक्षस्य मासस्य वा प्रज्ञातेऽहनि सरस्वत्या भवने नियुक्तानां नित्यं समाजः। कुशीलवाश्चागन्तवः प्रेक्षकमेषां दद्युः'। नागरिकाणां मनोरञ्जनस्य साधनतयाऽभिनयः प्रमीयतेऽनया वात्स्यायनोक्त्या।

तदेवमुपरितनैरुल्लेखैः प्रमाणितं तद्वैदिककालाद् आरभ्य विक्रमसमयं यावत् अभिनयस्य अत्र देशे प्रचुरः प्रचारः आसीत्। विक्रमसमयात्परतस्तु जाते कालिदासादीनामुदये नाटकप्रचारः अत्र अविच्छिन्नप्रवाह एवाभूत्।



## पाठगतप्रश्नाः-२

९. किं नाम रूपकम्?

१०. उषा देवी कुत्र नर्तकीरूपेण चित्रिता?

११. मालतीमाधवं केन कृतम्?

१२. शूद्रकेण विरचितस्य नाटकस्य नाम किम्?

१३. भाणग्रन्थस्य उदाहरणमेकं दीयताम्?

१४. त्रोटकस्य एकम् उदाहरणं लिख्यताम्?

१५. कामदत्ता इति ग्रन्थम् उपरूपकेषु कुत्र अन्तर्भवति?

१६. रूपकस्य कति भेदाः?

१७. उपरूपकस्य कति भेदाः?

१८. सट्टकम् इति कस्य भेदः। (रूपकस्य/उपरूपकस्य)



## ११.६) शैल्यनुसारं काव्यस्य भेदाः

उपर्युक्तं काव्यभेदाः काव्यस्य स्वरूपदृष्ट्या विहिताः। शैल्यनुसारं पुनः काव्यं त्रिधा विभक्तम्। गद्यकाव्यं, पद्यकाव्यं, चम्पूकाव्यं च। गद्यात्मकं काव्यं गद्यकाव्यं, पद्यात्मकं काव्यं पद्यकाव्यं, गद्यपद्योभयात्मकं काव्यं चम्पूकाव्यम् इत्युच्यते।

## ११.७) गद्यकाव्यम्

संस्कृते पद्यसाहित्यमिव गद्यसाहित्यं परप्रकर्षम्। वेदकालेऽपि गद्यस्य प्रयोगः प्रचुरप्रचार आसीत्। संहिताग्रन्थेषु गद्यस्य भूयसी मात्राऽवाप्यते। अथर्ववेदस्य गद्यबहुलता सुप्रतीता।

पद्यं प्रति लेखकानामादरातिशयेन आयुर्वेदज्यौतिषादि-वैज्ञानिकग्रन्थेषु यद्यपि पद्यापेक्षया गद्यस्य मात्रा स्वल्पतमा तथापि चरकादिषु गद्यभागः अपि उपलभ्यत एव।

पद्यमयं हि ग्रन्थं पाठकाः सुखमभ्यस्यन्ति, कण्ठे स्थापयन्ति चेति पद्यमयो ग्रन्थस्तालल्याश्रिततया रोचकः प्रचारोपयुक्तश्च भवतीति धिया च पद्यं भूयसा प्रायुज्यत प्राचीनशास्त्रीयग्रन्थेष्वथापि गद्यस्य तत्रापि समावेशो दुरपह्नव एव।

संस्कृतगद्यस्य विकासक्रमेण उदहरणानि यथा – 'ऋतं च सत्यञ्चाभीद्धात्तपसोऽध्यजायत, ततो रात्र्यजायत, ततः समुद्रोऽर्णवः समुद्रादर्णवादधि, संवत्सरोऽजायत, अहोरात्राणि विदधद्विश्वस्य मिषतो वशी, सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्, दिवं च पृथिवीञ्चान्तरिक्षमथो स्वः।' (ऋग्वेदस्य दशमण्डले कृष्णयजुर्वेदे च)

गद्यस्यास्य शैली भाषणप्रयोज्यशैलीसमाना। कठिनाः शब्दा भूयसाऽप्रयुक्ताश्च। तदनन्तरं ब्राह्मणग्रन्थेषु बाहुल्येन गद्यं प्रायुज्यत, यत्र संहिताग्रन्थापेक्षया सरलता समाविश्यत।

'यदेतन्मण्डलं नयति तन्महदुक्थं ता ऋचः स ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूंषि संयजुषां लोकः' - (मण्डलब्राह्मणे)

अथानन्तरमुपनिषदि गद्यस्य कथोपकथनरूपेण प्रयोगेषु क्रियमाणेषु स्फुटार्थता स्वीयभावप्रकाशनप्रवणता चाधिकभावेन समागता, यथा –

'श्वेतकेतुर्ह्यारुणेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यम्, न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति स ह द्वादशवर्षम् उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्वब्ध एयाय। तं ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमदेशमप्राक्ष्यः।'इति। (छान्दोग्योपनिषदि ६।१-२)

एषां वैदिकगद्योद्धरणानां पर्यालोचनेन सुखमवगन्तुं शक्यते यद् गद्यस्य स्वरूपं क्रमशः स्पष्टम् अजायत। संहिताया भाषांऽशतो व्याकरणलक्षणच्युता, तदपेक्षया ब्राह्मणानां भाषा लक्षणशालिनी स्पष्टा च, उपनिषदां भाषा तु व्याकरणसम्मता स्फुटतमा चेति क्रमिकविकासे पर्याप्तं निदर्शनम्। एवं वैदिकगद्यैः प्रशस्तीकृते वर्त्मनि लौकिकगद्यस्याविर्भावो जातः। लौकिकगद्यस्य प्रथमः प्रयोगः निरुक्ते कृतः यथा –



"सर्वरसाः अनुप्राप्ताः पानीयमिति यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवति, यथा जानपदीषु विद्यातः पुरुषविशेषो भवति, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति।' इति। - (नैघण्टुककाण्डे)

एतत्कालपर्यन्तं गद्यं काव्यभाषारूपेण प्रयुक्तं नासीत्, केवलं व्यवहारभाषारूपेण प्रयुज्यते स्म। अत एव तत्र चमत्कारातिशयमाधातुं कोऽपि प्रयासः क्रियमाणो नोपलक्ष्यते। अयमेव क्रमः शास्त्रीयगद्ये अपि उपलभ्यते। शास्त्रीयगद्येषु साहित्यिकचमत्कारान् आधातुं न कोऽपि प्रयासः कृतः। एतादृशगद्यस्य निदर्शनानि कतिचित् कालक्रमेण प्रस्तूयन्ते।

'ये पुनः कार्याभावानिर्वृत्तौ तावत्तेषां यत्नः क्रियते। तद्यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं मत्वाऽऽह---कुरु शब्दान् प्रयोक्ष्ये।' इति। (महाभाष्यस्य पश्पशाह्निके)

अनेन गद्येन पठ्यमानेन तात्कालिकी गद्यस्य विकसितपूर्णरूपता प्रतीयते। इतः परं गद्यस्य प्रौढिस्तार्किकैरुपपादिता। यथा शबरस्वामिनो भाष्ये –

'इच्छयाऽऽत्मानमुपलभामहे, कथमिति? उपलब्धपूर्वे ह्यभिप्रेते भवतीच्छा। यथामेरुमुत्तरेण यान्यस्मज्जातीयैः अनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि, न तानि प्रत्यस्माकमिच्छा भवति।'

एतावत्पर्यन्तं गद्यस्य यो विकासक्रमः प्रदर्शितः स शास्त्रीयगद्यविषयो लौकिकगद्यविषयो वा मन्तुं शक्यते। साहित्यिकगद्यं तु सर्वप्रथमं शिलालेखेषु प्राप्यते। रुद्रदाम्नः शिलालेखे या गद्यस्य शैली दृश्यते सा नितान्तप्रौढा ओजोगुणगुम्फिता च।

गद्यं साहित्ये प्रयुज्यमानं सदेव गद्यकाव्यनामकं काव्यस्य भेदमकल्पयत्। साहित्यप्रयोगश्च गद्यस्य शिलालेखेष्वेवेदं प्रथमतया कृतः प्रतीयते। सुबन्धोर्भट्टबाणस्य च गद्यमपेक्ष्य बहुकालात् पूर्वमेव रुद्रदाम्नः शिलालेखोऽखिन्नगद्यशैलीनिदर्शनीभूतोऽलिख्यत्।

हरिषेणस्य प्रयाणप्रशस्तौ विजयस्तम्भवर्णने –

'सर्वपृथिवीजयजनितोदयव्याप्तनिखिलावनितलां कीर्त्तिमितस्त्रिदशपतिभवनगमनावाप्तललितसुखविचरणामाचक्षाण इव भुवोर्बाहुरयमुच्छ्रितः स्तम्भः।' इति।

इत्थं वैदिकसाहित्यत आरभ्य प्रयागप्रशस्तिलेखकालपर्यन्तं गद्यसाहित्यं विकसद्रूपतया वर्त्तमानं प्रतीयते।

### संस्कृतगद्यस्य वैशिष्ट्यम्

यत्र भाषान्तरगद्यानि सरलभावेनार्थप्रत्ययसमर्थानि विस्तृतरूपाणि च भवन्ति तत्र संस्कृतगद्यं चमत्कारकारिवस्तुव्यञ्जनविधया लघुकायानि भवन्ति संस्कृतगद्यस्य लघुत्वोपबृंहितं समासकृतार्थाधिक्यपूर्णत्वं च भाषान्तरगद्यैर्दुर्लभम्। 'ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्' इति दण्डिप्रतिपादितदिशासजीवगद्यं संस्कृतभाषानिबद्धमेव सम्भवति। तच्चेदं समासभूयस्त्वं मात्रातारतम्येन संस्कृतभाषायां प्रारम्भकालत एव दृश्यत इतीदमीयं गद्यं प्रारम्भकालत एव सजीवम्।



यावत्पर्यन्तं पद्यैः चमत्कारः श्रव्यसङ्गीतध्वनिमधुरिम्णा प्रकटीक्रियते तावद् गद्यं स्वप्रौढिद्वारा प्रकटयतीति तदुभयपरिशीलनेन प्रतीयते। इदमेव च गद्यमाधुर्येण अंशिकचमत्कारसद्भावेन च चमत्कारम् उत्पाद्य कृतित्वम् आकलयन्ति, गद्यानि तु सत्येव सर्वांशचमत्कारे बन्धगाढत्वे च चमत्कारं जनयेयुः इति कवयो गद्ये साफल्यं कष्टसाध्यं सम्भाव्य भूयसा पद्यरचनायामेव प्रवृत्ताः। अत एव गद्यं कवीनां निकषं वदन्ति इति वचनं प्रमाणीभवति।

सम्प्रति कतिचन प्रमुखगद्यकाव्यानि स्वरूपतो रचयितृपरिचयप्रदानद्वारा च परिचाययितुमिष्यन्ते। तत्रेदं प्रथममवगन्तव्यं यत् साहित्यिकसंस्कृतगद्यं शिलालेखेष्वेव प्रथमप्रकाशमध्यगच्छत्। हरिषेणस्य शिलालेखे प्रयागप्रशस्तौ च गद्यस्य यद्रूपं प्राप्यते तदेवाग्रेतनैः कविभिः परिमार्जितं सत् साहित्यिकगद्यस्य गौरवं वर्धयितुं प्राक्रमत। साहित्यिकगद्यस्याद्यो ग्रन्थः सुबन्धोः वासवदत्ता एव उपलभ्यते।

## ११.८) पद्यकाव्यम्

यस्मिन् काव्ये केवलं पद्यानि एव विराजन्ते तत् पद्यकाव्यम् इत्युच्यते। अत्र श्लोकैः एव विषयस्य वर्णना क्रियते कविना। तद्यथा पञ्च महाकाव्यानि। तानि यथाक्रमं रघुवंशम्, कुमारसम्भवम्, किरातार्जुनीयम्, शिशुपालवधम्, नैषधीयचरितम्। इतरानि उदाहरणानि दीयन्ते अधः।

**जयद्रथस्य 'हरचरितचिन्तामणिः'**

काश्मीरजातेन जयद्रथेन हरचरितचिन्तामणिर्नाम महाकाव्यं कृतं यत्रानुष्टुभैव सर्वे सर्गा अरच्यन्त। अयं जयद्रथः अलङ्कारविमर्शिनः कर्त्तुः प्रसिद्धालङ्कारशास्त्रिणो जयरथस्य भ्राताऽऽसीत्। उभावपि भ्रातरौ १२०३-१२२६ ख्रीष्टाब्दभवस्य राजदेवनाम्नो भूपस्याधिने आस्तामिति प्रसिद्धम्। अत एव चास्य समयस्त्रयोदशशतकस्य आरम्भ इति दृढम्।

हरचरितचिन्तामणेः भाषा सरला, पुराणपाठ इवात्र पाठ्यमाने रसास्वादो जायते।

**लोलिम्बराजस्य 'हरिविलासकाव्यम्'**

अयं लोलिम्बराजः आयुर्वेदक्षेत्रे प्रसिद्धस्य वैद्यजीवनस्य कर्तृतया प्रसिद्धः। अस्य हरिविलासकाव्यं लघुकाव्यं सदपि गुणैर्महनीयम्। अस्य समयः स्त्रीष्टीयैकादशशतकं मन्यते यतीयं भोजराजसमकालिकस्य कस्यचित् हरिहरनामकस्य दक्षिणभारतसम्राजः समकालीन आसीत्। अयमतीव सरसः कविः आसीद् अतोऽस्य काव्यं कृष्णस्य बाललीलायाः सरसं शृङ्गारिकं च वर्णनम् उपस्थापयितुम् अलम्।

## ११.९) चम्पूकाव्यम्

यस्मिन् काव्ये गद्यानि सन्ति पद्यानि अपि सन्ति तद् गद्यपद्योभयात्मकं काव्यम्। तदेव चम्पूः इति पदेन उच्यते। गद्यकाव्यगतम् अर्थगौरवं पद्यकाव्यगतम् अर्थगौरवं पुरस्कृतं रागमयत्वं चेत्युभयं मिलितं सदधिकं चमत्कारं जनयति चम्पूकाव्यम्।

**चम्पूलक्षणम्**



सर्वप्रथममाचार्यो दण्डी 'गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते ' इति चम्पूलक्षणमुक्तवान् । तदनन्तरभाविनः अपि आचार्याः तदेव अन्ववदन्। 'गद्यपद्यमयं काव्यं चम्पूः ' इति तल्लक्षणे वाणीस्थाने काव्यपदनिवेशेऽपि न कापि नवीनता

'क्वचिदत्र भवेदार्या क्वचिद् वक्त्रापवक्त्रके ।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ॥'

इति लक्षणानुरोधेन कथाऽऽख्यायिकयोरपि गद्यपद्यमिश्रितत्वेन चम्पूलक्षणप्रसक्तिस्तु न शङ्कनीया, तयोर्गद्यस्यैव प्राधान्यात् ,लक्षणानुरोधेनैव कतिपयपद्यानां तयोः प्रवेशाच्च।

चम्पूकाव्येषु तु गद्यपद्ययोः मात्रा प्रायेण समा भवति किमप्येकम् अङ्गम् अतिपृथुलं न जायेत इत्यस्मिन्नंशे कवयः सतर्काः तिष्ठन्ति।

**चम्पूकाव्यविकासः**

चम्पूकाव्यं गद्यकाव्यस्यैव परिमार्जितं रूपमिति कथनेन सत्यम् उपलभ्यते। यद्यपि यजुर्वेदे गद्यपद्ययोः मिश्रणम् उपलभ्यते। तथापि नासौ चम्पूप्रकारः। पालीगद्यपद्यनिबद्धेषु जातकग्रन्थेष्वपि न चम्पूस्वरूपं दृश्यते। अतः आर्यसूरिकृता जातकमाला एव चम्पूकाव्यस्य आदिमं स्रोत इति वक्तुं शक्यते। हरिषेणस्य प्रयागप्रशस्तौ गद्यपद्यमिश्रणमस्य प्राथमिकप्रयोगरूपं मन्तुं शक्यते। यद्यपि जातकमाला हरिषेणस्य प्रयागप्रशस्तिश्च गद्यपद्यमिश्रं प्राग्रूपभूतं शरीरं धारयतः तथापि चम्पूकाव्येन वास्तविकं रूपं दशमशताब्द्यामेव प्रकटितं यदा नलचम्पूः जनिम् अलभत।



## पाठगतप्रश्नाः-३

१९. किं नाम गद्यकाव्यम्?

२०. पद्यकाव्यं नाम किम्?

२१. पद्यकाव्यस्य एकम् उदाहरणं दीयताम्।

२२. चम्पूकाव्यस्य लक्षणं किम्?

२३. लोलिम्बराजस्य हरिविलासकाव्यं गद्यकाव्यं पद्यकाव्यं वा?



## पाठसारः

अस्मिन् पाठे संस्कृतसाहित्यस्य किञ्चित्स्वरूपं प्रदर्श्य काव्यस्य प्रकाराः वर्णिताः। बहुविधाः काव्यस्य प्रकाराः प्रदर्शिताः। स्वरूपानुसारं काव्यस्य भेदद्वयं प्रदर्शितम्। तद्यथा दृश्यकाव्यं श्रव्यकाव्यं च। श्रव्यकाव्यस्यापि पुनः महाकाव्यानि खण्डकाव्यानि श्लेषकाव्यानि यमककाव्यानि इत्यादिभेदाः



उदाहरणपुरःसरं प्रदर्शिताः। दृश्यकाव्यस्य रूपकम् उपरूपकम् इति भेदद्वयं विस्तरेण वर्णितम्। रूपकस्य दश भेदाः उपरूपकस्य च अष्टादश भेदाः अत्र आलोचिताः।

ततः शैल्यनुसारं काव्यस्य गद्यम्, पद्यम्, चम्पूः इति भेदत्रयं प्रदर्शितम्। गद्यकाव्यविषये पद्यकाव्यविषये चम्पूकाव्यविषये च तेषां लक्षणानि उदाहरणानि च आलोचितानि। गद्यात्मकं काव्यं गद्यकाव्यम् उच्यते। पद्यात्मकं काव्यं पद्यकाव्यम् उच्यते। गद्यपद्योभयात्मकं काव्यं चम्पूः इत्युच्यते।



## पाठान्तप्रश्नाः

१. दृश्यकाव्यस्य प्राचीनताम् आलोचयत।

२. चम्पूकाव्यं सलक्षणं सोदाहरणम् आलोचयत।

३. रूपकस्य दशभेदान् वर्णयत।

४. उपरूपकस्य भेदानां नामानि उदाहरणानि च लिखत।

५. शास्त्रकाव्यविषये लघुप्रबन्धं लिखत।

६. देवकाव्यविषये लघुटिप्पणीं लिखत।

७. महाकाव्यखण्डकाव्ये आधारीकृत्य लघुनिबन्धं लिखत।

८. यमककाव्यस्य स्वरूपम् उदाहरणं च विवृणुत।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. वाक्पतिराजस्य गउडवहो।

२. पौराणिकं काव्यम्।

३. अष्टौ।

४. शास्त्रकाव्यम्।

५. भट्टभीमेन।

६. नीतिवर्मणः कीचकवधम्।

७. श्लेषकाव्यम्।

८. सप्तदशशतकम्।

### उत्तराणि-२

९. रूप्यते कल्प्यते चतुर्विध-अभिनयेन प्रत्यक्षीगोचरीक्रियते येन तद्रूपकम्।

१०. ऋग्वेदे।



११. भवभूतिना कृतम्।

१२. मृच्छकटिकम्।

१३. वररुचेः उभयाभिसारिका।

१४. विक्रमोर्वशीयम्।

१५. भणिकायाम् अन्तर्भवति।

१६. दश भेदाः।

१७. अष्टादश भेदाः।

१८. उपरूपकस्य।

**उत्तराणि-३**

१९. गद्यात्मकं काव्यं गद्यकाव्यम्।

२०. यस्मिन् काव्ये केवलं पद्यानि एव विराजन्ते तत् पद्यकाव्यम् इत्युच्यते।

२१. कुमारसम्भवम्।

२२. 'गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते ' इति चम्पूलक्षणम्।

२३. पद्यकाव्यम्।

॥ इति एकादशः पाठः ॥

